मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ॥ २२
एवं संदिश्य तनयं प्रतीपः शंतनुं तदा ।
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह ॥ २३
स राजा शंतनुर्धीमान्ख्यातः पृथ्व्यां धनुर्धरः ।
बभूव मृगयाशीलः सततं वनगोचरः ॥ २४
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः ।
गङ्गामनुचचारैकः सिद्धचारणसेविताम् ॥ २५
स कदाचिन्महाराज ददर्श परमस्त्रियम् ।
जाज्वल्यमानां वपुषा साक्षात्पद्मामिव श्रियम् ॥२६
सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम् ।
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ॥ २७
तां दृष्ट्वा हृष्टरोमाभूद्विस्मितो रूपसंपदा ।
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ॥ २८
सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम् ।
स्नेहादागतसौहार्दा नातृप्यत विलासिनी ॥ २९
तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा ।

---

$M_7$ °पेत्वं; $G_2$ °पिच्ये; $G_6$ $M_8$ °पेत्तुं). $K_{3.4}$ $V_1$ B Da $D_{3.4}$ कदाचन (for त्वया°). — $^c$) S (except $M_8$) मजंतीं. B (except $B_6$) $D_{2.4}$ भजमानां नियोगान्मे.

23 Before $23^{ab}$, $Ś_1$ $K_{1.2}$ $D_{2.3}$ ins. वैशं°; $K_{0.3.4}$ $Ñ_{1.2}$ $V_1$ B (except $B_6$) Da Dn $D_{1.4}$ वैशं° उ°. — $^b$) $Ś_1$ $K_{1.2}$ प्रतिपः. — $^c$) $K_{0.3.4}$ $Da_2$ स्वराज्ये चाभि°. — $^d$) S जगाम (for विवे°). $M_{6-8}$ सः (for ह).

24 $^a$) G (except $G_{3.6}$) श्रीमान्. — $^b$) Ko $Da_1$ विख्यातोर्व्यां धनु°; $V_1$ B (except $B_6$) $Da_2$ Dn $D_{1.2.4}$ देवराजसमद्युतिः; S पार्थि($G_1$ पांड)वानां धुरंधरः ($M_8$ °प्रभुः sic). — After $24^{ab}$, $D_4$ (suppl. fol. *sec. m.*) S ins. a passage of 27 lines given in App. I (No. 53). — $^c$) S चचार (for बभू°). — $^d$) S शंतनुः (for सत°). — After 24, $Da_1$ ins.:

926* स वनेषु चारण्येषु शैलप्रस्रवणेषु च ।

25 $^a$) S (except $M_{2.6}$) transp. स and मृगान्. — $^b$) $M_6$ नृपसत्तमः. $G_3$ निघ्नन्राजर्षिसत्तमः. — After $25^{ab}$, S ins.:

927* नदीमन्वचरद्राजा शंतनुः परया मुदा ।
[ $G_1$ °न्वतर°; $G_{2.3}$ °नुचर°. ]

— $^c$) S गंगां त्रिपथगां पुण्यां ($G_3$ दिव्यां).

26 $^a$) A few MSS. °राजा and °राजो. — $^b$) Ñ $V_1$ B (except $B_6$) D (except $D_4$) $G_1$ M (except $M_8$) परमां ($B_{1.3}$ $D_5$ °सं) स्त्रि°. — After $26^{ab}$, $D_4$ S ins.:

928* सा च शंतनुमभ्यागादलक्ष्मीमपकर्षती ।

— $^c$) $K_1$ प्रज्व°. — $^d$) $M_7$ श्रियं (for पद्मां). $Ñ_2$ $V_1$ B $Da_2$ Dn $D_{1.2.4}$ साक्षाच्छ्रिय($B_6$ °त्वष्टा)मिवापरां; $Da_1$ सा कन्या संमिव(sic) स्त्रियं.

27 $^a$) Ko मुदितां; S युवतीं. — $^b$) $K_{0.3}$ $Ñ_1$ S सर्वाभ°; $V_1$ दिव्यालंकारभू°. — $^c$) S साक्षात् (for एकां). — $^d$) $Ś_1$ K $Ñ_{1.2}$ $Da_1$ $M_{1.2}$ पद्मांतर°; $T_2$ G (except $G_3$) पद्मोत्क($G_1$ °पाक)र°. — After 27, $D_4$ (marg. *sec. m.*) S ins.:

929* स्नातमात्रामधौवस्त्रां गङ्गातीररहे वने ।
प्रकीर्णकेशीं पाणिभ्यां संस्पृशन्तीं शिरोरुहान् ।
[ (L. 1) $D_4$ $G_3$ M स्नातगात्राम्. $D_4$ M धौतवस्त्रां; $T_1$ गतोवस्त्रां. ]

— G (except $G_{2.3}$) cont.:

930* रूपेण वयसा कान्त्या शरीरावयवैस्तथा ।
हावभावविलासैश्च लोचनाञ्चलविक्रियैः ।
श्रोणीभरेण मध्येन स्तनाभ्यामुरसा दृशा ।
कबरीभरेण पादाभ्यामिङ्गितेन स्मितेन च ।
कोकिलालापसंलापैर्न्यक्कुर्वन्तीं त्रिलोकगाम् । [5]
वाणीं च गिरिजां लक्ष्मीं योषितोऽन्याः सुराङ्गनाः ॥

while $M_{7.8}$ cont.:

931* स्नेहात्कटाक्षेण राजानं वीक्षमाणां विलासिनीम् ।
(cf. 933* below).

28 $^b$) S दर्शनादेव शंतनुः. — After $28^{ab}$, $G_1$ ins.:

932* रूपेणाति च सा राजन्सर्वराजन्ययोषितः ।
अधश्चकार रूपेण सर्वराजन्ययोषितः ।
तामुवाच ततो राजा कामिनीं तु मनोरमाम् ।

(cf. 934* below). — $^d$) $G_1$ नातृप्यद्दर्शनेन च. — S (except $G_{1.2}$) repeat $28^{cd}$ after $30^{ab}$.

29 $G_1$ om. 29; $G_2$ om. $29^a$–$30^b$. — $^d$) $Ś_1$ वरांगना (for विला°). — After 29, $D_4$ (marg. *sec. m.*) T $G_{3-6}$ M ins.:

933* गङ्गा कटाक्षेण राजानं प्रेक्षमाणा विलासिनी ।
[ Cf. 931* above. — $D_4$ $G_{4.6}$ गंगाकामत; $T_1$ गंगा कटाक्षैः; $T_2$ गंगाकांक्षत; $G_3$ गंगा वीक्ष्याथ; $G_5$ कटाक्षेण तु. $D_4$ वीक्ष°. ]

— T ($T_1$ om. line 2) $G_{3-6}$ cont.:

934* चचार्यंताग्रतस्तस्य किंनरीवाप्सरोपमा ।
दृष्ट्वा प्रहृष्टरूपोऽभूद्दर्शनादेव शंतनुः ।
रूपेणातीत्य तिष्ठन्तीं सर्वा राजन्ययोषितः ।

देवी वा दानवी वा त्वं गन्धर्वी यदि वाप्सराः ॥ ३०
यक्षी वा पन्नगी वापि मानुषी वा सुमध्यमे ।
या वा त्वं सुरगर्भाभे भार्या मे भव शोभने ॥ ३१
एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च ।
वसूनां समयं स्मृत्वा अभ्यगच्छदनिन्दिता ॥ ३२
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा ।
भविष्यामि महीपाल महिषी ते वशानुगा ॥ ३३
यत्तु कुर्यामहं राजञ्शुभं वा यदि वाशुभम् ।
न तद्वारयितव्यास्मि न वक्तव्या तथाप्रियम् ॥ ३४
एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥ ३५
तथेति राज्ञा सा तूक्ता तदा भरतसत्तम ।
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ॥ ३६
आसाद्य शंतनुस्तां च बुभुजे कामतो वशी । C. 1. 3901 B. 1. 98. 5 K. 1. 104. 11

[ (L. 1) G3 संचार्य वा°. — (L. 2) G3 तां दृष्ट्वा हृष्टरोमाभू°. — (L. 3) G3 रूपेणापि हि वा राजन्स्तयोस्ता राजयो°. ]

30 G3 om. $30^{ab}$ (cf. v. l. 20). — b) Ś1 transp. श्लक्ष्ण° and सान्त्वयन्. S (G3 om.) कामिनीं [illegible] मनोरमां. — After $30^{ab}$, S (except G1.3) repeat $28^{cd}$. — B6 om. $30^{cd}$. — Before $30^{cd}$, Da1 S (except T1 G3.5.6) ins. शंतनुः. — c) Ñ1.3 V1 Da S देवता (for देवी वा). S किंनरी (for दान°). — d) Ñ2 गांधर्वी; Ñ3 गंधर्वा. B1 चाथ (for यदि). K3 वा वराप्सरा; S वा सुमध्यमे (G3 सुरोत्तमे). A few MSS. °प्सरा.

31 Da1 om. 31; K3 om. $31^{ab}$. — a) S मानुषी for पन्न°). — b) S जानीयां कां (G3 त्वां) शुचिस्मिते. — c) K0 Ñ3 V1 B D (except Da2; Da1 om.) याचे त्वां सुर°; S यासि कासि सुरप्रख्ये (G6 सुमध्ये त्वं). — d) Ś1 K3 भार्या भव सुमध्यमे; S महिषी मे भवानघे. — After 31, S ins.:

935* त्वद्गता हि मम प्राणा यत्तु यन्मेऽस्ति किंचन ।
[ T2 G2.4 5 त्वां (for त्वद्-). ]

After 31, Dn ins. an additional colophon (Adhy. 10.: Dn3 96).

32 Before 32, Ś1 K2.4 B Da Dn D1.4 ins. वैशं° इ°; K0.1.3 D2.5 S वैशं°. — a) S श्रुत्वा [illegible] राज्ञः सा बाला. — b) D3 m °स्मितं तमुवाच ह. — After $32^{ab}$, D4 (marg. *sec. m.*) S ins.:

936* यशस्विनी च सागच्छच्छंतनोर्भूतये तदा ।
सा च दृष्ट्वा नृपश्रेष्ठं चरन्ती तीरमाश्रितम् ।
[ (L. 1) D4 वचस्तस्य पुरोग°. — (L. 2) G6 चरंतं. ]

— c) K0 वचनं (for सम°). Ś1 K1 Ñ1 Da1 कृत्वा; B3 यत्तत्. S स्मृत्वा वसूनां समयं. — d) Ś1 K0–2 Ñ2 V1 B1.3.6 Da Dn D3-भाग्य°; K3 साम्या°; Ñ1.3-थाम्यनंद°; B3 समाराद्य सुमध्यमा; D1 ययाभ्यागमनिं°; D5 साम्यनंद°. — After 32, K3 Da1 D4 (marg. *sec. m.*) S ins.:

937* प्रजार्थिनी राजपुत्रं शंतनुं पृथिवीपतिम् ।
प्रतीपवचनं चापि संस्मृत्यैव स्वयं नृपम् ।
कालोऽयमिति मत्वा सा वसूनां शापचोदिता ।
[ (L. 2) K3 Da1 °वचनाच्चैव. — (L. 3) K3 मन्वाना. K3 Da1 °र्नोदिता. ]

K3 Da1 cont.:

938* अब्रवीच्छंतनुं गङ्गा भज मां त्वं नराधिप ।

33 a) K (except K1) Ñ1 B (except B3) Da D4.5 चैनं; D1.2 चैवं. K0.3.4 Ñ1 Da1 राजानं. D5 transp. राज्ञः and सा. S प्रत्युवाच महीपालं. — Before $33^{cd}$, G6 ins. गंगा. — After 33, Da2 ins.:

939* ज्ञातोऽसि मह्यं पित्रा ते भर्ता मे त्वं भव प्रभो ।;

while D4 (marg. *sec. m.*) S ins.:

940* ननु त्वं वा द्वितीयो वा ज्ञातुमिच्छेः कथंचन ।

34 Before 34, D4 (marg. *sec. m.*) ins. गंगोवाच. — a) K0.3.4 Da S यच्च. — c) S नाहं वार°. — d) Ś1 K1.2 Da2 °व्या च (Ś1 -थ; K1 -स्मि) विप्रियं; T2 G3.4.5 °व्या त्वयाप्रि°.

35 a) S वै (for हि). K1.2 B3 Da1 M6–8 °मानाहं. — b) Ś1 K1 T2 G3–5 तव (for त्वयि). — T2 om. $35^{cd}$. — c) K0.3.4 वारिता समयं हित्वा. — d) T1 ह्यस्त्वाहं. S (T2 om.) त्वां नराधिप. — After 35, D4 (marg. *sec. m.*) S ins.:

941* एष मे समयो राजन्भज मां त्वं यथेप्सितम् ।
अनुनीतास्मि ते पित्रा भर्ता मे त्वं भव प्रभो ।

36 Before 36, D4 (marg. *sec. m.*) T G1.2.5 M6–8 ins. वैशं°. — a) D4 transp. सा and तूक्ता. Ś1 K (except K2) Da1 सा चोक्ता; Ñ1.3 D2 साप्युक्ता; B3 सा दृष्टा; T2 G3 साभ्युक्ता; G6 संयुक्ता. — b) S तत्रैव वरवर्णिनी. — d) S श्रुत्वा वाक्यमनिंदिता. — After 36, D4 (marg. *sec. m.*) S ins.:

942* प्रतिज्ञाय [illegible] तत्तस्यास्तथेति मनुजाधिपः ।
रथमारोप्य तां देवीं जगाम स तया सह ।

12 न प्रष्टव्येति मन्वानो न स तां किंचिदूचिवान् ॥ ३७
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ।
उपचारेण च रहस्तुतोष जगतीपतिः ॥ ३८
दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी ।
मानुषं विग्रहं श्रीमत्कृत्वा सा वरवर्णिनी ॥ ३९
भाग्योपनतकामस्य भार्येवोपस्थिताभवत् ।
शंतनो राजसिंहस्य देवराजसमद्युतेः ॥ ४०
संभोगस्नेहचातुर्यैर्हावलास्यैर्मनोहरैः ।
राजानं रमयामास यथा रेमे तथैव सः ॥ ४१
स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः ।
संवत्सरानृतून्मासान्न बुबोध बहून्गतान् ॥ ४२
रममाणस्तया सार्धं यथाकामं जनेश्वरः ।
अष्टावजनयत्पुत्रांस्तस्याममरवर्णिनः ॥ ४३
जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत ।
प्रीणामि त्वाहमित्युक्त्वा गङ्गास्रोतस्यमज्जयत् ॥ ४४
तस्य तन्न प्रियं राज्ञः शंतनोरभवत्तदा ।

सा च शंतनुमभ्यागात्साक्षाल्लक्ष्मीरिवापरा ।

37 After 37ᵃ, K5 ins.:

943* गान्धर्वेण विधानतः ।
विवाहिता च राज्ञेन.

— ᵇ) S कामवान्सुदी (M °दान्). — ᶜ) Ś1 K1 °ति संश्रासाद् (K1 °श्रासो). — ᵈ) Da1 T2 G3.4.5 च (for स). K0.2.4 Ñ3 V1 B (except B1) Da1 Dn3 D2.4 किंचिदुक्त°.

38 ᵇ) S रूपेण परमेण (M7 च वरेण) च (G3 तु). — ᶜ) Ś1 दमाद्या°; K1 शुश्रूषणेन. Da1 रहश्चैवोपचारेण; S सम्यक्चैवोपचारेण. — ᵈ) K0.2.4 Da1 नातृप्यज्ज°; S सुषमाराधितोऽभवत्. — After 38, S ins.:

944* स राजा परमप्रीतः परमस्त्रीप्रलालितः ।

39 ᵇ) K0.2.4 Ñ1.2 V1 B (except B1) D (except D4) त्रिपथगामिनी. — ᶜ) K3 Ñ3 Dn D3 M5 कृत्वा; D5 तस्मिन् (for श्रीमत्). — ᵈ) K3 M5 श्रीमत्ता (M5 °द्वे); Ñ3 Dn D1 श्रीमंतं. Ñ1.2 S वै; B5 च (for सा). B1.2.6 D2.4 बिभ्रती सुमनोहरं.

40 ᵃ) M5–8 भाग्योपस्थित°. — ᵇ) B5 D (except D1.4.5) भार्या चो(Da2 सो)पनता(B5 Da1 °स्थिता)भवत्. — ᶜ) Dn नृपसिं°.

41 ᵃ) D5 संभोगहावभावाद्यैः. — ᵇ) K0.4 B5 T G (except G5) Cd भावला°; K3 हावभावैर्; Da2 हावकाद्यैर्; D2 हावला°; D4 हावहास्यैर्. B1.5 Da1 D2.4 T G मनोरमैः. Ś1 K1 Dn D1.5 हाव(D5 स्नेह)लास्यमनो°; Ñ V1 M5 हा(V1 भा)वलास्य(M5 °भाव)मनोरमैः (Ñ1 °थैः); M6.6–8 हा(M5 भा)वभावसमन्वितैः. — ᶜ) K0.2 transp. राजानं and रम°. K3 Da2 राजानं (Da2 राजा च) रंज°; Da1 रम° भर्तारं. — ᵈ) Ñ1.2 रम्ये (for रेमे). S यथा रम्ये(T2 G3.5 °ज्ये)त स प्रभुः (M3.5 विभुः).

42 ᵃ) S °सक्तोऽभूद्. — ᵇ) V1 हुतं गंगागुणै°. K5 T G1.4–6 वृतः; Ñ1 हितः; D2.4 G2 युतः. — After 42ᵃᵇ, D5 (marg. sec. m.) S ins. an additional colophon. — ᶜ) S अहोरात्राम्°. — ᵈ) D5 transp. न and बुबोध. B1.3 Dn D1 बुबुधे स (for न बु°). B1.2.6 D2.4 T G M transp. बहून् and गतान्. D5 च संगतान् (for बहू°). M5.6–8 बुबुधे न प्रधावतः.

43 ᵃ) S °माणः प्रियां लब्ध्वा. — ᵇ) Ñ3 °कालं. Ñ Dn D1 S नरेश्वरः. — After 43ᵃᵇ, D5 (marg. sec. m.) S ins.:

945* दिविष्ठान्मानुषांश्चैव भोगान्भुङ्क्ते स्म वै नृपः ।
आसाद्य शंतनुः श्रीमान्मुमुदे च परंतपः ।
ऋतुकाले च सा देवी दिव्यं गर्भमधारयत् ।
[ (L. 2) D5 M3.5 °न्मुमुदे योषितां वरां. ]

— ᶜ) G3 अष्टौ च जनयत्पु°. — ᵈ) K (except K1) ... Dn D1 °मरसंनिभान्; B5 तस्यां स नृपसत्तमः; D5 तस्य मरवर्णिभी; T2 G तस्य चाम° (G3 तस्य चामरवर्चसः); तस्य सा वरवर्णिनी. Nīlp अमरवर्णिनः (as in text).

44 ᵃ) S (except G1.3) तु (for च). S trans. सा and पुत्रं. Ś1 N3 क्षिप्रं (for पुत्रं). — ᵇ) S स्वास्... (G3 स्वाप्सु प्र; M5–8 सा स्वप्सु) क्षिपति स्म ह (G3 ... — After 44ᵃᵇ, D5 (marg. sec. m.) S ins.:

946* सूतके कण्ठमाक्रम्य तानिनाय यमक्षयम् ।
[ G4.5 स्वोदके. T2 G1 सूर्णमा°; G3 कर्णमा°. G1.4 M...

— ᶜ) Ñ V1 Dn D1 प्रीणाम्यहं त्वामि°; D2 °णामीत्यहमि°; T1 G1.3 °मि त्वां न हीत्यु°; T2 G2.5 हनामि त्वां न हीत्यु°; G2.6 वृणोमि (G6 °तु) त्वां नदीत्यु°; M5 वृणोमि त्वां... — ᵈ) T1 अपां स्रोतस्यपातयत्; T2 G M सर्वान्स्रोतस्यचास्र... (G3 °क्षिपत्).

45 ᵃ) S तस्य तत्त्वप्रि°. — ᶜ) Ś1 K0.2.4 D5 न (for च). T G उवाच किंचित्तु (T1 च) तां; M नोवाच वच... किंचित्. — ᵈ) S पितुर्वचनयंत्रितः. — After 45, D5 (marg. sec. m.) S (M5 om. lines 1–4) ins.:

947* अमीमांस्या कर्मयोनिरागमश्चेति शंतनुः ।
स्मरन्पितृवचश्चैव नापृच्छत्पुत्रकिल्बिषम् ।

च तां किंचनोवाच त्यागाद्भीतो महीपतिः ॥ ४५
[अ]थ तामष्टमे पुत्रे जाते प्रहसितामिव ।
[उ]वाच राजा दुःखार्तः परीप्सन्पुत्रमात्मनः ॥ ४६
मा वधीः कासि कस्यासि किं हिंससि सुतानिति ।
पुत्रघ्नि सुमहत्पापं मा प्रापस्तिष्ठ गर्हिते ॥ ४७
स्त्र्युवाच ।
पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥ ४८
अहं गङ्गा जह्नुसुता महर्षिगणसेविता ।
देवकार्यार्थसिद्ध्यर्थमुषिताहं त्वया सह ॥ ४९
अष्टेमे वसवो देवा महाभागा महौजसः ।
वसिष्ठशापदोषेण मानुषत्वमुपागताः ॥ ५०
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री न चैवास्तीह काचन ॥ ५१
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाक्षयाः ॥ ५२
देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ॥ ५३
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः ।
स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ॥ ५४ C. 1. 3918 B. 1. 98. 23 K. 1. 105. 18

---

जातं जातं च वै हन्ति सा स्त्री सप्त वरान्सुतान् ।
शंतनुर्धर्मभङ्गाच्च नापृच्छत्तां कथंचन ।
अष्टमं तु जिघांसन्त्या चुक्षुभे शंतनोर्धृतिः ।
[ (L. 3) D4 G2.3.6 जाताञ्जातांश्च. G6 सा हंति तत्क्षणे सप्त वै सुतान्. — (L. 5) T2 जिघांसत्यां; G6 °सिन्यां. ]

46 S om. 46ab. — ab) Ñ V1 D (except D2.4.5) अथैनाम°. Ñ3 B D2.4 transp. पुत्रे and जाते. Ñ V1 B D (except D5) प्रहसती°. — d) Ś1 K1 परीप्सुः. — After 46cd, S ins.:

948* आरभन्तीं तदा दृष्ट्वा तां स कौरवनन्दनः ।
अब्रवीद्भरतश्रेष्ठो वाक्यं परमदुःखितः ।
[ (L. 1) T2 G1.2 आहरंतीं. ]

47 Before 47, M (except M5) ins. शंतनुः. — a) Ñ V1 D (except D2.4.5) कस्य (for कासि). K3 D5 [क]स्येति; Ñ V1 Da Dn D1 कासीति; T1 कल्याणि. — b) Ñ V1 Dn D1.5 हिनस्सि; B1.3.6 Da D2.4 T G1.2.4.5 च (G1 त्वं; G6 तु) हंसि; G6 M5 च हिंसीः. Ñ3 °तान्मम. — d) Ś1 मा पापे तिष्ठ; K1 मपस्ति°; K3 मा धाप°; K4 मा प्रातिष्ठ; Ñ3 संप्राप्तं ति°. D5 मा प्राप्तं ते°. Ñ1.3 V1 B Da Dn D1.2.4 संप्राप्तं ते सुगर्हितं (B3.5.6 D2 °ते); S मा (T1 G1 स) कार्षीः कर्म निन्दितं (M3 गर्हितं).

48 K1 स्त्री; Ñ2 गंगोवाच; S गंगा. — ab) S (except M3) transp. हन्मि and पुत्रं. S धर्मभृतां. — c) K1 संवासो (for वासो°).

49 b) S °पिंगण(G3 °पंजन)पावनी. — d) Ś1 K Ñ3 D5 दे (for अहं).

50 a) Ś1 K D5 अष्टौ मे; Ñ V1 Da Dn D1 इमेऽष्टौ (Ñ3 अष्ट मे); B D2.4 अष्टौ ये; S अष्टौ हि (for अष्टेमे). Ñ1.3 जाता (for देवा). — c) S आपवस्या(G1 आपसिष्टस्या; G3 वसिष्टस्या)भिशापेन. — d) Ś1 °त्वमिहाग°; S मानुषे(M6 °नवे)पूपपादिताः.

51 a) S (except G3) धान्यः. — b) Ś1 K1 D5 त्वादृशो; K0.2-4 त्वामृते. S तु न (for भुवि). — c) T G जनित्री मद्विधा धात्री (G3 जनयित्री मद्विधा स्त्री); M जनितुर् (M3 लोके च) मद्विधा धा°. — d) Ñ1 न च वास्ती°; B3.6 Dn D1.4 लोके नास्ति च (Dn D1 °स्तीह). Ñ3 V1 B1.5 Da D2 लोके नास्ति (Da न चैवास्ति) कदाचन; S नैवास्ति (G2.4.5 न वा स्त्री) पुरुषाधिप (M3.5 मनुजर्षभं; M6-8 मनुजा°).

52 a) V1 B D2.4 तेषां च जन°; T G M3 तस्माद्वि (G2.4-6 °द्वि-) जनने युक्ता (T1 M5 °क्तं); M3.6-8 °जनने युक्तं. — b) Ś1 °त्वमिहा°; Ñ3 °त्वमहं ग°. S त्वत्संयोगमरोचयं. — After 52ab, K0 ins.:

949* वसवस्ते सुता जाता राजँल्लोकस्य कीर्तये ।

— d) S लोकाश्च पुष्कलाः.

53 a) T2 G3-5 नियमस्त्वे°. — b) K3.4 B1 (m as in text).5 Da1 D5 G1.2 संश्रितो; Ñ1 °भृतो; V1 °स्मृतो; D1 °स्तुतो; G3 M (except M3) स श्रुतो. — c) D5 मोक्षयेयं. B5 जातं तं मोक्षयिष्येति. — d) Ñ1.3 जन्मनो. S नियोगान्मानुषे(M6-8 °न्मनुजे)ष्विति.

54 T2 om. 54ab. — ab) K1 D5 ते तु शा°. K4 वसिष्ठस्य; Cd आपवस्य (as in text). S (T2 om.) शापाः शा(M6-8 पा)पाद्विमुक्तास्ते त्वत्कृतेयं न मुच्यते. — After 54cd, D1 (marg. sec. m.) S ins.:

950* अयं तव सुतस्तेषां वीर्येण कुलनन्दनः ।
संभूतोऽति जनानन्यान्भविष्यति न संशयः ।
[ (L. 1) D1 G3.5.6 M6-8 कुरु°. — (L. 2) D1

एष पर्यायवासो मे वसूनां संनिधौ कृतः । मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम् ॥ ५५

इति श्रीमहाभारते आदिपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## ९३

शंतनुरुवाच ।
आपवो नाम को न्वेष वसूनां किं च दुष्कृतम् ।
यस्याभिशापात्ते सर्वे मानुषीं तनुमागताः ॥ १
अनेन च कुमारेण गङ्गादत्तेन किं कृतम् ।
यस्य चैव कृतेनायं मानुषेषु निवत्स्यति ॥ २
ईशानाः सर्वलोकस्य वसवस्ते च वै कथम् ।
मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ॥ ३

वैशंपायन उवाच ।
सैवमुक्ता ततो गङ्गा राजानमिदमब्रवीत् ।
भर्तारं जाह्नवी देवी शंतनुं पुरुषर्षभम् ॥ ४
यं लेभे वरुणः पुत्रं पुरा भरतसत्तम ।
वसिष्ठो नाम स मुनिः ख्यात आपव इत्युत ॥ ५
तस्याश्रमपदं पुण्यं मृगपक्षिगणान्वितम् ।
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकुसुमावृतम् ॥ ६

---

°भिजन न्यायम्, T2 °तो दितिजान°, G2 °तिजन कर्म D5 G2 करिष्यति, T1 वधि° ]

55 $^{a}$) Ñ3 D5 एव S °वासस्थो — $^{b}$) S देवस्य(M6-8 त) सदवोत्तम — $^{c}$) Ś1 Ñ3 सत्प्र°, K1 त्वत्प्र°, Ñ1 त प्र° S मत्प्रसादाच्च जा° — After 55, D4 (marg sec m) S ins

951* तस्माद्देवव्रतश्चैव गङ्गादत्तश्च वीर्यवान् ।
द्विनामा शतनो पुत्र शंतनोरधिको गुणे ।
तेषां लोकानवाप्नोति वसूनां वसुधाधिप ।

[For line 1 of v l 1 93 44$^{ab}$ — (L 2)=1 93 44$^{cd}$ ]

Colophon — *Major parvan* T2 G M संभव° (for आदि°) — *Sub parvan* K3 4 Ñ1 3 V1 B3 T1 संभव — *Adhy name* K0 3 4 Ñ1 3 V1 B1 3 5 Da Dn D1 3 4 भीष्मोत्पत्ति, T2 G1 3, 4 6 M3 देवव्रतोत्पत्ति — *Adhy no* (figures words or both) K0 94, K1 103, B2 D4 96, Da1 95, Dn3 97, T1 9?(!), T2 G M 43 (G3 42) — *Śloka no* Dn1 n3 24 M3 20 — *Aggregate śloka no* Dn1 3913

## 93

1 Ś1 K1 D1 S om उवाच — $^{a}$) Ñ3 आर्यवो; G3 वसिष्ठो Ś1 कश्चैष, B3 T G1 4 5 कोऽयं°, G1, 2 6 M को ह्ये° — $^{b}$) Ś1 K1 वसूनां दुष्कृतं च किं; S किमपेक्षस्य दूषित — After 1$^{ab}$, S ins

952* शशाप यस्मात्कल्याणि स वसूंश्चारुदर्शने ।
[ M चारुलोचने ]

— $^{d}$) Ñ V1 Dn D1 S योनिमाग° (T1 °माश्रि°), B5 D4 तनुमाश्रि° Ś1 K Da D5 मानुषं वसुपागता

2 $^{a}$) Ś1 K1 3 Da D5 तु (for च) S विशेषेण (for कुमा°) — $^{b}$) V1 Da1 Dn त्वया द° Ś1 K1 वै (for किं) — $^{c}$) S कस्य (T1 G3 त°) M6-8 केन (for चैव); Ś1 K1 D5 कृते पाप, S °नेह (G3 °मैव, G6 °मैप) — $^{d}$) S चिरमेव (G1 °र भूमौ) वसिष्यति

3 $^{a}$) K0 2 3 ईशास्तु (K3 °स्ते), D (except D5 4, 5) ईशा वै S °लोकाना — $^{b}$) S वसव येन हेतुना — $^{c}$) T G1, 2 6 मनुष्ये° K0 Ñ1 B3 Da2 M7 °पपद्यत, K3 4 T G °प(G3 °द)पद्यते, Ñ3 Da1 °पुनप°; D3 °स्वपप° — $^{d}$) D4 T G तत्समा° (T1 तस्य°, G3 5 तस्य°)

4 Ś1 K1 3 D5 M om उवाच, T G om वैश° उ — $^{a}$) K3 Dn S एव° Ñ1 3 V1 D (except D5 4, 5) तदा गङ्गा; S वरारोहा — $^{b}$) G6 भर्तारमिद° — Dn1 om 4$^{cd}$ — $^{c}$) D5 सा तु (for देवी) — $^{d}$) Ś1 K (except K1) Da1 भरतर्षभ (Da2 °भ), Ñ3 V1 B D1, 4 पुरुषोत्तम; Dn1 °र्षभ

5 Before 5, Ñ3 Da1 Dn D1, 4 ins गङ्गोवाच, S गङ्गा — $^{a}$) K3 S transp यं and लेभे Ś1 वारुणि (by corr) S यमुना (for वरु°) — $^{b}$) S वरुणाद्राजसत्त° — $^{c}$) B (mostly) वसिष्ठो Ñ V1 Dn D1 वसिष्ठनामा स

6 $^{a}$) S1 D2 °श्रममिद° K3 रम्यं (for पुण्यं) K1 तस्याश्रमस्थानमिद — $^{b}$) Ś1 K1 °गणैर्युतं; K4 °गणायुतं; Ñ1 2 V1 B Dn D1, 2 4 °समन्वितं; Da °निषेवितं — $^{d}$) K1

स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम ।
वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ॥ ७
दक्षस्य दुहिता या तु सुरभीत्यतिगर्विता ।
गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ॥ ८
अनुग्रहार्थं जगतः सर्वकामदुघां वराम् ।
तां लेभे गां तु धर्मात्मा होमधेनुं स वारुणिः ॥ ९
सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते ।
चचार रम्ये धर्म्ये च गौरपेतभया तदा ॥ १०
अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ ।
पृथ्वाद्या वसवः सर्वे देवदेवर्षिसेवितम् ॥ ११
ते सदारा वनं तच्च व्यचरन्त समन्ततः ।
रेमिरे रमणीयेषु पर्वतेषु वनेषु च ॥ १२
तत्रैकस्य तु भार्या वै वसोर्वासवविक्रम ।
सा चरन्ती वने तस्मिन्गां ददर्श सुमध्यमा ।
या सा वसिष्ठस्य मुनेः सर्वकामधुगुत्तमा ॥ १३
सा विस्मयसमाविष्टा शीलद्रविणसंपदा ।
दिवे वै दर्शयामास तां गां गोवृषभेक्षण ॥ १४
स्वापीनां च सुदोग्ध्रीं च सुवालधिमुखां शुभाम् ।
उपपन्नां गुणैः सर्वैः शीलेनानुत्तमेन च ॥ १५
एवंगुणसमायुक्तां वसवे वसुनन्दिनी ।
दर्शयामास राजेन्द्र पुरा पौरवनन्दन ॥ १६
द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम ।
उवाच राजंस्तां देवीं तस्या रूपगुणान्वदन् ॥ १७
एषा गौरुत्तमा देवि वारुणेरसितेक्षणे ।
ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमम् ॥ १८
अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे । C. 1. 3938 B. 1. 99. 19 K. 1. 106. 19

---

$B_3$ $D_5$ °धृते; $\tilde{N}_3$ $B_{1.6}$ $D_4$ S सर्वर्तुकवनाद्द°.

7 $^{d}$) $K_{2.4}$ पुण्यवतां; $G_3$ °भृतां.

8 $^{b}$) K (except $K_1$) $B_3$ $D_a$ T $G_{1-3.5.6}$ M °त्यभि($K_3$ °ति)विश्रुता; $\tilde{N}$ $V_1$ $B_{1.3m.5.6}$ $D_n$ $D_{1.2.4.5}$ $G_4$ °त्यभिशब्दिता ($B_{3m}$ °शोभिता). — $^{d}$) S काश्य°.

9 $^{b}$) $K_{0.3.4}$ $\tilde{N}$ $V_1$ $D_n$ $D_1$ $M_3$ °कामदुहां. $K_0$ $\tilde{N}$ $V_1$ B $D_{a2}$ $D_n$ $D_1$ $G_{4.5}$ M वरा. — $^{d}$) $\tilde{N}_{1.2}$ होम्यं धेनुं.

10 $^{a}$) $G_{3.4}$(*sup. lin.* as in text)$_{.6}$ एकस्मिं°. — $^{b}$) $Ś_1$ $K_{0.3.4}$ वसती. T G ऋषिसे° ($T_2$ ऋषिनिवेशने; $G_4$ *sup. lin.* ऋषिनिषेविते). — $^{c}$) $Ś_1$ $K_{1.2}$ मेध्येरण्ये; $K_{0.3}$ मेध्ये रम्ये, $K_4$ मध्ये रम्ये; $N_1$ धर्मे पुण्ये; $\tilde{N}_2$ $V_1$ $B_1$ $D_a$ $D_n$ $D_1$ पुण्ये रम्ये; $D_5$ मध्ये रेमे; $G_1$ यस्माद्धर्म्ये; $G_3$ रम्ये हर्म्ये.

11 $^{a}$) S ततस् (for अथ). — $^{c}$) S धराद्या ($G_3$ सभार्या; $G_6$ अष्टौ च). — $^{d}$) $V_1$ B D (except $D_{a1}$ $D_4$) $G_{1.6}$ M देवा दे°; $T_2$ $G_{3.4.5}$ देवा वै ऋषिसे°.

12 $^{a}$) $B_{2.5}$ °नं तत्र. S सभार्यास्तद्वनं कृत्स्नं. — $^{b}$) $K_4$ B $D_a$ $D_{2.4}$ संचरंतः (B °त); $K_3$ S विचरंतः ($T_1$ °ति). S ततस्ततः. — $^{d}$) $Ś_1$ K (except $K_1$) वनेषूपवने°; $D_a$ सर्वर्तुषु व°.

13 $^{a}$) $Ś_1$ $K_1$ तस्यै°. $\tilde{N}$ $V_1$ B D (except $D_5$) °कस्याथ भार्या तु; S एकस्य भार्या राजेंद्र. — $D_5$ om. $13^{cdef}$. — $^{c}$) $B_{3.4.6}$ $D_4$ transp. सा and चरन्ती. $K_2$ विचरंती; $B_1$ $D_a$ $D_n$ $D_1$ संच°; $D_2$ चरंतीं गां; S तां च दोग्ध्रीं. — $^{d}$) $D_3$ संददर्श. S सुदर्शनां. — $^{e}$) $G_2$ स्वसा. $Ś_1$ $K_1$ या वसिष्ठस्य भवने; $V_1$ B $D_n$ $D_{1.2.4}$ नंदिनीं नाम राजेंद्र. — $^{f}$) $\tilde{N}_{1.2}$ $V_1$ B $D_n$ $D_{1.4}$ $G_6$ °त्तमां.

14 $^{a}$) M अथ सा विस्मिता देवी. — $^{b}$) S रूपद्र° ($G_6$ रूपयुक्ता सुनंदिनी). — $^{c}$) $K_2$ वसवे; $K_3$ दिवेथ; $\tilde{N}_{1.2}$ द्यौश्चैवं; $\tilde{N}_3$ द्यौश्चापि; $V_1$ $D_{a2}$ $D_{n2.n3}$ $D_{1.4}$ द्यवे वै; $B_{1.2.3m}$ द्यौश्चैव; $B_6$ द्यौश्चवै; $D_{a1}$ सद्यवै; $D_2$ पतिं वै. S सा ($T_2$ $G_2$ स्व-) पत्युर्दर्श° ($G_6$ दर्श° कल्याणी). — $^{d}$) $Ś_1$ $K_{0.1}$ °क्षणा; $K_{2.4}$ $D_{2.5}$ °क्षणां; T G $M_{3.5}$ °वृषविक्रम ($T_2$ °मं; $G_{1.2}$ °मः). $M_{6-8}$ तां गोवृषभविक्रम. — After 14, $B_3$ ins.:

953* पद्मवतीं सुपार्श्वोरुं पृथुपक्षसमायताम् ।
अष्टायतशिरोग्रीवां पृथुस्तां समपद्यत ।

15 $^{a}$) $K_0$ $G_6$ सापीनां; $K_4$ सुस्तनीं; $\tilde{N}_1$ संधा°; $\tilde{N}_3$ M स्वाधी°; $V_1$ $B_{1.4}$ $D_n$ $D_{1.5}$ Cd आ°; $D_2$ $T_2$ सु°; $T_1$ सुपनां; $G_3$ सोपि तां. — $^{b}$) $V_1$ $B_{5.6}$ $D_a$ $D_n$ $D_1$ Cd °खुरां; $B_{1.3}$ $D_{2.4.5}$ °मुखीं. $B_3$ $D_4$ तथा; $B_6$ $D_2$ तदा (for शुभां). $T_1$ $G_{3.6}$ M °धिमुखोदरां; $T_2$ $G_{1.2.4.5}$ सुबालां सुमुखोदरां.

16 $^{c}$) S °मास कल्याणी (M °णीं). — $^{d}$) $\tilde{N}_1$ B (except $B_1$) $D_{2.4}$ S (except $G_{3.5.6}$) पौरववर्धन.

17 $^{a}$) $\tilde{N}_3$ B (except $B_1$) $D_4$ द्यौस्तथा. — $^{b}$) K (except $K_1$) $B_5$ $D_{a1}$ $T_1$ G (except $G_{3.5}$) °विक्रमः. $\tilde{N}_2$ गजेंद्रसमविक्रम. — After $17^{ab}$, $B_3$ ins.:

954* उवाच राजंस्तां देवीं नृपोत्तम सुमध्यमां ।

— $^{c}$) $\tilde{N}_1$ राजा तां. $T_1$ वीरं (for देवीं). — $^{d}$) $Ś_1$ °गुणांस्त्विदं; $K_0$ $D_5$ °गुणान्वितः ($D_5$ °तान्); $K_1$ °गुणाधिकां

दश वर्षसहस्राणि स जीवेत्स्थिरयौवनः ॥ १९
एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा ।
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् ॥ २०
अस्ति मे मानुषे लोके नरदेवात्मजा सखी ।
नाम्ना जिनवती नाम रूपयौवनशालिनी ॥ २१
उशीनरस्य राजर्षेः सत्यसंधस्य धीमतः ।
दुहिता प्रथिता लोके मानुषे रूपसंपदा ॥ २२
तस्या हेतोर्महाभाग सवत्सां गां ममेप्सिताम् ।
आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्धन ॥ २३
यावदस्याः पयः पीत्वा सा सखी मम मानद ।
मानुषेषु भवत्वेका जरारोगविवर्जिता ॥ २४
एतन्मम महाभाग कर्तुमर्हस्यनिन्दित ।
प्रियं प्रियतरं ह्यस्मान्नास्ति मेऽन्यत्कथंचन ॥ २५
एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ।
पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम् ॥ २६
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ।
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ।
हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः ॥ २७
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ।
न चापश्यत गां तत्र सवत्सां काननोत्तमे ॥ २८
ततः स मृगयामास वने तस्मिंस्तपोधनः ।
नाध्यगच्छच्च मृगयंस्तां गां मुनिरुदारधीः ॥ २९
ज्ञात्वा तथापनीतां तां वसुभिर्दिव्यदर्शनः ।
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ॥ ३०
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम् ।
तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः ॥ ३१
एवं शशाप भगवान्वसूंस्तान्मुनिसत्तमः ।
वशं कोपस्य संप्राप्त आपवो भरतर्षभ ॥ ३२

---

18 a) K3 Ñ V1 B D (except Da D4) S (except G4) देवी (B6 राजन्). — b) K3 Ñ V1 B1 3 Dn D1.4 °क्षणा.

19 b) Ś1 K1 transp. स: and वै.

21 c) K0 नागवती; K3-4 Ñ V1 B D (except D5) G3 जित°; G2.4.5 हिम°.

22 b) M6-8 सत्यधर्मस्य. — c) T1 M विश्रुता दुहिता लोके. — d) K2 S (except G3) मानुषी. K1 रूपसंमता; B6 नृपसं°; D5 [ऽ]स्मिन्परंतप.

23 a) T G महाराज. — b) K1 समीप्सि°; G2-3 मये(G3 अये)प्सि°. — G2 om. 23cd. — c) Ñ3 S (G2 om.) °यस्व सु(Ñ3 T2 G6 न)रश्रेष्ठ. — d) T2 G4.5 त्वरितः. Da S (G1 om.) °वर्धनी (G6 °दर्शनी).

24 c) M6-8 मानवेषु. Ś1 K1.2.4 D1 भवत्येका; Ñ2 भवेद्दे°; Ñ3 °देवे°; T G °देवी°.

25 K0 om. 25. — c) S °र्हसि धर्मं वै. — e) S प्रियात्प्रि°. B1 D5 यस्मान्; G3-4 हि स्मान्. — d) T1 मन्ये (for मेऽन्यत्).

26 Before 26, M8 ins. गंगा. — a) K0.2.4 एवं. K0 D2 transp. श्रुत्वा and तस्या. — c) S धराद्यैर्. B3 6 D2 सर्वैर् (for सार्धं). — d) T2 G (except G1.6) M6-8 तां and गां.

27 b) Ñ3 D2 तदानघ. — d) K0.4 S परीक्षि°. — e) Ñ1.3 ततः (for तदा). — f) K3 M6-8 प्रतापस्तु. M6-8 कीर्तितः(!). T G प्रयाता(G1 °यातः; G2.4 °यता)नुतदर्शि(G2 °र्शि)ना; M5.8 प्रयाता न तु शक्तितः.

28 a) T G यदाश्र°. — G2 (hapl.) om. 28c-30c. — cd) Ñ V1 B6 D (except D2) °पश्यत्स गां °ऽस्मिन् नापश्यत्तां सवत्सां तां स हि तस्मिन्वनो°.

29 G2 om. 29 (cf. v. l. 28). — ab) S (G2 om.) स तस्मिन्मृग° वने नाम्नृषिसत्तमः. — c) Ś1 K1 °गमद्यः Ñ3 सोध्य°; V1 Dn D2 नाभ्यागम°; B °ध्याग°; T1 स नाभ्यगच्छन्; T2 G3-6 नाभ्याग°; G1 M6-8 नाभ्यग°. — d) T G1.4-6 स्तां (for तां).

30 G2 om. 30abc (cf. v. l. 28). — a) Ś1 K Ñ1.3 Da D5 गां (for तां). Ñ3 ज्ञात्वापनीतां वसुभिर्. — b) Ñ3 दिव्यज्ञानेन गां मुनिः; M (except M5) °र्दिव्यचक्षुषा. — c) S (G2 om.) स [] कोपवशं प्राप्तः.

31 a) M5 तां (for गां). M5 गां; M6-8 मे (for वै). K3 Da2 D1 °लधी; T1 G1.2.6 M (except M5) °धीं — c) Ñ3 तस्मादेते. — d) S वसवो मानुषेष्विति.

32 D1 (hapl.) om. 32b-33c. — b) K0.2.4 transp. वसून् and तान्. V1 T2 वसून्मे; Da आपवो (see below) Ñ3 G3 ऋषिसत्तमः; V1 B D (except D5, D1 om.) भरतर्षभ; T1 मुनिपुंगवः. — c) Ñ V1 B1.6 Da Da T2 G क्रोधस्य. — d) Da वसून्प्राप्य (for आप°); see above. B D (except D5, D1 om.) मुनिसत्तमः; T2 भगवानृषिः.

33 D1 om. 33abc (cf. v. l. 32). — a) B3.6 D1.4

शप्त्वा च तान्महाभागस्तपस्येव मनो दधे ।
एवं स शप्तवान्राजन्वसूनष्टौ तपोधनः ।
महाप्रभावो ब्रह्मर्षिर्देवान्रोषसमन्वितः ॥ ३३
अथाश्रमपदं प्राप्य तं स भूयो महात्मनः ।
शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः ॥ ३४
प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ ।
न लेभिरे च तस्मात्ते प्रसादमृषिसत्तमात् ।
आपवात्पुरुषव्याघ्र सर्वधर्मविशारदात् ॥ ३५
उवाच च स धर्मात्मा सप्त यूयं धरादयः ।
अनुसंवत्सराच्छापमोक्षं वै समवाप्स्यथ ॥ ३६
अयं तु यत्कृते यूयं मया शप्ताः स वत्स्यति ।
द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्मणा ॥ ३७

नानृतं तच्चिकीर्षामि युष्मान्क्रुद्धो यदब्रुवम् ।
न प्रजास्यति चाप्येष मानुषेषु महामनाः ॥ ३८
भविष्यति च धर्मात्मा सर्वशास्त्रविशारदः ।
पितुः प्रियहिते युक्तः स्त्रीभोगान्वर्जयिष्यति ।
एवमुक्त्वा वसून्सर्वाञ्जगाम भगवानृषिः ॥ ३९
ततो मामुपजग्मुस्ते समस्ता वसवस्तदा ।
अयाचन्त च मां राजन्वरं स च मया कृतः ।
जाताञ्जातान्प्रक्षिपास्मान्स्वयं गङ्गे त्वमम्भसि ॥ ४०
एवं तेषामहं सम्यक्शप्तानां राजसत्तम ।
मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहम् ॥ ४१
अयं शापादृषेस्तस्य एक एव नृपोत्तम ।
द्यौ राजन्मानुषे लोके चिरं वत्स्यति भारत ॥ ४२ C. 1. 3963 B. 1. 99. 45 K. 1. 106. 41

---

T1 M8 महाभागान्. — b) Ñ1 तपस्युग्रे. — c) G1 संश°. Ñ3 अष्टौ (for राजन्). — d) Ñ3 तान् (for अष्टौ). Ñ3 मुनिसत्तमः; G3 महातपाः (for तपो°). — e) K0 देवर्षिः. — f) T2 G2.4.5 तेषां (for देवान्). K0.2.4 Ñ2 V1 B1 D (except D2.4.5) G5 क्रोधसम°. — After 33, D4 (marg. sec. m.) S ins.:

955* एवं शप्तास्ततस्तेन मुनिना यामुनेन वै ।
अष्टौ समस्ता वसवो मुने रोषेण सत्तम ।

[ Before line 1, D4 ins. गंगोवाच. — (L. 2) T1 G3 निजदोषेण; T2 G1.2.4.5 द्वियो दोषेण. D4 M भारत. ]

34 a) Ñ V1 D (except D2.4.5) प्राप्ताः. — b) K2 Ñ1 तस्माद्; Ñ2 V1 Da Dn D1 ते वै; Ñ3 D6 तस्य; B1.3 D2.4 ते स्म; B5.6 तेस्य; S पुनः. S तस्य (for भूयो). G1 मनो दधे (sup. lin. महात्मनः as in text). K0.2.4 भूयस्ते वसवस्तदा. — d) K0 S transp. ऋषिं and तं° S चाभिच°.

35 K0 om. 35abcd. — c) N (except Ś1) transp. न and लेभिरे. T G तु (for च). S transp. तस्मात् and ते. — After 35cd, S ins.:

956* चकार च न तेषां वै प्रसादं भगवानृषिः ।

— e) S (except M6-8) आपवः. — f) K0.2.4 °भृतां वरात्; S °विशारदः.

36 b) K2 Ñ V1 B (except B5; B1m as in text) D (except Da) शप्ता (for सप्त). S सप्त राजन्धरादिकान्. — cd) Ś1 K Ñ1.2 V1 Da Dn D1.5 °त्सरात्सर्वे शापमोक्षमवाप्स्यथ; Ñ3 °च्छापं सर्वे वै सम°; B1 D4 °च्छापान्मोक्षं वै सम°; S °राच्छा(G1.4.5 °रं शा)पान्मोक्ष्य(T1 M °क्ष)थमिति भारत.

37 ab) S transp. यूयं and शप्ताः. — c) S द्यौस्तु वै.

38 a) Ñ1 नाकृतं. T2 G (except G6) च (for तत्). — b) Ñ1.2 V1 B D M5.8 transp. युष्मान् and क्रुद्धो. T G M6-8 यस्मिन्क्रु°. A few MSS. यदब्रवं. — After 38ab, S ins.:

957* प्रजा ह्यनृतवाक्येन हिंस्यामप्यात्मनस्तथा ।

— c) T G (except G6) transp. न and प्रजा°. K4 V1 जनिष्यति न चा°; M (except M8) न जनिष्यति चा°. Cd cites प्रजास्यति (as in text).

39 b) Ś1 K1 सर्वशस्त्रभृतां वरः; S °शास्त्रार्थविद्वली (M °तत्त्ववित्). — c) S पितुश्चायं प्रियं कुर्वन्. — Before 39ef, Ñ2 V1 ins. गंगोवाच. — f) V1 B D (except Da) स जगाम महानृषिः.

40 b) Dn D1 समेता (for सम°). M नृप (for तदा). — d) Ñ1.2 V1 वरः. B1.3 Dn D1.5 तत् (for स). K2 समयः (for च मया). Ś1 K1.2.4 V1 वृतः; B5 Dn D1 कृतं. S वरं तेभ्यो ददाम्यहं. G3 om. 40e–41d. — e) K3 जातं जातं. S (G3 om.) जातं जातं क्षिपेत्यूचुः. — f) T2 G1-6 M6-8 त्वदंभसि.

41 G3 om. 43 (cf. v. l. 40). — d) B D2.4 मतं; S (except M5.8; G3 om.) वरं (T2 स्वयं) (for अहं).

42 Ñ1 om. 42ab. — a) B1.6 D4 सोयं; T1 M अभि°. — d) K1 चिरं चरिष्यति नराधिप (sic). — After 42, S ins.:

964 9.46 06.43 एतदाख्याय सा देवी तत्रैवान्तरधीयत ।
आदाय च कुमारं तं जगामाथ यथेप्सितम् ॥ ४३
स तु देवव्रतो नाम गाङ्गेय इति चाभवत् ।
द्विनामा शंतनोः पुत्रः शंतनोरधिको गुणैः ॥ ४४
शंतनुश्चापि शोकार्तो जगाम स्वपुरं ततः ।
तस्याहं कीर्तयिष्यामि शंतनोरमितान्गुणान् ॥ ४५
महाभाग्यं च नृपतेर्भारतस्य यशस्विनः ।
यस्येतिहासो द्युतिमान्महाभारतमुच्यते ॥ ४६

इति श्रीमहाभारते आदिपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## ९४

वैशंपायन उवाच ।
स एवं शंतनुर्धीमान्देवराजर्षिसत्कृतः ।
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः ॥ १
दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
नित्यान्यासन्महासत्त्वे शंतनौ पुरुषर्षभे ॥ २
एवं स गुणसंपन्नो धर्मार्थकुशलो नृपः ।
आसीद्भरतवंशस्य गोप्ता साधुजनस्य च ॥ ३
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
धर्म एव परः कामादर्थाच्चेति व्यवस्थितः ॥ ४
एतान्यासन्महासत्त्वे शंतनौ भरतर्षभ ।

---

958* अयं कुमारः पुत्रस्ते विवृद्धः पुनरेष्यति ।
अहं च ते भविष्यामि आह्वानोपगता नृप ।

43 S transp. 43 and 44. Before 43, Ś1 K1 D5 S (except T1) ins. वैशं°; K0.2-4 Ñ V1 B Da Dn D1.2.4 वैशं° उ°. — $^{d}$) Ś1 K1 D2.4.5 T1 G5 च (for अथ). B5 जगाम भरतर्षभ. — After 43, S ins.:

959* तस्माद्देवव्रतश्चैव गङ्गादत्तश्च सोऽभवत् ।
(cf. v. l. $44^{ab}$).

44 S transp. 43 and 44. — $^{ab}$) S (except T1) अयं देवव्रतश्चैव गंगादत्तश्च मे सुतः (cf. 959*). — $^{c}$) Da D1 T1 द्युनाम्ना.

45 $^{b}$) D1 जगामाथ यथेप्सितं (= $43^{d}$). — After $45^{ab}$, S ins.:

960* तस्य कीर्तिं च मूर्तिं च महतो नृपसद्गुणान् ।

— $^{c}$) S शंतनोः (for तस्या°). — $^{d}$) K2 V1 Dn D1 °रधिकान्गु°; B D2.4 °नोरुत्तमान्गु°; T1 M5-8 सर्वानेव गुणानहं; T2 G M5.6 महाराज (G5 M5.8 सर्वानेव) यथातथं.

46 K0 om. $46^{ab}$. — $^{a}$) S महाभागस्य नृ°. — $^{b}$) A few MSS. भरत°. K2 Ñ2 B5 D (except D2.4.5) महात्मनः. — $^{c}$) S ख्यातोयं (G5 आख्यातो). — $^{d}$) Ñ1.2 V1 °भारत उच्य°; S °त द्यु(G5 corr. to -मि)च्युत.

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* K2 Ñ1.2 V1 T1 संभव. — *Adhy. name:* Ś1 K2 B2.6 Da Dn D1.4.5 आपवं (after which Dn D1 ins. समाप्तं); K0.4 D2 वसु(K0 वसव)शापवर्णनं; K1 आपवनं; K3 वसुसंभवानुवर्णनं; Ñ V1 आपवोपाख्यानं; Ñ3 आपं; B1 आपवो; T2 S वसुशापसं(G1 om. सं)कीर्तनं; G1 गंगाशंतनुसंवादः. — *Adh* no.: (figures, words or both): K0 95; B3 D1 9 Da1 96; Dn1 98; S 44 (T1 93). — *S'loka no.:* Da1 49; Dn 48; M5 54. — *Aggregate s'loka no.* Dn1 3961.

### 94

1 Ś1 K1 S om. उवाच. — $^{a}$) K0.2-4 T G transp. स and एवं. K1 D2 M5 एव; Ñ1.2 V1 B Da Dn D1.2 राजा; Ñ3 M5 नृप. V1 धीमान्. — $^{b}$) K0 5.6 °राज समद्युतिः; T1 G5 °सत्तमः. — $^{d}$) B D2.6 सत्यवादीति — T G M5 ins. after 1: Ś1 K Ñ1 V1, after 2:

961* शंतनोः कीर्तयिष्यामि सर्वानेव गुणानहम् ।
[ Cf. 1. 93. $45^{cd}$. Ñ1 गुणान्बहून्. ]

2 $^{ab}$)=(var.) $6^{ab}$. — $^{c}$) G2.4.5 नित्यान्यस्मिन्; G1 न्यवसंश्च. K3 महीपाले. — $^{d}$) K2 D2 °पर्षभ; K3 Da1 D1 S भरतर्षभ. — After 2, Ś1 K Ñ1 V1 ins. 961* (cf. v. l. 1).

3 $^{ab}$) S अमात्यगुण° क्षत्रधर्मविशेषवित्. — $^{c}$) Ñ2 V1 B D (except Da D2) सर्वजन°.

4 $^{a}$) B5 Da Dn1 स पृथ्वंसो; T2 G (except G5) पृथुयशाः. — $^{b}$) K0.2 °वारणवारणः; B1 Da मत्तमातंगगति°. — N ins. after $4^{ab}$: T G1-4 M5-8 (G2.4.5 om. line 2), after 4:

न चास्य सदृशः कश्चित्क्षत्रियो धर्मतोऽभवत् ॥ ५
वर्तमानं हि धर्मे स्वे सर्वधर्मविदां वरम् ।
तं महीपा महीपालं राजराज्येऽभ्यषेचयन् ॥ ६
वीतशोकभयाबाधाः सुखस्वप्नविबोधनाः ।
प्रति भारतगोप्तारं समपद्यन्त भूमिपाः ॥ ७
शंतनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा ।
नियमात्सर्ववर्णानां ब्रह्मोत्तरमवर्तत ॥ ८
ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः ।
ब्रह्मक्षत्रानुरक्ताश्च शूद्राः पर्यचरन्विशः ॥ ९
स हास्तिनपुरे रम्ये कुरूणां पुटभेदने ।
वसन्सागरपर्यन्तामन्वशाद्वै वसुंधराम् ॥ १०

स देवराजसदृशो धर्मज्ञः सत्यवागृजुः ।
दानधर्मतपोयोगाच्छ्रिया परमया युतः ॥ ११
अरागद्वेषसंयुक्तः सोमवत्प्रियदर्शनः ।
तेजसा सूर्यसंकाशो वायुवेगसमो जवे ।
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ १२
वधः पशुवराहाणां तथैव मृगपक्षिणाम् ।
शंतनौ पृथिवीपाले नावर्तत वृथा नृप ॥ १३
धर्मब्रह्मोत्तरे राज्ये शंतनुर्विनयात्मवान् ।
समं शशास भूतानि कामरागविवर्जितः ॥ १४
देवर्षिपितृयज्ञार्थमारभ्यन्त तदा क्रियाः ।
न चाधर्मेण केषांचित्प्राणिनामभवद्वधः ॥ १५ C. 1. 4063 B. 1. 100. 17 K. 1. 107. 13

962* अन्वित परिपूर्णार्थं सर्वैर्नृपतिलक्षणै ।
तस्य कीर्तिमतो वृत्तमवेक्ष्य सतत नरा ।

After the above, D5 marg *sec m* ins, while T G1 3 M6–8 read (for the first time) line 2 of 963*, *which is followed by a repetition of 4cd*, in all the above MSS except T3 — d) N (except B6 Da1 D4) °स्थिता

5 B6 Da om 5ab — 5ab = (var) 2cd — a) Ñ3 वृत्तान्यपि, D4 T G M8 पूर्वमासीत् K0 3 4 महीपाले, D4 T G M8 महासत्व — b) D4 T G M8 शंतनुर् Ś1 Ñ V1 B (B6 om) D (except D4, Da om) पुरुषर्षभे, K3 4 M (except M8) °र्षभे — G2 om 5c–6d — d) Da *transp* क्षत्रि° and धर्मतो D5 G (G2 om) भवेत् Ñ3 Dn D1 धर्मत पार्थिवोभ°, T2 धर्मत सदृशोभ°

6 G2 om 6 (cf v 1. 5) — a) Ś1 K3 Ñ1 V1 B6 D (except D4 5) हि धर्मेषु, T G (G2 om) हि सद्धर्मे, M सदा धर्मे — b) K3 Ñ2 V1 B6 D (except D4 5 8) T1 सर्वधर्म(T1 °शास्त्र)भृता, G3 4 5 शास्त्रशस्त्रवि°, M सर्व(M8 शस्त्र)शास्त्रवि° T2 G1 6 शस्त्रशास्त्रविशारद् — Da2 om 6c–7b — c) Ñ1 2 V1 महीपो, M6 8 °प T G (G2 om) M8 महेष्वास, M6 8 महा(M7 °ही)पाला — d) Ñ1 2 V1 षेचयत् S (G2 om) राजराजमकुर्वत

7 Da1 om 7ab (cf v 1 6) S reads 7 after 16 — b) K4 Ñ3 B1 Dn D5 T1 G2 6 °स्वप्नवि°, T2 G5 M °स्वप्नप्र°, G3 4 °सुखप्र°, G3 °स्पर्शसु° — c) K1 Ñ V1 B D पर्ति (K1 पति, D5 प्राप्य), S श्रिता (G2 श्रुता) S भा(G1. 2 भ)रतभर्तार — d) G1 पार्थिवा (for भूमि°) — After 7, Dn S ins

963* तेन कीर्तिमता शिष्टा शक्रप्रतिमतेजसा ।
यज्ञदानतप शीला समपद्यन्त पार्थिवा ।

8 a) K4 B3 Dn1 D1 गुप्तैर्, S गुप्त — b) Ñ3 नृपतिसत्तमे S राष्ट्राधिपतिभिर्जगद् — c) Ñ3 नियम्य — d) K3 नियमोत्तर°, Ñ2 D (except Da2 D4) धर्मोत्तर°

9 a) Ñ1 V1 Dn1 T1 M6–8 ब्रह्मचर्य(*sic*)चरत्, D5 °चर्यरत, G5 °चर्यपर — c) T G °नुलोमा(G5 6 °मा)श्च, M °नुकूलाश्च

10 a) S हस्ति° — d) K3 B6 D (except D4) S °न्वशासद्°

11 b) K0 2 4 °वानृजु — c) Ñ3 °तपोध्यास, T G (except G3 5) °परो योगी

12 c) Ñ V1 B D (except D5) सूर्यकल्पोभूद् — d) M वायुना च S बले (for जवे) — e) Ś1 K B6 D5 क्रोधे (for कोपे) — f) Ś1 K1 Ñ B3 5 D5 क्षमित्वे

13 d) Ś1 K1 Ñ1 2 Dn G5 तथा (for वृथा) S तदा (T वध, G2 वृथा) (for नृप)

14 a) K1 2 Ñ V1 B D (except Dn D5) ब्रह्मधर्मोत्तरे, Cd as in text — b) M विनयाश्रित (M8 8 °न्वित) — c) K4 B (except B3) सम्यक् (for समं) — d) Ś1 रागकाम°; S लोभराग° — After 14 D5 (marg *sec m*) S ins

964* चकोरनेत्रस्ताम्रास्य सिंहर्षभगतिर्युवा ।
गुणैरनुपमैर्युक्त समस्तैरभिकामिकै ।
गम्भीर सत्वसंपन्न पूर्णचन्द्रनिभानन ।
[(L 1) D5 T G5 6 M8 8 ताम्राक्ष — (L. 2) T1 G2 4 °रभिगा° ]

असुरानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा भूतानां सर्वेषामभवत्पिता ॥ १६
तस्मिन्कुरुपतिश्रेष्ठे राजराजेश्वरे सति ।
श्रिता वागभवत्सत्यं दानधर्माश्रितं मनः ॥ १७
स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथापराः ।
रतिमप्राप्नुवन्स्त्रीषु बभूव वनगोचरः ॥ १८
तथारूपस्तथाचारस्तथावृत्तस्तथाश्रुतः ।
गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः ॥ १९
सर्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च ।
महाबलो महासत्त्वो महावीर्यो महारथः ॥ २०
स कदाचिन्मृगं विद्ध्वा गङ्गामनुसरन्नदीम् ।
भागीरथीमल्पजलां शंतनुर्दृष्टवान्नृपः ॥ २१

तां दृष्ट्वा चिन्तयामास शंतनुः पुरुषर्षभः ।
स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा ॥ २२
ततो निमित्तमन्विच्छन्ददर्श स महामनाः ।
कुमारं रूपसंपन्नं बृहन्तं चारुदर्शनम् ॥ २३
दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरंदरम् ।
कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम् ॥ २४
तां शरैरावृतां दृष्ट्वा नदीं गङ्गां तदन्तिके ।
अभवद्विस्मितो राजा कर्म दृष्ट्वातिमानुषम् ॥ २५
जातमात्रं पुरा दृष्टं तं पुत्रं शंतनुस्तदा ।
नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम् ॥ २६
स तु तं पितरं दृष्ट्वा मोहयामास मायया ।
संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत ॥ २७

15 a) Ś1 °यज्ञाना — b) K4 समारभ्य (for आरभ्य°) [illegible] पशुषु पश(T1 प्रभ)वो नृणा — c) S हि (for च).

16 a) K0 2 4 कृपणाना°, G2 अनुजाना° — b) K4 Ñ2 V1 G (except G1 6) वर्तिना — cd) N (except B D2) transp भूता° and सर्वेषा — After 16, S reads 7, followed by 963*

17 a) K0 3.4 कुरुवर°, [illegible] नरवर° — c) Ñ1 श्रुता, S नृणा Ś1 वाचाभ° D2 S सत्या — d) S दानार्थमभवद्न — After 17, G4 6 ins

965* यज्ञार्थं पशव सृष्टा सन्तानार्थं च मैथुनम् ।

18 ab) Ñ2 चतस्रोथ, D5 दश चैव Ś1 K1 समा षोडश चाष्टौ [च] चतस्रश्च तथा° — c) K0 °प्राप्नुयात्, K1 °प्राप्नुवात्, K4 B5 Da2 D5 प्राप्तवान् S काचित् (for स्त्रीषु) — After 18 M ins

966* तपसा कपिलोमेण अपध्यानरत सदा ।

19 a) Ś1 K1 तथाधर्म° M2 °स्तथाशील्स — b) K0 3 4 तथाशील° — d) T G आदावेव तथा वसु (T1 सुर ), M आदावेवाष्टमो वसु

20 a) Ś1 B5 D5 सर्वार्थेषु K2 Da Cd सु, D2 S च (for स) K0 3 4 स सर्वास्त्रेषु नि° — cd) K2 T G transp °सत्त्वो and °वीर्यो M महावीर्यो (for °सत्त्वो) and महोत्साहो (for °वीर्यो) S महायशा (for °रथ )

21 a) K2 [illegible] मृगान् Ś1 विद्ध, K1 विद्धु, M निघ्नन् — b) G6 वनाद् (for गङ्गा) Da °मन्वस°, S °मनुससार ह — d) S ददर्श सरिता वरा

22 b) K2 G2 M7 भरतर्षभ (K2 °भ), K3 °र्षभ — c) Ś1 K1 सिच्यते N G3 स्थित्य G1 स्यदते f वापोद्य — d) S (except G1 3 6) यथा पुर

23 b) K2.3 D5 T G1-4 6 सुमहा°, Ñ2 सुमहात V1 B D2 4 G6 सुमहायशा — c) B D2 4 देवगर्भाभ (for रूप°) — d) [illegible] (except M6 8) प्रियदर्श°

24 Ñ2 om 24ab — c) D4 M6 8 प्रकुर्वा° — d) °स्तीरजिह्मगै

25 a) Ñ2 Da Dn °राचिता — D2 (hapl ) 25b–26a — b) Ś1 तथान्तिके, K0 4 Da तदा°, S समर — c) S विस्मित प्रेक्षते स स्म (M प्रेक्ष्य तस्थौ — G2 4 5 read 28d, 29 30 and 28c between and 25d (that is their sequence is 25c, 28d, 29-28c, 25d, 26 28ab, 31 etc ) — d) K0 3 4 Ñ V1 B3 Dn transp कर्म and दृष्ट्वा S तस्य (for दृष्ट्वा)

26 D1 om 26a (cf v l 25) — a) K3 4 Ñ V D (D1 om ) G3 दृष्ट्वा (for दृष्ट) — b) S transp तं पुत्र — cd) K4 तथा°स°, Ñ2 V1 स्वमा°स°, Da I सदात्म° [illegible] न ज्ञातवान्महाभागमथ पुत्रो ममेति वै (M — After 26 M6 8 ins

967* न स्मृति शंतनोरासीदभिज्ञातु स्वमात्मजम् ।

27 K4 Dn2 (hapl ) om 27b–28a — c) Ñ1 समोह्य त, D2 °ह्यैव, T G प्रमोह्य च (G2 स M मोहयित्वा

28 K4 Dn2 om 28a (cf v l 27) — a) Ñ (except D2 4) ततो (for तदा) — b) Ś1 K1 तस्य (f तत्र) — G2 4 5 ins after 28ab T2 G1 after 30

तदद्भुतं तदा दृष्ट्वा तत्र राजा स शंतनुः ।
शङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह ॥ २८
दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम् ।
गृहीत्वा दक्षिणे पाणौ तं कुमारमलंकृतम् ॥ २९
अलंकृतामाभरणैररजोम्बरधारिणीम् ।
दृष्टपूर्वामपि सतीं नाभ्यजानात्स शंतनुः ॥ ३०

गङ्गोवाच ।

यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यजायिथाः ।
स तेऽयं पुरुषव्याघ्र नयस्वैनं गृहान्तिकम् ॥ ३१
वेदानधिजगे साङ्गान्वसिष्ठादेव वीर्यवान् ।
कृतास्त्रः परमेष्वासो देवराजसमो युधि ॥ ३२
सुराणां संमतो नित्यमसुराणां च भारत ।
उशना वेद यच्छास्त्रमयं तद्वेद सर्वशः ॥ ३३
तथैवाङ्गिरसः पुत्रः सुरासुरनमस्कृतः ।
यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन्प्रतिष्ठितम् ।
तव पुत्रे महाबाहौ साङ्गोपाङ्गं महात्मनि ॥ ३४
ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान् ।
यदस्त्रं वेद रामश्च तदप्यस्मिन्प्रतिष्ठितम् ॥ ३५
महेष्वासमिमं राजन्राजधर्मार्थकोविदम् ।
मया दत्तं निजं पुत्रं वीर वीर गृहानय ॥ ३६

वैशंपायन उवाच ।

तयैवं समनुज्ञातः पुत्रमादाय शंतनुः ।
भ्राजमानं यथादित्यमाययौ स्वपुरं प्रति ॥ ३७
पौरवः स्वपुरं गत्वा पुरंदरपुरोपमम् । C 1 4007 B 1 100 41 K 1 107 42

---

968* शङ्कमान सुत प्राप्य गङ्गा वचनमब्रवीत् ।
— T1 (hapl ) om $28^{d}$–$29^{a}$ — For sequence of G2 4 5 cf v l 25 — $^{d}$) Ś1 हि, S (T1 om ) ता (M6 8 च)

29 T1 om $29^{a}$ (cf v l 28) M8 (hapl ) om $29^{b}$–$30^{c}$ For sequence of G2 4 5 cf v l 25 — $^{d}$) Ñ2 transp त and कुमार

30 M8 om $30^{abc}$ (cf v l 29) For sequence of G2 4 5 cf v l [illegible] — $^{ab}$) Ñ1 स्वलंकृताम् M (M8 om ) साभरणै° Ś1 K °ररजोंबरसंवृता, Ñ Da Dn D1 5 °विरत्नो(Da °रजा)बरसंवृता, V1 B D3 4 G1 3 °विरजों(G3 °रजा)बर°, T1 °ररजोवस्त्रवासिनीं, G6 °जोंबरवासिनीं, M (M8 om ) °रभिगम्य नृपोत्तम (M5 °मै ) — $^{c}$) K0 3 4 च ता, Ñ V1 B D (except D5) स ता [illegible] °वीं सतीं गतां — $^{d}$) Ś1 K1 D1 °जानत्स श°, B (except B6) Da D4 °जानत श° — After 30 T2 G1 ins 968*

31 K1 S (except M8 8) om उवाच — $^{ab}$) Ñ2 3 V1 B (except B1) D T G पुरा मय्यविंदथा , M पुरा नयो मयि Ñ1 अथ पुत्रस्तव विभो सर्वास्त्रविदसयुग — $^{c}$) Ñ1 G3 सुतोय; Ñ2 3 B1 Da Dn D1 स चाय Ś1 K D5 सोय वीरस्तव विभो (K0 3 4 सुत ) — After $31^{c}$ Ś1 K D (except Da) ins

969* सर्वास्त्रविदुत्तम ।
गृहाणेम महाराज मया संवर्धितं सुतम् ।
आदाय पुरुषव्याघ्र

[ (L 1) K0 3 सर्वशास्त्रविदुत्त°, K1 सर्वासु वि°, K2 सुत सर्वास्त्रवित्तम ]

— $^{d}$) Ś1 K D5 गृहान्विभो, Ñ Da Dn D1 गृह विभो S वज्रसहननो युवा (M °न सुत )=1 62 $11^{d}$

32 $^{a}$) [illegible] °जगे पूर्वं — $^{b}$) K4 B D5 वशि° Ś1 Ñ2 3 V2 B1 Da2 Dn D2 6 नृप S °द्वाचरितमत — After $32^{ab}$, M ins

970* स खिलान्सोपनिषदान्साङ्गोपाङ्गान्यथाविधि ।
— $^{d}$) Ñ2 देवदेवसमो

33 $^{d}$) K0 3 4 तदय वेद स°, T G तदप्यस्मिन्प्रतिष्ठित (=$35^{d}$)

34 G6 (hapl ) om 34–35 — $^{a}$) Ś1 तद्देवा° — $^{b}$) K3 सुरसघनम°, D6 सुरासधिनम°; M8 (sup lin as in text) 6–8 सर्वदेवनम° — $^{d}$) Ś1 M (except M8) सर्वमस्मि° — Ś1 K1 (hapl ) om $34^{e}$ $35^{d}$ — $^{e}$) K2 B (except B1) D (except Dn2 n3 D4) महाबाहो, [illegible] (G6 om ) महाभागे

35 Ś1 K1 G6 om 35 (cf v l 34) — After $35^{ab}$, M8 ins

971* सर्वशास्त्रार्थतत्त्वज्ञ स्मृतिमान्प्रतिभानवान् ।
— Da2 om $35^{c}$ $36^{d}$ — $^{d}$) Ñ1 तदमुष्मिन्प्र°, B3 D (except D2 4 5) तदेतस्मि°

36 Da2 om 36 (cf v l 35) — $^{c}$) T [illegible] स्वज, M3 5 इत (M8 sup lin इम) — $^{d}$) T G3–5 वर, G1 2 पर (for वीर) Ñ V1 B1 6 D (except D4, Da2 om ) गृह

37 Ś1 K2 3 D5 T1 G1 M3 5 om उवाच T2 G 5 M5 8 om वैश° उ° Before 37, D4 (marg sec m ) S ins

42 43 सर्वकामसमृद्धार्थं मेने आत्मानमात्मना ।
पौरवेषु ततः पुत्रं यौवराज्येऽभ्यषेचयत् ॥ ३८
पौरवाञ्शंतनोः पुत्रः पितरं च महायशाः ।
राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ॥ ३९
स तथा सह पुत्रेण रममाणो महीपतिः ।
वर्तयामास वर्षाणि चत्वार्यमितविक्रमः ॥ ४०
स कदाचिद्वनं यातो यमुनामभितो नदीम् ।
महीपतिरनिर्देश्यमाजिघ्रद्गन्धमुत्तमम् ॥ ४१
तस्य प्रभवमन्विच्छन्विचचार समन्ततः ।
स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ॥ ४२
तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनाम् ।
कस्य त्वमसि का चासि किं च भीरु चिकीर्षसि ॥ ४३
साब्रवीद्दाशकन्यास्मि धर्मार्थं वाहये तरीम् ।
पितुर्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः ॥ ४४
रूपमाधुर्यगन्धैस्तां संयुक्तां देवरूपिणीम् ।
समीक्ष्य राजा दाशेयीं कामयामास शंतनुः ॥ ४५
स गत्वा पितरं तस्या वरयामास तां तदा ।
पर्यपृच्छत्ततस्तस्याः पितरं चात्मकारणात् ॥ ४६
स च तं प्रत्युवाचेदं दाशराजो महीपतिम् ।
जातमात्रैव मे देया वराय वरवर्णिनी ।
हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ४७
यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसेऽनघ ।

972* इत्युक्त्वा सा महाभागा तत्रैवान्तरधीयत ।
— a) S संगया (for तथैवं). — d) K3 स ययौ; S प्रय°. Ś1 सदा (for प्रति).

38 a) N (except Ś1) सु; T G च (for स्व-). Ñ1.3 V1 Dn D1 -पुरीं (for -पुरं). T G यात्वा. — b) Ñ2.3 D (except Da1 D3.4) °पुरोपमां; Ñ3 °गृहोपमं; V1 °पुरोत्तमां. — c) K1 समृद्धं सर्वकामानां. — d) Ś1 K1 मेने ह्यात्मा°; Ko 2–4 Ñ2.3 V1 B D (except D5) मेने सोऽत्मा°; S मेने चात्मा°. Ñ1 मनसात्मानमेव वा. — e) M पौरवस्तु. — After 38e, K3 Dn ins.:

973* राज्यार्थमभयप्रदम् ।
गुणवन्तं महात्मानं.

— f) G3 M6–8 °भिषे°.

39 a) Ś1 Ko.1.3.4 Ñ1.3 V1 B5 पौरान्स शं°; K3 T2 G3.4.5 पौरवः शं°; D1 पौराः स शं°; M (except M5) पौरांश्च शं°. — After 39, D4 (marg. *sec. m.*) S ins.:

974* तथावृत्तसमाचारस्तथाधर्मस्तथाश्रुतः ।
पुत्रो देवव्रतो नाम शंतनोरधिको गुणैः ।
सर्वास्त्रेष्वभ्यनुज्ञातः पार्थिवेष्वितरेषु च ।
गुणैर्विशिष्टो बहुभिः पुत्रो देवव्रतोऽभवत् ।

[ (L. 2) Cf. 1. 93. 44a and 44d. D4 M6–8 धीमान् (for नाम). — (L. 3) D4 °ष्वप्यधिज्ञा°; T2 G (except G3.8) °षु च निष्णात ; M5 6 °ष्वप्यभिज्ञा°. ]
— After the above S ins. an additional colophon (*Adhy. no.* T1 94; T2 44; G M5.6.8 45, M7.8 40)

40 Before 40, S ins. वैशं°. — d) G (except G3) M °र्यैतुलवि°.

42 b) Ñ1.3 S वनं (M वने) नृपः (Ñ1.3 ततः; M5 वने). — c) Ś1 K1 transp. स and ददर्श. S (except G1.3) ततः (for तदा). — d) Here and below a few MSS. दास- for दाश-. G3 M (except M5) देववर्णिनीं.

43 a) S °च्छत्ततो राजा. — b) B5.6 D4 कन्यामायत°; T1 M कन्यां कमल°. — c) Ś1 K3 त्वमिति. K4 G1 वा (for का). K3 B (except B5) Da D1.4 G2.4 चासि; K4 G3 कासि. — d) S किं च ते ह चिकीर्षितं.

44 a) Ko °कन्याहं; B5 °कन्येति. — b) B D1.4 धर्मार्थे. K3 तरं; Ñ V1 B (except B1) D (except D5) तरिं; G3 तरान्; M प्लवं. — After 44, S reads 46ab.

45 Before 45, Ñ3 V1 ins. वैशं° उ°. — a) S °धैस्तु (M5 *sup. lin.* 5 °श्च). — b) S तां युक्तां. — d) Ñ1 प्रेषयामास.

46 S reads 46ab after 44. — a) S ज्ञात्वा च पि° (T1 °त्वापि पि°). — Ñ1.3 V1 B Da D2 om. 46cd. — c) Ś1 K1 तदा (for ततस्). — d) K (except K1) D (Da D2 om.) सोऽत्मका°. — After 46, D4 marg *sec. m.* ins.:

975* इच्छामि दाशदत्तां मे सुतां भार्यामनिन्दिताम् ।

47 a) S संभ्रमात्स°. — D3 om. 47cdef. — Before 47cd, T2 G1.2 ins. दाशराजः. — c) K4 °मात्रापि देया हि; S याचमानाय वै दे°. — Before 47ef, Ko ins. दाश उ°. — f) Ś1 T1 M5 नरेश्वर; V1 B D2.4 M6–8 जनाधिप

48 a) S (except G3.8) यदि मां. — b) S °यसे नृप — d) Ko मे विभो; K3 मेऽनघ; K4 मेऽव्रतः; Ñ3 मे मत ; Da1 मे मतं; D5 मे नृप; M पार्थिव. T G समयं प्रति(T1 G1 °त्य)पद्यसे.

49 a) S ततो दास्यामि राजेन्द्र. — b) Ś1 कन्या

सत्यवागसि सत्येन समयं कुरु मे ततः ॥ ४८
समयेन प्रदद्यां ते कन्यामहमिमां नृप ।
हि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ॥ ४९
शंतनुरुवाच ।
त्वा तव वरं दाश व्यवस्येयमहं न वा ।
तव्यं चेत्प्रदास्यामि न त्वदेयं कथंचन ॥ ५०
दाश उवाच ।
स्यां जायेत यः पुत्रः स राजा पृथिवीपतिः ।
दूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव ॥ ५१
वैशंपायन उवाच ।
कामयत तं दातुं वरं दाशाय शंतनुः ।
ीरजेन तीव्रेण दह्यमानोऽपि भारत ॥ ५२

स चिन्तयन्नेव तदा दाशकन्यां महीपतिः ।
प्रत्ययाद्धास्तिनपुरं शोकोपहतचेतनः ॥ ५३
ततः कदाचिच्छोचन्तं शंतनुं ध्यानमास्थितम् ।
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ॥ ५४
सर्वतो भवतः क्षेमं विधेयाः सर्वपार्थिवाः ।
तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ।
ध्यायन्निव च किं राजन्नाभिभाषसि किंचन ॥ ५५
एवमुक्तः स पुत्रेण शंतनुः प्रत्यभाषत ।
असंशयं ध्यानपरं यथा मात्थ तथास्म्युत ॥ ५६
अपत्यं नस्त्वमेवैकः कुले महति भारत ।
अनित्यता च मर्त्यानामतः शोचामि पुत्रक ॥ ५७
कथंचित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम् । C. 1. 4029 B. 1. 100. [illegible] K. 1. 107. 67

मामहं; Ko.1 °मेनामहं; B D2.6 °मेतामहं (B5 °मेता॰ मां); S तव कन्यामिमां.
50 M3 om. 50ab. Ś1 K1 S om. उवाच. — a) K (except K1) B1.3 D2.4.5 T2 G1.3.4.5 श्रुत्वा ते (K3 D2.5 वचनं दा°; G3 श्रुत्वा तु वाक्यं दाशस्य. — b) Ko.4 Ñ 1 B1.3 D (except Da) तव (for न वा). S (M3 om.) व्यवसायो भविष्यति.
51 Ś1 K1 S om. उवाच (M3 om. the ref.). D5 दाशराजोवाच. — a) K3.4 Ñ3 योस्यां. K3 पुत्रस्ते (for यः पुत्रः). T1 योस्यां दासोथ स पुमान्; T2 G3-5 योस्यां जातोथ स पुमान्; G1.2 योस्यां जातो यश्च (G2 ह्यथ) पुमान्; M2.3 योस्यां जातस्तव सुतः. — b) K1 Ñ2.3 B D (except D5) G3 °पते; M त्वदनंतरः. — M3 om. 51cd. — d) S (M3 om.) भारत (for पार्थि°).
52 Ś1 K1.3 D5 [illegible] om. उवाच (G3 om. the ref.). — a) K3 V1 B3 नाकामयत्तदा दा°. — c) S शरीरजमसह्यं तं. — d) D1 पार्थिवः (for भार°). S दीप्यमानमधारयत्.
53 a) T G1.3 M3 संचिंत°. Ś1 K Ñ3 D1.5 [illegible] तां (for तदा). — c) Ś1 K D2.3 M6-8 प्रत्याया° (K3 D5 °त्यगा°). S हस्तिन°. — d) Ś1 मोहो°; Ko शोकेन महता तदा; Ñ1 B D G4 कामो°.
55 Before 55, T2 ins. देवव्रतः; G3 देवेंद्रः. — a) S सर्वेश्व. — b) Ñ3 वशास्थाः. S सर्वे शत्रवः. — After 55ab, S ins.:
976* [illegible] कस्माद्राजशार्दूल शोचंस्तु परिदह्यसे ।
[ G2 कस्मात्त्वं; G3.6 अकस्मा°. T1 शोचंस्त्वं. G3 M परितप्यसे. ]
— c) Ś1 K1 2 B1(m as in text).6 इव (for इह). — d) B3.6 D2.4 अभि(B6 °नु)शो°. — e) Ñ3 Dn D1.5 मां (for किं). S कस्मान्न भुंक्षे (G1.3 °क्ष्वे; G3 भुङ्क्ष्व) राजंस्त्वं (M3 न शृणोषि कुतो राजन्). — f) S न किंचिदभि(T2 G4 °पि)भाषसे (M3 त्वं च किंचन भाषसे). — After 55, Dn D2.4 (both marg. sec. m) S ins:
977* न चाश्वेन विनिर्यासि विवर्णो हरिणः कृशः ।
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्यां हि तत्र वै ।
[ (L. 1) S च निर्या°. Posterior half = 1. 1. 91d. ]
D2 (marg. sec. m.) S cont.:
978* वैशंपायनः ।
स तं काममवाप्ये वै दाशकन्यां प्रतीदृशम् ।
विवृतं नाशकत्तस्मै पिता पुत्राय शंसितुम् ।
56 a) Ko.4 S (except M2.3) [illegible] (for स). — Before 56cd, G4.5 ins. शंतनुः. — c) K3 ध्यानगतं; Ñ V1 B1 Dn D1.5 °परो; S महाप्राज्ञ. — d) Ñ3 यत्त्वमात्थ. Ko.2 D5 तथास्म्यहं; K1 B3 °था स्मृतं; B1.3 Da D1 °था शृणु. V1 Dn यथावत्स तथा शृणु; B6 यथा मामात्थ तच्छृणु; T G M3 6-8 यथैवात्थ (G3 यदेवार्थ; M2.6-8 यत्त्वयोक्तं) तथैव तत् (G2 च); M3 त्वयोक्तं सत्यमेव तत्.
57 Before 57, G3 ins. शंतनुः. — After 57ab, V1 B [illegible] (except D5) ins.:
979* शस्त्रनित्यश्च सततं पौरुषे पुर्यवस्थितः ।
[ Dn °पे पर्यव°. ]
— c) K3 Ñ1.2 V1 B3 5 D (except D5) T G3.5 M °त्यतां. B3.6 Dn D1 च लोका°; M सारभूतां. — d) Ñ2 V1 B [illegible] (except D5) अनुशो°; T G3 मत्वा शो°; M

त्यजेच्छब्दं तथाकाशः सोमः शीतांशुतां त्यजेत् ॥ १७
विक्रमं वृत्रहा जह्याद्धर्मं जह्याच्च धर्मराट् ।
न त्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथंचन ॥ १८
एवमुक्ता तु पुत्रेण भूरिद्रविणतेजसा ।
माता सत्यवती भीष्ममुवाच तदनन्तरम् ॥ १९
जानामि ते स्थितिं सत्ये परां सत्यपराक्रम ।
इच्छन्सृजेथास्त्रींल्लोकानन्यांस्त्वं स्वेन तेजसा ॥ २०
जानामि चैव सत्यं तन्मदर्थं यदभाषथाः ।
आपद्धर्ममवेक्षस्व वह पैतामहीं धुरम् ॥ २१
यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत् ।
सुहृदश्च प्रहृष्येरंस्तथा कुरु परंतप ॥ २२
लालप्यमानां तामेवं कृपणां पुत्रगृद्धिनीम् ।
धर्मादपेतं ब्रुवतीं भीष्मो भूयोऽब्रवीदिदम् ॥ २३
राज्ञि धर्मानवेक्षस्व मा नः सर्वान्व्यनीनशः ।
सत्याच्च्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते ॥ २४
शंतनोरपि संतानं यथा स्यादक्षयं भुवि ।
तत्ते धर्मं प्रवक्ष्यामि क्षात्रं राज्ञि सनातनम् ॥ २५
श्रुत्वा तं प्रतिपद्येथाः प्राज्ञैः सह पुरोहितैः ।
आपद्धर्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च ॥ २६

इति श्रीमहाभारते आदिपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

तथा) Ñ3 Dn1 G6 उन्मत्ता — c) K0 3 Ñ B D (except D5) G6 तथाकाश — d) S (except T2 G3 6) चन्द्र (for सोम) Ñ1 शीत तथा (for शीता°)

18 a) S transp विक्र° and वृत्र° — d) K1 B3.6 Da2 D4 G3.6 M6-8 व्यवस्येय (K1 °य, M6 °ह) — After 18, D4 (marg) S ins

1030* तत्र जानन्यथा कार्यं लोकानामपि संक्षये ।
अमरत्वस्य वा हेतोस्त्रैलोक्यसदनस्य वा ।

[ (L 2) T1 °क्यस्य धनस्य, G2 M6-8 °क्यस्य नदस्य ]

19 Before 19, D4 (marg) S ins वैश°, D4 cont उवाच — ab) B D2 4 च (for तु) S त(M6 8 अ)थोक्त्वा माता तु° धर्मज्ञेन महात्मना — c) G1 पुत्र (for भीष्म) — d) S पुनरेवाभ्यभाषत (T1 °रेव ब्रवीदिद, M6 °रेवा ब्रवीद्वच) — After 19, S (except T1 G6 M8 8) read (with v l) 21ab for the first time (cf v l 21)

20 T1 G3 6 (1 hapl) om 20 Before 20 D4 marg ins सत्यवत्युवाच — ab) K1 सत्यवता वर S (T1 G3 6 om) जानामि त्वयि धर्मज्ञ सत्य सत्यवतां वर (M सत्यपराक्रम) — c) G3 त्रैलोक्य, M6-8 (by transp) लोकांस्त्रीन् K0 इच्छया सत्यजेल्लोकान् — d) T2 G1 2 4 च (for त्व) Ś1 K1 कर्मणा (for तेज°)

21 T2 G1-3 M6-8 repeat here 21ab (cf v l 19), M2.8 repeat (with v l) 21ab consecutively — a) B (except B5) Dn1.n3 D3 G2 चैव; M6 8 चैन K2 4 ते; B5 तु (for तन्) Ś1 K0-2 D5 °मि ते स्थितिं (K1 °त) सत्ये (K0 धर्मे) S (T2 G1-3 M6-8 all first time, M8 second time) अनुजानामि तत्सर्वं (G6 M2.8 सर्वं तत्; M6-8 सत्य सं). — b) Ś1 K Ñ3 2 D (except D2 4) मदर्थे Ñ1 3 G D (except D2 4 5) यच्च भाषित — c) Ś1 K1 3 °द्धर्ममवेक्ष्यैव, K0 3 4 °मवेक्ष्येम (K0 °मा), Ñ1 °द्धर्मे त्ववेक्ष्येह, Ñ3 3 D (except D2 4) °द्धर्मं त्वमावेक्ष्य (D1 °क्ष्ये) — d) Ñ3 B D2 4 वहैता महतीं धुर, D6 मां वहैतां महीं धुर

22 a) D6 न ते कुलस्य तन्तुश्च, S यथा तु न कुल° — b) S (except G3) लोकश्च — c) S (except T1) सकामा वै (G6 °मास्ते) (for प्रहृ°) — d) S (except T1) तथा त्वं कर्तुमर्हसि — After 22, D4 (marg) S ins

1031* आत्मनश्च हितं तात प्रियं च मम भारत ।

After the above, S reads an additional colophon Adhy no T1 99, T2 49, G M 50 (G4 51)

23 Before 23 D4 (marg) S ins वैश°, D4 cont उ° — a) S तां तु लालप(M °प्य)तीं (G3 लोलवतीं) दृष्ट्वा — b) K3 °वर्धिनीं, B3 6 T2 G1 4 °गाधिनीं — c) Dn धर्मोपेतं ब्रुवतीं तां — d) K (except K3) भूयो भीष्मो (by transp) S भीष्मो वचनमब्रवीत्

24 Before 24 D4 marg ins भीष्म उ° — a) Ñ राजधर्मान्, S क्षत्रधर्मं — b) M8 सर्वं Ś1 त्रिनेत्र°; K1 M6 विनी°; B3m च मीनद ; G1 M2 विना° M7 8 वनी° G3 मा न सर्वावनीनश — cd) S धात्रे मतस्याहु° क्षत्रियो (G1.4 °या ; G2 °य) परमो (M °म) ह्री (M2.8 स्तूपि, M6 स्तूपीन्; M7 8 स्तूपीन्)

25 a) T2 G (except G2) M8 सतानो — b) प्राप्नुनरेव हि — c) Ś1 K1-3 D2 स ते धर्मं, S क्षात्र° — d) S क्षत्रियाणां पुरातन

26 a) K0 Da त्व (for त) Ñ3 B D प्रतिपद्यस्व — c) M (except M8) °र्मेषु कु° — d) Ś1 K1

## ९८

भीष्म उवाच ।
ामदग्न्येन रामेण पितुर्वधममृष्यता ।
ृद्धेन च महाभागे हैहयाधिपतिर्हतः ।
ातानि दश बाहूनां निकृत्तान्यर्जुनस्य वै ॥ १
ुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता ।
नेर्दग्धं क्षत्रमसकृद्रथेन जयता महीम् ॥ २
ुवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना ।
त्रेःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ ३
ातः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः ।

उत्पादितान्यपत्यानि ब्राह्मणैर्नियतात्मभिः ॥ ४
पाणिग्राहस्य तनय इति वेदेषु निश्चितम् ।
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः ।
लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ॥ ५
अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा ।
ममता नाम तस्यासीद्भार्या परमसंमता ॥ ६
उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतां सोऽन्वपद्यत ॥ ७
उवाच ममता तं तु देवरं वदतां वरम् । C. 1. 4181 B. 1. 104. 11 K. 1. 113. 11

---

ोकधर्मं; Ñ1 'धात्रीं; D2 T2 G 'सत्वं.

Colophon om. in S. — *Sub-parvan:* Ko.3 Ñ1.2 V1 B5 संभव. — *Adhy. name.* K3.4 सत्यवतीवाक्यं; Ñ1.2 V1 भीष्मसत्यवतीसंवादः. — *Adhy. no.* (figures, words or both): Ko 99; Da1 100, Dn2 102; D2 101. — *S'loka no.:* Dn 26. — *Aggregate s'loka no.:* Dn2 4169.

### 98

1 K1 T1 G1 M om. उवाच; T2 G2-5 om. the ref. — b) S निशम्य वचनं (T2 G1 M3.5 निधनं) पितुः. — After 1ab, D4 (marg.) S ins.:

1032* राजा परशुहस्तेन,

completing the line with 1d, which is followed by 1c. — c) D4 (marg.) S महाप्राज्ञे (D4 'ज्ञि; T1 'ज्ञैर्). B D (except D5) राजा परशुना पूर्वं. — After 1c, D4 (marg.) S ins.:

1033* हैहयस्य महात्मनः ।
[ D4 T1 हैहय'. ]

— d) Ś1 K1 S (except T1 M6-8) हैहया'. — Ñ1.2 om. 1cd. — After 1, N (except Ñ1.2) M6-8 read (with v. l.) 5cd, Dn M6-8 repeating the line in its proper place.

2 b) Ko Da S (except M2) विमुंचता; B5 वियुंजता. — c) S क्षत्रमेकेन (M6-8 क्षत्रियकुलं). — d) K1 S रामेण ज'.

3 c) S रोषेण (G1 M6-8 रामेण) (for पृथि'). — d) S 'या मही. — After 3, K4 Ñ2 Dn ins.:

1034* एवं निःक्षत्रिये लोके कृते तेन महर्षिणा ।

4 a) D5 संभूय साध्वीभिः; S संभूय संभूय (M6-8 च वर्धितं क्षत्रं). — b) Ś1 K D5 ततस्ततः (for सम'). — d) Ñ3 B D (except D5) 'र्वेदपारगैः; S 'णेऽस्य इति श्रुतिः.

5 ab) B6 Da1 D1.5 G1-3 Cd पाणिग्रहस्य. Ko T2 G2.4.5 तनया. Ko निश्चयः; Ñ3 'श्चयं; T2 G3.4.5 'ताः. M पाणी गृहीतुः पुत्रेति वेदे विकथितं भृशं. — d) B1 m.3 Da2 G1.3 M6-8 ब्राह्मणास्ताः. — Ñ1.2 om. 5ef; N (except Ñ1.2) M6-8 read 5ef after 1; Dn M6-8 repeat it here. — e) M3 लोकेप्याच'. N (except Ñ1.2; but incl. Cd) M6-8 (the three latter with Dn for the first time) लोकस्य (K2-4 Da1 Dn 'स्या; D3 लोक आ) चरितो धर्मः; T1 लोकोप्याचरता दृष्टः. — f) Ñ3 B1 m.3 5 Da पुनर्भुवि. Dn D1.4 M6-8 (with Dn for the first time) तेनास्ति किल दुश्चरः. — After 5, K3.4 Ñ2 B D T2 ins.:

1035* ततः पुनः समुदितं क्षत्रं समभवत्तदा ।
इमं चैवात्र वक्ष्येऽहमितिहासं पुरातनम् ।

[ (L. 1) K4 'भवन्महत्. — (L. 2) K4 D1 इदं. K3.4 चैव तु (K3 चैवात्र) वक्ष्यामि इति'. ]

6 a) S अथोचथ्य (G2 'त्य). — b) Ś1 आसीदृषिश्च बुद्धिमान्; S 'द्धीमान्महानृषिः. — cd) S भार्या च ममता नाम बभूवास्य महात्मनः. Here and below G2 (several times) reads मरता for ममता.

7 a) S उचथ्यस्य. — b) S 'धा यो दिवौ'. — d) Ñ1.2 सोभ्यप'; Ñ3 B D (except D5) अन्व'; S सोभ्यमन्यत (T1 (before corr.) G3 M2 (*sup. lin.*) 'नंदत). Cd cites अन्वपद्यत (as in text).

8 a) Ś1 K D2.5 वरवर्णिनी; B3.6 'तां वरा. — After

अन्तर्वत्नी *अहं भ्रात्रा ज्येष्ठेनारम्यतामिति ॥ ८
अयं च मे महाभाग कुक्षावेव बृहस्पते ।
औतथ्यो वेदमत्रैव षडङ्गं प्रत्यधीयत ॥ ९
अमोघरेतास्त्वं चापि नूनं भवितुमर्हसि ।
तस्मादेवंगतेऽद्य त्वमुपारमितुमर्हसि ॥ १०
एवमुक्तस्तया सम्यग्बृहत्तेजा बृहस्पतिः ।
कामात्मानं तदात्मानं न शशाक नियच्छितुम् ॥ ११
संबभूव ततः कामी तया सार्धमकामया ।
उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत ॥ १२
भोस्तात कन्यस वदे द्वयोर्नास्त्यत्र संभवः ।
अमोघशुक्रश्च भवान्पूर्वं चाहमिहागतः ॥ १३
शशाप तं ततः क्रुद्ध एवमुक्तो बृहस्पतिः ।
उतथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ॥ १४
यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति ।
एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि ॥ १५
स वै दीर्घतमा नाम शापादृषिरजायत ।

---

8ab, G1 6 M8 ins ममता — c) Ś1 K1 2 °वंशीत्यह, K0 4 N3 B D °ली त्वह, K3 °ली ह्यह, Ñ °वर्तिन्यह, S °घस्यस्मि ते (G3 त्वद्) Ñ1 2 भर्त्रा, Ñ3 भ्रात, B4 भ्रातु — d) M मिथ (for इति) B3 तव ज्येष्ठस्य धीमत, D5 °नान्यत्र रम्यता, T1 G1-3 °न रमता मयि

9 a) K0 स्वयमेव (for अयं च मे) Ś1 Ñ1 2 महाभाग, D5 M8 3 महाभागे — b) Ś1 च मे (for एव) — After 9ab, M6-8 read 12ab — cd) K0 एष, Ñ3 B D (except D5) अपि (for एव) S औतथ्यो गर्भ आधत्ते षडङ्ग वेदमुत्तम

10 b) N3 B D (except D5) द्वयोर्नास्त्यत्र (B1 orig 5 °स्त्येव) संभव (=13b) — c) K4 Ñ1 2 D (except D4 5) °गते त्वद्य (D2 काले), S °गते कार्ये (M8 3 विधे काले) — d) D1 corrupt, S यथा युक्त तथा कुरु

11 Before 11, S ins वैश° (M8 भीष्म) — a) Ñ B3 T1 G1 3 M8 तदा, T2 G2 4 6 M8 3 °था (for °था) — b) Dn D1 बृहस्पतिरुदारधी (≈1 71 8d) — c) K3 4 G3 कामात्मा स, Cd as in text महामापि (M8 °न) (for तदा) — d) D4 निगृहितु S स(G2 4 5 स्वा, M8 सो)°मानं सो(G2 4 5 M8 ना)भ्यधारयत

12 a) K3 N Dn D4 स (for स) M स(M8 4 स)बभूवैव धर्मात्मा — b) Ñ3 सकामया, M बृहस्पति — c) N1 3 T G M8 5 तत्तेज, B3 5 6 D1 M8 3 तद्रेत — d) B3 M स गर्भ प्रत्य(M सम)भाषत, D2 स च गर्भोऽभ्यभा°, G6 गर्भस्थो ह्यभ्यभा°

13 Before 13 M ins गर्भ — a) Ś1 K2 4 D2 भो तात Ś1 कन्यसवादे, K1 कमह वदे, K2 एवधा स वदे, K3 4 N2 B D मा गम काम, Ñ1 3 कन्यस मृदि S कनीयस्तात मैवेह — b) Ñ1 2 Da Dn D1 इह, N3 एक (for अत्र) K1 [illegible] D2 4 5 नास्त्यन्तरमिह द्वयो, S समवो विद्यते द्वयो — c) K3 4 Ñ2 B D अल्पा(B1 6 D4 °द्यो)वकाशो भगवन् (K4 गर्भस्थ D5 त्वगमत्), S अमोघशुक्रस्त्व चापि(G3 चासि) K4 transp 13d and the second half of line 1 of 1036* — d) K4 स्थित (for °गत) — After 13 K3 4 Ñ2 B D ins

1036* अमोघरेताश्च भवान्न पीडां कर्तुमर्हति ।
अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पति ।
जगाम मैथुनायैव ममतां चारुलोचनाम् ।
शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनि ।
पद्भ्यामारोधयन्मार्गं शुक्रस्य च बृहस्पते ।
स्थानमप्राप्तमथ तच्छुक्र प्रतिहत तदा ।
पपात सहसा भूमौ तत क्रुद्धो बृहस्पति ।

[(L 1) K4 D5 °शुक्रश्च Da D1 2 °मर्हसि K4 B (except B1) Da D4 पीडां कर्तुं न मेऽर्हसि, K4 मा पीडां कुरु मो विभो D5 repeats 13d for the second half — (L 4) K4 स गर्भस्थो महामुनि — (L 5) K3 4 Ñ2 B D5 6 °म(B1 5 6 °मा)वारय°, Da °मरोधय D4 °मवाप्य तं° N3 स शुक्रस्य, Ba 3 6 D2 4 5 शुक्रस्य स — (L 6) D5 reads this line in marg sec m K4 अफल (for अथ तत्) Dn D1 2 रेत (for शुक्र) B1 4 6 D4 5 तत (for तदा) — (L 7) K3 4 B D4 ततोऽक्रुध्यद्बृ° ]

14 Before 14 T G1 5 6 M8 3 ins वैश — D5 transp 14ab and 14cd, ins the line त दृष्ट्वा etc between them (see below) — ab) K1 स शशाप K4 पुन, T2 G3 6 च (for त) K3 Ñ2 B D (for D5 see above) त (K3 Da1 Dn1 तद्) दृष्ट्वा पतित शुक्र (K3 भूमौ) शशाप स (K3 by transp स शशाप) रुषान्वित — cd) T G उचथ्य° M पुत्र भ्रातुरुचथ्यस्य गर्भस्थं भग°

15 Before 15 T1 G1 6 M ins बृहस्पति T1 transp 15 and 16 — a) Ñ2 3 B D (except D5 D1) यस्मात्त्व — c) K1 शुभे (for सति) Ś1 K0 3-4 Ñ1 3 D1 2 5 °भूतहितेप्सिते — c) G3 च तस्मात्व G6 यदा तस्मात् — d) K0 3 D5 प्रपत्स्यसे (K0 °ते); Ñ3 भवे; Cd as in text.

16 B5 transp 15 and 16, and transp 16ab and

:स्पतेर्बृहत्कीर्तिर्बृहस्पतिरिवौजसा ॥ १६
पुत्राञ्जनयामास गौतमादीन्महायशाः ।
पेरुतथ्यस तदा संतानकुलवृद्धये ॥ १७
भिमोहाभिभूतास्ते पुत्रास्तं गौतमादयः ।
ष्ठे समुद्रे प्रक्षिप्य गङ्गायां समवासृजन् ॥ १८
स्मादन्धश्च वृद्धश्च भर्तव्योऽयमिति स्म ते ।
न्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् ॥ १९
ऽनुस्रोतस्तदा राजन्प्लवमान ऋषिस्ततः ।
गाम सुबहून्देशानन्धस्तेनोडुपेन ह ॥ २०

तं तु राजा बलिर्नाम सर्वधर्मविशारदः ।
अपश्यन्मज्जनगतः स्रोतसाभ्याशमागतम् ॥ २१
जग्राह चैनं धर्मात्मा बलिः सत्यपराक्रमः ।
ज्ञात्वा चैनं स वव्रेऽथ पुत्रार्थं मनुजर्षभ ॥ २२
संतानार्थं महाभाग भार्यासु मम मानद ।
पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि ॥ २३
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ।
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ॥ २४
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह । C 1 4212 B 1 104 45 K 1 113.46

---

ᶜᵈ also — ᵃ) S ततो दीर्घ° — B₃ om 16ᶜ–17ᵈ — ᶜ) K (except K₁) B₃ D₂ °स्कीर्तिर्, M °स्तेजा — After 16, Dn D₄ (marg) S ins

1037* जात्यन्धो वेदवित्प्राज्ञः पत्नीं लेभे स्वविद्यया ।
तरुणीं रूपसंपन्नां प्रद्वेषीं नाम ब्राह्मणीम् ॥,

while K₃ ins lines 1 3 of 1038*

17 B₃ om 17 (cf v 1 16) S transp 17ᵃᵇ and 17ᶜᵈ — ᵇ) Ś₁ सहसत्स (for महा°) — ᶜ) S °रुचथ्यस्य महान् — K₃ ins lines 1 3 of the foll passage after 16 and lines 4–8 after 18ᵃᵇ Ñ₃ B₃ Dn D₁ ₄ ins the passage after 17 K₄ B₁ ₃ ₆ Da D₂ ₃ (om line 4), after 18ᵃᵇ

1038* धर्मात्मा च महात्मा च वेदवेदाङ्गपारगः ।
गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः ।
प्रावर्तत तथा कर्तुं श्रद्धावांस्तमशङ्कया ।
ततो वितथमर्यादं तं दृष्ट्वा मुनिसत्तमाः ।
क्रुद्धा मोहाभिभूतास्ते सर्वे तत्राश्रमौकसः ।
अहोऽयं भिन्नमर्यादो नाश्रमे वस्तुमर्हति ।
तस्मादेनं वयं सर्वे पापात्मानं त्यजामहे ।
इत्यन्योन्यं समाभाष्य ते दीर्घतमसं मुनिम् ।

[ (L 1) After line 1 D₄ (suppl fol sec m) ins passage No 55 of App I — (L 4) K₄ दृष्ट्वा, B (except B₃) D₂ ₄ तथा (for ततो) K₄ तमृषिं शंसितव्रत — (L 5) K₃ मोघात्तमोभि°, K₄ क्रुद्धात्मानो हि D₂ ऋषिमध्य वनौकसः D₂ क्रुद्धा धर्ममजानन्त सूक्ष्मं नैश्रेयसं परं ] — A passage of 19 lines given in App I (No. 56) is ins in Dn (Dn₁ om lines 18–19) after 1038*, in D₄ (suppl fol sec m) after line 1 of the latter interpolation, in S, after 17

18 ᵃ) K₁ च, K₃ वै; K₄ त, B D₁ T₁ G₃ तु (for ते) G₂ ₄ ₅ °मोहपरीतास्ते — ᵇ) Ś₁ K₁ ₂ ₄ Da₁ T₁ G₃ ते₁ K₀ ₃ वै (for त) — After 18ᵃᵇ, K₄ B₁ ₃ ₆ Da D₂ ₃ ins 1038*, K₃ lines 4–8 of that passage (cf v 1 17) — ᶜ) K₀–₃ समुद्रे, D₂ समूहे, S समूढे T₂ सक्षिप्य K₃ ₄ Ñ₃ B D (except D₂) बद्धोडुपे परि(B₃ विनि)क्षिप्य — ᵈ) K₁ समवा°, G₃ समुपा°

19 ᵃ) K₀ Dn₁ G₃ तस्मादयश्च, K₂ ₃ B D₁ ₃ यस्मा°, K₄ Ñ₃ Da Dn₂ n₃ D₁ ₄ कस्मा° — ᵇ) B₃ Da स ह, D₂ स्मृते, T G स वै — After 19ᵃᵇ, S ins.

1039* कर्मण्यथ तत क्रूरे तेषा बुद्धिरजायत ।

— ᶜ) Ś₁ Da क्रुद्धा (for क्रूरा) — ᵈ) G₃ M₅–₈ ततो, G₃ यथा (for अथो) K₀ Da M₃ गृह

20 ᵃ) K₀ स्रोभायत तदा Ñ₃ B D (except D₂) विप्र (for राजन्) — ᵇ) K₄ प्लवमान्स K₃ ऋषिस्तदा; Ñ₃ B D (except D₂) यदृच्छया, S मुनिस्तदा — ᶜ) K₀ ₂ ₄ D₂ स, T₂ G (except G₃ ₆) च (for सु) — ᵈ) D₂ महद् (for अन्धस्) K₃ तेन प्लवेन, Ñ₁ तेनोद्भवेन

21 ᵃ) T₂ G (except G₁ ₃) बली — ᵇ) K₀ सर्वशास्त्र°, K₃ B Dn D₁ ₄ °विदां वर, K₄ D₂ °भृतां वर — ᵈ) K₀ ₂ D₂ T₁ G₁ ₃ ₆ स्रोतसो° A few MSS °भ्यास°

22 ᵇ) T₂ G (except G₁ ₃) बली — ᶜ) Ś₁ चैव, Ñ B₁ ₃ Da₂ Dn₁ n₃ D₁ ₃ चैव S वर वव्रे — ᵈ) Dn D₁ पुत्राथ, M °र्थी K₃ B₁ ₂ ₃ D₂ ₄ T₁ G₃ M (except M₃) °जपभ, Ñ₃ Da °जाधिप (Ñ₃ °प), B₆ °जेश्वर, Dn D₁ भरतर्षभ (D₁ °भ), G₁ ₂ ₄–₆ °जर्षभ — After 22, D₄ (marg) S ins

1040* तं पूजयित्वा राजर्षिर्विश्रान्तं मुनिमब्रवीत् ।

23 Before 23, D₄ (marg) S ins राजा, D₄ cont. उवाच — ᵇ) K₃ Ñ₃ D₂ S (except M₅ ₈) भार्याया

24 Before 24, D₄ (marg) T₁ G₁ M (except M₃) ins भीष्म, D₄ cont उवाच — ᵃ) G₁ ₂ तु (for स) S (except G₆) तेनर्षि (for तेज°) — ᵇ) Ñ तत् (for

46 45 स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥ २५

तस्यां काक्षीवदादीन्स शूद्रयोनावृषिर्वशी ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥ २६

काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममैत इति वीर्यवान् ॥ २७

नेत्युवाच महर्षिस्तं ममैवैत इति ब्रुवन् ।
शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ॥ २८

अन्धं वृद्धं च मां मत्वा सुदेष्णा महिषी तव ।
अवमन्य ददौ मूढा शूद्रां धात्रेयिकां हि मे ॥ २९

ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
बलिः सुदेष्णां भार्यां च तस्मै तां प्राहिणोत्पुनः ॥ ३०

तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।
भविष्यति कुमारस्ते तेजस्वी सत्यवागिति ॥ ३१

तत्राङ्गो नाम राजर्षिः सुदेष्णायामजायत ।
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ॥ ३२

जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ।
एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ॥ ३३

इति श्रीमहाभारते आदिपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

स) $T_1$ $G_{3.5}$ तथा, $T_2$ $G_1$ M तदा (for ऋषि) — $^c$) $Ñ_3$ तस्मै स स्वां तदा भार्यां

25 $K_{0.3}$ (haplo) om 25 — $^a$) $G_3$ विप्र (for वृद्ध) $Ś_1$ $K_1$ $G_6$ तु (for च) S (except $G_6$) स दृष्ट्वा — $^d$) S (except $G_{3.6}$ $M_3$) तत ($M_3$ *sup lin* as in text)

26 $^a$) $K_1$ S (except $G_1$) कक्षी°, $B_{1.3}$ $D_{a1}$ $D_{1.3}$ काक्षी° $K_{0.2}$ $D_5$ च (for स) — $^b$) Dn $D_1$ तदा, $D_3$ बली (for वशी)

27 $^a$) $K_1$ वक्षी°, $K_4$ $B_{3.6}$ $D_{a1}$ $D_{1.2.4.5}$ काक्षी°, S (except $M_{6.3}$) कक्षी° $D_4$ $G_6$ सर्वांस्तान् — $^b$) $D_4$ दृष्ट्वा पुत्रान्, S साङ्गान्वेदान् ($G_3$ साङ्ग वेद) $Ś_1$ $K_1$ अधीतिन, $K_{0.2.4}$ $D_3$ S (except $G_6$) अधीयत — After $27^{ab}$ S (except $G_6$) ins

1041* मुदा च तान्वशी राजा दृष्ट्वा कक्षीवदादिकान् ।

— $^c$) $Ñ_{1.2}$ °च वचन — $^d$) Ñ B D (except $D_{2.3}$) इमे (for एते) $Ñ_{1.2}$ $B_{1.3}$ D (except $D_{2.3}$) इति भारत

28 $G_3$ om $28^{ab}$ — $^b$) $K_3$ $Ñ_3$ B $D_4$ इमे, $K_4$ एतान् (for एते) $K_2$ $D_6$ ब्रुव (for ब्रुवन्) $K_0$ $Ñ_{1.2}$ Da Dn $D_{1.2}$ S ($G_3$ om) ममेम ($K_0$ S °मैत) इति चाब्रवीत् — $^c$) S (except $T_2$) हि मे पुत्रा (for मया हीमे) — $^d$) $K_{3.4}$ S (except $G_1$) कक्षी°, $D_{a1}$ $D_{1.2.4}$ काक्षी°

29 $^a$) $K_3$ B $D_{2.4}$ ज्ञात्वा, Ñ Da Dn $D_1$ S दृष्ट्वा (for मत्वा) — $^c$) S (except $G_6$) प्राहिणोद्वमानान्मे — $^d$) $Ś_1$ D (except $D_{2.4.5}$) मम, T $G_{1.3}$ M नृप (for हि मे)

30 $^a$) $Ś_1$ transp पुन and त, B (except $B_3$) $D_{2.4}$ राजा त $K_3$ Da ऋषिमुत्तम — $^c$) $T_2$ $G_{2.4.5}$ बली $Ñ_{1.2}$ $B_1$ Da Dn $D_{1.5}$ स्वां भार्यां, $B_{3.5.6}$ $D_{2.4}$ भार्यां तां ($D_4$ स्वां) — $^d$) $K_0$ $Ñ_{1.2}$ B (except $B_3$) Dn $D_{1.2.4}$ तस्मै स, $K_3$ (by transp) तां तस्मै $K_0$ $Ñ_3$ $B_{3.5.6}$ T G (except $G_6$) $M_{6.3}$ तत, $B_1$ Da $M_3$ तदा (for पुन)

31 $^a$) S (except $G_6$) अङ्गे ($T_2$ $G_{2.5}$ °ग) दीर्घतमाश्च स ($T_2$ $G_{1.2.4.5}$ °मास्तस्या) — After $31^{ab}$, T G (except $G_6$) $M_3$ ins दीर्घतमा ($T_2$ ऋषि) $D_4$ repeats $31^{cd}$ (with v l) after $32^{ab}$ (q v) — $^c$) $B_1$ D (except $D_{4.5}$) °ष्यति कुमारास्ते — $^d$) $B_1$ D (except $D_{4.5}$) तेजसादित्यवर्चस (see below)

32 Before 32, $T_2$ ins भीष्म — $B_1$ Dn $D_{1.5}$ om 32 — $^a$) $K_3$ तस्य, $D_2$ °ता, T $G_{3.5}$ M °तो (for °ङ्गो) $G_2$ ततोऽङ्गनामा — $D_4$ repeats $31^{cd}$ after $32^{ab}$ (v l °ष्यति कुमारास्ते तेजसादित्यवर्चस) — $K_{3.4}$ B (except $B_6$) D ins after $32^{ab}$ (D4, after the repetition of $31^{cd}$)

1042* अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामकथिता भुवि ।
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ।
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च स्मृताः ।[5]
एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः ।

[ (L 1) $K_4$ $B_3$ अङ्गवङ्गकलिङ्गाश्च $D_5$ पुड्रसुह्मौ तथा सुता $K_{3.4}$ $D_3$ च तत्सु°, $B_6$ तत सु° — $K_3$ (hapl.) om from स्वनाम° (line 2) up to प्रख्याता (line 5) — (L 3) $K_4$ $B_{3.5}$ अङ्गस्याङ्गा समाख्याता वङ्गा—स्मृता — (L 4) $K_4$ $B_{3.5}$ °विषयाश्चैव कलिंगे च निवेशिता $D_{2.5}$ विश्रुत (for स स्मृ°) — (L 5) $K_4$ $B_{3.5}$ Da $D_{2.4}$ विख्याता — (L 6) $K_{3.4}$ $B_{3.5}$ $D_5$ पुरा बलेर्वंश° (by transp) $K_{3.4}$ $B_{3.5}$ $D_3$ प्रथित परमर्षिज ]

33 $^b$) $Ñ_2$ Da महारथा — After $33^{ab}$, S (except $G_6$) read 1.99.1–2 — $G_{3.5}$ $M_3$ om. $33^{cd}$ — $^d$) $Ñ_2$

# ९९

भीष्म उवाच ।
भरतवंशस्य हेतुं संतानवृद्धये ।
ष्यामि नियतं मातस्तन्मे निगदतः शृणु ॥ १
ह्मणो गुणवान्कश्चिद्धनेनोपनिमन्त्र्यताम् ।
चित्रवीर्यक्षेत्रेषु यः समुत्पादयेत्प्रजाः ॥ २
वैशंपायन उवाच ।
तः सत्यवती भीष्मं वाचा संसज्जमानया ।
विहसन्तीव सव्रीडमिदं वचनमब्रवीत् ॥ ३
सत्यमेतन्महाबाहो यथा वदसि भारत ।
विश्वासात्ते प्रवक्ष्यामि संतानाय कुलस्य च ।
न ते शक्यमनाख्यातुमापद्धीयं तथाविधा ॥ ४
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं परा गतिः ।
तस्मान्निशम्य वाक्यं मे कुरुष्व यदनन्तरम् ॥ ५
धर्मयुक्तस्य धर्मात्मन्पितुरासीत्तरी मम । C. 1. 4228 B. 1. 105. 6 K. 1. 114. 23

---

मातर् (by transp.).

Colophon. — *Major parvan:* $T_2$ G M संभव° (for दि°). — *Sub-parvan:* Ko.2-4 $Ñ_{1.2}$ $V_1$ $T_1$ संभव. — *Adhy. name:* $K_3$ भीष्मवाक्यं; $K_4$ दीर्घतमोपाख्यानं; 1.2 $V_1$ भीष्मसत्यवतीसंवादः; $G_1$ अंगोत्पत्तिः. — *Adhy.* o. (figures, words or both): Ko 100, $B_2$ $D_3$ 102; a1 101; Dn2 103; $T_1$ 100; $T_2$ 50; G M 51 ($G_2$ 52). — *S'loka no.:* Da1 46; Dn 52; $M_3$ 53. — *Aggregate loka no.:* Dn2 4231.

## 99

1 S read 1-2 after 1. 98. $33^{ab}$ ($G_6$ om. 1-2). — $Ś_1$ $K_1$ om. उवाच; S om. the ref. — a) S ($G_6$ om.) तस्मात् (for पुनः). $B_5$ $G_1$ भारतवंशस्य. — b) S ($G_6$ om.) पुनः (for हेतुं). — cd) S ($G_6$ om.) हेतुं वक्ष्याम्यहं सम्यक्त्रिर्दोषं नात्र संशयः.

2 For S cf. v. l. 1. 1. — b) S ($G_6$ om.) धर्मेना($G_2$ र्मेणा-; $M_{6-8}$ °र्मो वा)प्युपमंत्र्यतां. — cd) S ($G_6$ om.) °वीर्यभार्यायां योस्यासु°.

3 $Ś_1$ $K_1$ $D_5$ S om. उवाच. — After वैशं°, S ins. a passage of 36 lines given in App. I (No. 57). — b) S वै ($T_2$ सा) (for सं-). — c) $G_{1-3}$ सव्रीळा.

4 Before 4, S ins. सत्यवती. — a) S यदात्थ प्रमदां ($T_1$ $M_{6-8}$ °दाः) प्रति. — After $4^{ab}$, $D_3$ marg. (*sec. m.*) ins. 1045* (cf. v. l. 5). — d) = $32^b$. $Ñ_{1.2}$ D (except $D_{2.4.5}$) नः; $G_6$ ते (for च). — After $4^{cd}$, S reads an additional colophon (*adhy. no.:* $T_1$ 101; $T_2$ 51; G M 52 ($G_6$ 53)) and then ins.:

1043* वैशंपायनः ।
एवमुक्त्वा ततो भीष्मं तं माता प्रत्यभाषत ।
रोचते मे वचस्तुभ्यं ममापि वचनं शृणु ।

— e) $Ñ_2$ Da मयाख्यातुम्. — f) $K_4$ $Ñ_2$ $B_{1.5}$ D (except $D_{2.4.5}$) आपद्धर्मं तथाविधं.

5 a) K (except $K_1$) Da त्वं ह्येव. — b) Da $D_5$ सत्यः. $Ś_1$ K $Ñ_{1.2}$ Da $D_5$ तपो महत्; S गतिः प्रभो ($G_3$ च मे) (for परा गतिः). — After $5^{ab}$, S ins.:

1044* यत्त्वं वक्ष्यसि तत्कार्यमस्माभिरिति मे मतिः ।

— c) $Ñ_2$ B D (except $D_5$) सत्यं मे. $G_{3.4}$ °न्निशम्यतां वाक्यं. — d) $Ñ_{1.2}$ विधत्स्व; $G_6$ वद त्वं (for कुरु°). — Ko.3.4 Da1 $D_{1.4}$ (marg.) ins. after 5: $D_3$ marg. *sec. m.*, after $4^{ab}$:

1045* यन्मे बाल्ये पुरा वृत्तं कुमार्यास्तच्छृणुष्व मे ।

— S ins. after 5: $D_3$(marg. *sec. m.*).4 (marg.) cont. after the above:

1046* शृणु भीष्म वचो मह्यं धर्मार्थसहितं हितम् ।
न च विस्रम्भकथितं भवान्सूचितुमर्हति ।
यस्तु राजा वसुर्नाम श्रुतस्ते भरतर्षभ ।
तस्य शुक्रादहं मत्स्या धृता कुक्षौ पुरा किल ।
मातरं मे जलाद्धृत्वा दाशः परमधर्मवित् । [5]
मां तु स्वगृहमानीय दुहितृत्वे ह्यकल्पयत् ।

[ (L. 1) $G_3$ धर्मार्थकुशलं. — (L. 3) $T_2$ $G_{3-5}$ भरतर्षभः. — (L. 4) $D_{2.4}$ तस्य शुक्रं धृतवती मत्सी कुक्षौ पुरा किल. — (L. 6) T °त्वेभ्यकल्पयत्; $M_{6-8}$ °त्वेप्यक°. ]

6 a) G °युक्तः स ($G_6$ स्व-). $Ñ_{1.2}$ $B_{1.6}$ D (except $D_5$) धर्मार्थे; S धर्मेण. — b) Ko.1.3 M तरो ($M_3$ °रा); $B_3$ Da1 $D_5$ तरिर्; $T_1$ तदा. $Ñ_1$ °रासीन्नरोत्तम; $Ñ_2$ °रासीर्वरो मम; $B_6$ यमुनायां कुरूद्वह; $T_2$ G पिता चासीत्ततो ($G_{2.4.5}$ °स्तदा) मम. — c) $K_1$ $D_1$ तां; $D_5$ $G_3$ स (for सा). $D_3$m (*sec. m.*) तरी (for अहं). $Ñ_{1.2}$ $T_2$ $G_{1.2}$ °यौवनं; $G_3$ °यौवना. — $B_6$ ins. after 6: $B_5$, after 7:

1047* अतारयं जनं तत्र पारगामिनमञ्जसा ।
[ $B_5$ अवतार्य जलं वीर पार°. ]

7/23 सा कदाचिदहं तत्र गता प्रथमयौवने ॥ ६
अथ धर्मभृतां श्रेष्ठः परमर्षिः पराशरः ।
आजगाम तरीं धीमांस्तरिष्यन्यमुनां नदीम् ॥ ७
स तार्यमाणो यमुनां मामुपेत्याब्रवीत्तदा ।
सान्त्वपूर्वं मुनिश्रेष्ठः कामार्तो मधुरं बहु ॥ ८
तमहं शापभीता च पितुर्भीता च भारत ।
वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ॥ ९
अभिभूय स मां बालां तेजसा वशमानयत् ।
तमसा लोकमावृत्य नौगतामेव भारत ॥ १०

मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः ।
तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः ॥ १
ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम् ।
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥ १
पाराशर्यो महायोगी स बभूव महानृषिः ।
कन्यापुत्रो मम पुरा द्वैपायन इति स्मृतः ॥ १३
यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः ।
लोके व्यासत्वमापेदे कार्ष्ण्यात्कृष्णत्वमेव च ॥ १
सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः ।

7 a) Ś1 धर्मवता, Ñ1 3 D (except D3 4) °विदा — b) Ko 3 D2 M3 तत, K3 B2 3 5 M5–8 तर, Ñ1 G3 तदा, B8 (m) Da2 D1 3 तरि, T1 तट S तात (for धीमान्) — After 7, B3 ins 1047* (cf v l 6)

8 b) Ko T2 G2 4 5 वच, T1 G1 3 M (except M5) मुनि (for तदा) D3 मामुपायाब्रवी°, M5 त्वय माममवी° — c) Ś1 K1 सा वमानो G6 M5 महाभाग (for मुनि°) — d) Ś1 विदुर, K1 विधु° (for मधु°) K3 D (except D3 4 5) S (except G6) वच (for बहु) — After 8, D3 (marg) S ins

1048* उक्त्वा जन्मकुल मह्य नासि दाशसुतेति च ।
[ D4 श्रुत्वा, M3 5 उक्त G1 6 °कुले G6 चैव (for मह्य) D4 नेय, T1 G1 नासीत् G1 3 4 5 °कुलेति च, G6 °सुता इति ]

9 c) Ñ2 युक्ता, T1 G6 M5–8 चाह, G3 त्वाह (for उक्ता) T2 G1 2 4 5 आलोक्य च दिशश्चाह (G2 °श्चाग), M5 वरै सुदुर्लभै(sup lin असुलभै)श्चोक्त्वा (sup lin °श्चाह) — d) S प्रत्याख्यातु प्रचक्रमे — T G2 4 5 M ins after 9 D4 marg after 10ab G3 after 10

1049* प्रेक्ष्य तास्तु महाभागाम्पर पारे ऋषीन्स्थितान् ।
यमुनातीरविन्यस्तान्प्रदीप्तानिव पावकान् ।
पुरस्तादरुणश्चैव तरुण सम्प्रकाशते ।
येनैषा ताम्रवर्णेव द्यौ कृता प्रविजृम्भिता ।
उक्तमात्रो मया तत्र नीहारमसृजत्प्रभु । [5]
पराशर सत्यधृतिर्द्वीपे च यमुनाम्भसि ।
[ (L 4) G4 5 द्यौर्भू(G4m °र्भू)ता — (L 5) D4 T1 G3 उक्तमात्रे ]

10 T M om 10 — D4 marg ins 1049* after 10ab (cf v l 9) — c) K3 लोकमावार्य D2 तमसावृत मालोक्य — After 10, G3 ins 1049*

11 b) M5 मम महावत्त — cd) Ko transp शुभ and इम S (except G6) °स्स वै तदा (M5 6 °न्महामुनि) — D4 (marg) T (T1 om lines 4–5) G3 M5 6 ins after 11 G1 2 4 5 M6–8, after 12

1050* कन्यात्व च ददौ प्रीत पुनर्विद्वास्तपोधन ।
तस्य वीर्यमह दृष्ट्वा तथा युक्त महात्मन ।
विस्मिता व्यथिता चैव प्रावासात्मानमेव च ।
वसिष्ठेन समानीता याज्ञवल्क्यादयो द्विजा ।
कृत्वा विवाह मे सर्वे प्रतिजग्मुर्यथागतम् । [5]
ततस्त्वरा महात्मा स कन्यायां मयि भारत ।
महर्षेऽजनयत्पुत्र द्वीप एव पराशर ।
[ (L 1) M पुन (M5 6 तत ) प्रीतो ददौ वि°. — G1 2 4 5 transp lines 2–3 and 4–5 — After line 1, M ins

1051* हिम चैवासृजद्धीमान्द्वीप च यमुनाम्भसि ॥
and after line 5

1052* तत पिता वसुश्चैव पितरश्च तपोधना ।]

12 T G3 M om 12 — b) K3 Ñ1 2 3 G (G3 om) गर्भ उ(K3 Ñ3 G2 मु)त्सृज्यतामय — Dn3 om 12c–13b — After 12, G1 2 4 5 M6 8 ins 1050* (cf v l 11) while Ko 3 4 Da2 D4 (marg ) ins

1053* एवमुक्त्वा गत सोऽथ ऋषि परमधर्मवित् ।
ममापि प्रसवो जातस्तत्क्षणादेव भारत ।

13 Dn3 om 13ab (cf v l 12) — b) Ś1 K1 2 4 G1 बभूव स (by transp ), Ko G3 सबभूव Ś1 K1 2 4 D5 महामुनि , G6 °मति — After 13ab, Ś1 K2 read 14cd, G6 1054* (cf v l 15). — cd) T1 G1 repeat and G2 4 read 13cd after 1054* (cf v l 15) M6–8 कन्यागर्भो Ñ1 ममोत्पन्नो (for मम पुरा) Ñ B D (except D5) G2 M3 श्रुत , G1 स्मृति (for स्मृत )

14 G3 (haplo) om 14–15ab — b) K4 भगवा मुनि — Ś1 K2 read 14cd after 13ab — d) D4 कृष्णत्वमात्र च; G6 °मागत

नियुक्तो मया व्यक्तं त्वया च *अमितद्युते ।
ातुः क्षेत्रेषु कल्याणमपत्यं जनयिष्यति ॥ १५
हि मामुक्तवांस्तत्र सरेः कृत्येषु मामिति ।
सरिष्ये महाबाहो यदि भीष्म त्वमिच्छसि ॥ १६
व ह्यनुमते भीष्म नियतं स महातपाः ।
वेचित्रवीर्यक्षेत्रेषु पुत्रानुत्पादयिष्यति ॥ १७
हर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत् ।
धर्ममर्थं च कामं च त्रीनेतान्योऽनुपश्यति ॥ १८
अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।
कामं कामानुबन्धं च विपरीतान्पृथक्पृथक् ।
यो विचिन्त्य धिया सम्यग्व्यवसति स बुद्धिमान् ॥ १९
तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः ।
उक्तं भवत्या यच्छ्रेयः परमं रोचते मम ॥ २०
ततस्तस्मिन्प्रतिज्ञाते भीष्मेण कुरुनन्दन ।
कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम् ॥ २१
स वेदान्विब्रुवन्धीमान्मातुर्विज्ञाय चिन्तितम् ।
प्रादुर्बभूवाविदितः क्षणेन कुरुनन्दन ॥ २२
तस्मै पूजां तदा दत्त्वा सुताय विधिपूर्वकम् । C. 1. 4246 B. 1. 105. 25 K. 1. 114. 46

---

15 G3 om. $15^{ab}$ (cf. v. l. 14). — $^{b}$) K (except K1) B D2.4.5 G3 तपसा; M7 तेजस्वी. — Dn T G1.2.4.5 M ins. after $16^{ab}$: G6, after $13^{ab}$:

1054* सद्योत्पन्नः स तु महान्सह पित्रा ततो गतः ।
[ M8 स सद्य एव चोत्पन्नः स°. G2.4.5 घनं; G6 यतो (for ततो). ]

— After the above line, T2 G1 repeat and G2.4 read $13^{cd}$. — $^{c}$) G3 स्नेहयुक्ते मयाप्युक्तं. — $^{d}$) Ś1 K Ñ3 चाप्यमितद्युते (K0.4 °तिः); Ñ1.2 B Dn D2.4 चाप्रतिमद्युते (Dn D3m °तिः); Da वा प्रतिपद्यते; D5 M8 चाप्य(M8 चैवा)मरद्युते; T G M6-8 चैवामितद्युते. — $^{e}$) M6-8 भ्रातृक्षेत्रेषु. D4 क्षेत्रे तु; T G M6.8 क्षेत्रे च (G6 तु).

16 $^{a}$) K1 तस्य; K4 तात (for तत्र). G2 स तु मामब्रवीत्तत्र. — $^{b}$) K4 Dn D5 कृत्स्नेषु; G6 M6 कार्येषु. — $^{c}$) S (except G6 M6) महाभाग (G2.3 °गं). — After 16, M8 ins.:

1055* तव चानुमते काममाप्यामुत्पादयेत्प्रजाः ।

17 $^{a}$) K0.2 तथाप्यनु°. Ś1 K0-3 वीर (for भीष्म). — $^{b}$) K3 S (except G6 M6.8) नियतः. K2.4 सुमहा°; B8 स महायशाः (m as in text). — $^{c}$) T2 G2.4.5 विचित्रवीर्ये. S (except M8) -क्षेत्रे वै (G6 तु). — $^{d}$) M8 यदा त्वं पुत्र मन्यसे.

18 Before 18, K4 B1 D (except D2.4) ins. वैशं° उ°; B3 भीष्म उ°; S (except G3) वैशं°. — After वैशं°, S ins.:

1056* इत्युक्तमात्रे भीष्मस्तु मूर्ध्न्यञ्जलिकृतोऽब्रवीत् ।
[ G1.2.4.5 °जलिमतो (G1 °धा-) वदन्; M8 कृतांजलिपुटोऽ°. ]

— G3 ins. after $19^{cd}$; G1.2.6, after 19: M6.8, after 1056*:

1057* सर्ववित्सर्वकर्ता च यथेतत्तत्करोति च ।

— $^{a}$) G6 M कीर्तनात् (M8 *sup. lin.* as in text). G3 तस्मिन् (for तस्य). — $^{b}$) S (except G6) वंच मातुस्तथा(T2 वर्धमानस्तदा; G3.4 मातुस्तदा)ब्रवीत्. — After $18^{ab}$, D4 (marg.) S ins.:

1058* देशकालौ तु जानामि क्रियतामर्थसिद्धये ।
[ T2 राजानं; G (except G6) जानासि. G6 °तामिह सि°. ]

— Before $18^{cd}$, Ñ1.2 ins. भीष्म उ°. K3 (? hapl.) om. $18^{d}$–$19^{c}$. — $^{d}$) B1.6 D4 °नेतानुपश्यसि (D4 °ति).

19 K3 om. $19^{abc}$ (cf. v. l. 18). — $^{ab}$) K0.2 अर्थं चार्थां°. G3 धर्मार्थं चानुबंधनं. M6.8 धर्मं धर्मानुबंधं चाप्यर्थमर्थानु°. — $^{c}$) Ś1 K1.2 हि (for च). — G3 ins. 1057* after $19^{cd}$ (cf. v. l. 18). — D4 (marg.) S (except G6) ins. after $19^{cd}$ (G3, after 1057*):

1059* शुभं शुभानुबंधं च तांश्चैव त्रिविधान्पुनः ।
[ T2 शुभस्य भावानुबंधांस्तांश्चैव; G3 अशुभाशुभानु°. ]

— $^{e}$) Ñ3 B D (except D5) धिया धीरो. — $^{f}$) G6 स बुद्धिमान्. — For $19^{ef}$, T2 G4.5 subst.:

1060* पुनः पुनर्यो विचिन्त्य धिया सम्यग्व्यवस्यति ।
स बुद्धिमान्मनुष्येषु स नरः कृत्स्नकर्मकृत् ।

G1.2.6 ins. 1057* after 19 (cf. v. l. 18).

20 $^{a}$) Ś1 D2.4 धर्मसंयुक्तं; M8 °कामं च. — $^{b}$) G1 शुभं चैव. — $^{d}$) K3 transp. रोच° and मम. Ñ3 B D (except D5) तन्मह्यं रोचते भृशं.

21 Before 21, B1 D ins. वैशं° उ°; S (except G6) वैशं°. — $^{b}$) M6.8 कुरुसंसदि. — $^{c}$) M6.8 माता (M8 *sup. lin.* काली as in text). — $^{d}$) K0.2 तं (K1 वै) द्विजं. M8(*sup. lin.*).8 मनसा समचिंतयत्. — After 21, S (except G3.6; M8 marg.) ins.:

1061* तस्याः स चिन्तितं ज्ञात्वा सत्यवत्या महातपाः ।

22 $^{ab}$) G6 विब्रुवाणोयं (for विब्रुवन्धी°). T G1-5 M स वेदान्प्र(G1 वेदान्प्रति-; G3 समेतान्प्र)ब्रुवन्सर्वान्कृष्णद्वैपायनः प्रभुः (G3 तदा). — $^{c}$) Ś1 Ñ Da S °बभूव विदितः

16 / 9 / 3 — 20 / 47 परिष्वज्य च बाहुभ्यां प्रस्रवैरभिषिच्य च ।
मुमोच बाष्पं दाशेयी पुत्रं दृष्ट्वा चिरस्य तम् ॥ २३
तामद्भिः परिषिच्यार्तां महर्षिरभिवाद्य च ।
मातरं पूर्वजः पुत्रो व्यासो वचनमब्रवीत् ॥ २४
भवत्या यदभिप्रेतं तदहं कर्तुमागतः ।
शाधि मां धर्मतत्त्वज्ञे करवाणि प्रियं तव ॥ २५
तस्मै पूजां ततोऽकार्षीत्पुरोधाः परमर्षये ।
स च तां प्रतिजग्राह विधिवन्मन्त्रपूर्वकम् ॥ २६
तमासनगतं माता पृष्ट्वा कुशलमव्ययम् ।
सत्यवत्यभिवीक्ष्यैनमुवाचेदमनन्तरम् ॥ २७
मातापित्रोः प्रजायन्ते पुत्राः साधारणाः कवे ।
तेषां पिता यथा स्वामी तथा माता न संशयः ॥ २८
विधातृविहितः स त्वं यथा मे प्रथमः सुतः ।
विचित्रवीर्यो ब्रह्मर्षे तथा मेऽवरजः सुतः ॥ २९
यथैव पितृतो भीष्मस्तथा त्वमपि मातृतः ।
भ्राता विचित्रवीर्यस्य यथा वा पुत्र मन्यसे ॥ ३०
अयं शांतनवः सत्यं पालयन्सत्यविक्रमः ।
बुद्धिं न कुरुतेऽपत्ये तथा राज्यानुशासने ॥ ३१
स त्वं व्यपेक्षया भ्रातुः संतानाय कुलस्य च ।
भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ ॥ ३२
अनुक्रोशाच्च भूतानां सर्वेषां रक्षणाय च ।
आनृशंस्येन यद्ब्रूयां तच्छ्रुत्वा कर्तुमर्हसि ॥ ३३

---

(G3 °भ्राता सत्यवती, M8 as in text), K3 °बभूव प्रकट, D5 °बभूव स ऋषि — d) B3 D2 कुरुसत्तम; S (except G1 6) °सत्तदि

23 a) K0 3 Ñ1 B3 D (except D2 4 5) S तत (for तदा) K (except K1) Ñ2 3 B D (except D5) कृत्वा, M8 [ऽ]कार्षीत् (M8 sup lin as in text) — b) K0 पुत्राय — c) M8 त परिष्वज्य (for परि° च) M8 मातासौ (M8 sup lin बाहुभ्यां as in text) — d) N (except Dn1 n2) T2 G3-6 प्रस्र(Ś1 °स्रा)वैर् Ś1 अभिनिन्य च, K1 °नद्य त, K2 °षिच्य त, K3 Ñ B3 6 D (except D3 4 5) T2 G (except G6) M8 अभ्यर्षिचत, T1 अभिषिंचयत् K0 त (for च) — f) D5 चिरेण D (except D2 4 5) तु, G6 वै (for तम्)

24 a) T M अभि (for परि) K1 अभिषिक्ताता (sic), K3 4 G3 4 5 अभिषिच्यार्तां, D3 G3 °षिच्यार्तौ (G3 °ता), G1 अभ्यर्षिचता — b) Ś1 अभ्यभाषत (sup lin °वाद्य च), G6 अभिसृत्य च — d) Ś1 K D5 G6 M8 व्यासो (G6 कृष्ण) द्वैपायनोऽब्रवीत्

25 Before 25, D5 marg ins व्यास उ°. B repeats 25ab after 37 — a) Ñ1 वद त्व (for भव°) — d) K0 1 तव प्रिय (by transp)

26 Before 26 D5 4 (marg) ins वैश° उ° — a) K0 1 B1 तदा (for ततो) — b) G6 पुरोधाय परतप — d) M8 मन्त्रपूर्वं यथाविधि — After 26 Dn S ins

1062* पूजितो मन्त्रपूर्वं तु विधिवत्प्रीतिमाप स ।

[ T2 G6 पूजित मन्त्रपूर्वेण विधिना प्रीतमानस ]

27 cd) Ñ1 B3 1 D (except D2 4) अथ (for अभि) D4 T1 एवम् (for एनम्) D4 T2 G3 एनम् (for इदम्) — M8 ins before 27cd M8 subst for it

1063* आचचक्षे क्रमेणास्मै तदर्थमभिचिन्तितम् ।

28 Before 28, B ins सत्यवती — a) S (except G6 M8 5) मातापितृभ्यां जायते — b) G6 कुले (for कवे) — c) B1 6 D2 4 यथा पिता (by transp)

29 ab) N (except Ś1) G1 4 Cd विधातृ° (G1 °ता) Ñ1 2 B3 6 D5 G3 M8 सत्य, Ñ3 सर्व (for स त्व) K3 पूर्वज, B6 विहित (for प्रथ°) T2 मे प्रियपुत्रक M8 यथासि पितुस्तात तथासि मम धर्मत — T2 om 29cd-30 — cd) G3 4 5 (? hapl) om 29cd — Ś1 K1 3 4 विप्रर्षे D2 महर्षे B1 G3 सुत, D2 स्मृत M8 विचित्रवीर्यश्चाप्येव यथा त्वमसि मे सुत — M8 repeats 29 with v l of M8

30 T2 om 30 (cf v l 29) — a) K0 B1 G1 तथैव, G6 यथा वै — b) Ś1 K1 Dn3 M8 5 त्वमसि — c) Ñ2 3 G1 भ्रातुर्विचित्र° — T1 G M8 5 read 31 after 30, the same MSS except G6 repeating it in its proper place

31 a) Ñ1 स्वय (for अय) — c) Ñ3 न बुद्धि (by transp) — d) Ñ3 राज्यानुपालने

32 M8 om 32 33 — a) Ś1 राज्ञ॰व्यपे°, Ś1 (sup lin) K2 4 सत्यव्यपे°, S (M8 om) सत्य चापे° (G6 सत्य व्यप°) — b)=4d K3 G6 तु, G1 न, G3 वै (for च) — c) D4 S (except G6, M8 om) °स्य वचनाच्चैव — d) B1 5 D4 त्व (for च) K1 3 4 T1 G1-4 M (M8 om) °गा-त्मम चानघ, T2 विनियोगान्ममानघ G6 °गाद्वचनान्मम

33 M8 om 33 (cf v l 32) — a) Ś1 K1 भीतानां G6 आतुणां — Ñ3 om 33c-36b — c) Ñ1 B D (except D5) M8 °शस्याच्च Da1 भूताना (for यद्°)

34 Ñ3 om 34 (cf v l 33) G6 reads 34 after

वीयसस्तव भ्रातुर्भार्ये सुरसुतोपमे ।
रूपयौवनसंपन्ने पुत्रकामे च धर्मतः ॥ ३४
योरुत्पादयापत्यं समर्थो ह्यसि पुत्रक ।
अनुरूपं कुलस्यास्य संतत्याः प्रसवस्य च ॥ ३५
व्यास उवाच ।
त्थ धर्मं सत्यवति परं चापरमेव च ।
था च तव धर्मज्ञे धर्मे प्रणिहिता मतिः ॥ ३६
स्मादहं त्वन्नियोगाद्धर्ममुद्दिश्य कारणम् ।
ईप्सितं ते करिष्यामि दृष्टं ह्येतत्पुरातनम् ॥ ३७
भ्रातुः पुत्रान्प्रदास्यामि मित्रावरुणयोः समान् ।
तं चरेतां ते देव्यौ निर्दिष्टमिह यन्मया ॥ ३८

संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः ।
न हि मामव्रतोपेता उपेयात्काचिदङ्गना ॥ ३९
सत्यवत्युवाच ।
यथा सद्यः प्रपद्येत देवी गर्भं तथा कुरु ।
अराजकेषु राष्ट्रेषु नास्ति वृष्टिर्न देवताः ॥ ४०
कथमराजकं राष्ट्रं शक्यं धारयितुं प्रभो ।
तस्माद्गर्भं समाधत्स्व भीष्मस्तं वर्धयिष्यति ॥ ४१
व्यास उवाच ।
यदि पुत्रः प्रदातव्यो मया क्षिप्रमकालिकम् ।
विरूपतां मे सहतामेतदस्याः परं व्रतम् ॥ ४२
यदि मे सहते गन्धं रूपं वेषं तथा वपुः । C. 1. 4266 B. 1. 105. 47 K. 1. 114. 69

---

30; T1 G1-3 M6-8 repeat 34 here. — b) T1 (second time).2 G1-3 (all five second time) M5.6-8 (the last three second time) भार्ये परमसंमते. — d) B3 M5.6-8 (the last three second time) भारत (M6 first time inf. lin. as in text); G3 (second time) पुत्रक (for धर्म°).

35 Ñ3 om. 35 (cf. v. l. 33). — a) S (except G6) तयोः प्रयच्छ पुत्रांस्त्वं. — c) S (except G6) अनुरूपान्. — d) D4 शंतनोः; Cd संतत्याः (as in text). K2 भूत्याः प्रभवस्य च; S तेजःप्रशम(G2.4.5 °श्रय)संयुतान्.

36 K1 S om. उवाच (G3.5 om. the ref.). Ñ3 om. $36^{ab}$ (cf. v. l. 33). — a) Da G3 सर्वं (for धर्मं). S चमे(M6-8 यथे)वेह (for सत्य°). — b) S (except G6) परं तत्त्वं प्रजासु च (G2.4.5 परावरं). — Before $36^{cd}$, G6 ins. व्यासः. — c) K1 Ñ1.2 B D (except D5) S तथा. K0.1 Ñ B D (except D5) तव महाप्रा(a few MSS. °प्र)ज्ञे; S हि (T2 G2.4.5 ·पि) ते वि(G1 सुवि-; G2.4.5 तव)निश्चित्य. — d) Ś1 K1 धर्मेण प्रहि(K1 °ति)ता मतिः.

37 ab) Ś1 तस्मात्त्वहं; K1 तस्माचहं (sic) S नियोगात्तव चैवाहमेतैरपि च कारणैः. — c) S (except M3.5) तत् (for ते). — d) Ś1 K1 दिष्टं; Ñ1 दृष्ट्वा. Ś1 K0.2.4 पुरातने; D (except D3.4.5) सनातनं; S पुरा मया. — After 37, S repeats $25^{ab}$.

38 ab) D2 T1 G3 M6-8 पुत्रं and समं. — c) Ś1 ते दिव्यं; G6 M3(sup. lin.).5 निर्दिष्टं. S (except G6 M3) व्रतं च चरितव्यं तु. — d) G6 M3(sup. lin.).5 मया संवत्सरं शुभं (G6 °भे).

39 a) M5 संवत्सराद्. K0 T1 °न्याय्यं. — d) Ś1 K1 मुपेयात्. S (for G6 see below) स्पृशते. G6 subst. for, M3 ins. before, and M5 ins. after $39^{cd}$:

1064* न हि मामर्हतः प्राप्तुमशुद्धे कोसलात्मजे ।

G1-3 M3 ins. after 39: G6 M5, after the above:

1065* एवं सत्यवती धर्मं परमं ज्ञातुमर्हसि ।
[ G2 अपरं; M3 परं त्वं. G3 परश्चैः संततम्°. ]

40 K1 D1 S om. उवाच. — a) K3 B3 G6 M6-8 प्रपद्येतां; K3 D2.5 T G1-3 M3.5 °द्येते. Ñ Dn D1 सद्यो यथा प्रपद्येत (Ñ2 °ते); G6 तथा प्रतिपद्येतां. — b) K2-4 Ñ3 D2.5 S देव्यौ (G2.4.5 भार्ये). B3 ते गर्भं त्वं तथा कुरु. — Dn S (except G6) ins. after $40^{c}$: D4, after 40 (as *one* line made up of the two halves, read in reverse order!):

1066* प्रजानाथा विनश्यति ।
नश्यन्ति च क्रियाः सर्वाः.

— d) K2-4 Ñ B3 D (except Da1 D5) G1.6 M3 देवता.

41 a) After कथं, K0 Ñ B1.2.6 Da Dn D1.4 T1 G1.2.6 M ins. च; K1-4 D5 हि; B5 D2 वा; T2 G2.4.5 तु. K0 G6 राज्यं (for राष्ट्रं). — b) Ś1 K D3 पाल(K0 कार)यितुं; T2 G2.4.5 रंज°. — c) G3 शीघ्रं गर्भं. G2.6 M3 निषिचस्व. — d) K0.2 Ñ B D भीष्मः संवर्ध°; K1 °स्तं पाल°.

42 Ś1 K1 S om. उवाच. — b) K0 Ñ1.2 Da D1 °कालिकः; Ñ3 D6 °कारिकं (D5 °कः). Dn D1 मया भ्रातुरकालिकः. — d) Ś1 K1 एतच्चास्याः प°; K0.2-4 D5 एतद्धि स्यात्प°; Ñ2 Da Dn D1 तयोरेतत्प°; S एतत्स्यात्परमं व्रतं (G6 एतद्धि स्यान्महत्तपः; M3 एतस्यात्परतरं व्रतं).

43 ab) Ś1 K1 यद्वि(K1 °दि) मे सहते गर्भं. K0.2 रूपं गंधं वेषं; G6 M3.5 वेषं रूपं गंधं (by transp.). T1

अथैव गर्भं कौसल्या विशिष्टं प्रतिपद्यताम् ॥ ४३
वैशंपायन उवाच ।
समागमनमाकाङ्क्षन्निति सोऽन्तर्हितो मुनिः ।
ततोऽभिगम्य सा देवी स्नुषां रहसि संगताम् ।
धर्म्यमर्थसमायुक्तमुवाच वचनं हितम् ॥ ४४
कौसल्ये धर्मतन्त्रं यद्ब्रवीमि त्वां निबोध मे ।
भरतानां समुच्छेदो व्यक्तं मद्भाग्यसंक्षयात् ॥ ४५
व्यथितां मां च संप्रेक्ष्य पितृवंशं च पीडितम् ।
भीष्मो बुद्धिमदान्मेऽत्र धर्मस्य च विवृद्धये ॥ ४६
सा च बुद्धिस्तवाधीना पुत्रि ज्ञातं मयेति ह ।
नष्टं च भारत वंशं पुनरेव समुद्धर ॥ ४७
पुत्रं जनय सुश्रोणि देवराजसमप्रभम् ।
स हि राज्यधुरं गुर्वीमुद्वक्ष्यति कुलस्य नः ॥ ४८
सा धर्मतोऽनुनीयैनां कथंचिद्धर्मचारिणीम् ।
भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा ॥ ४९

इति श्रीमहाभारते आदिपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

---

अथो (for तथा) T [illegible] (except G6) चय — c) K0.3 कौसि(K3 °शि)ल्या, K4 B (except B1) D (except D4 5) °श°, T1 कौरव्या — d) Ñ3 प्रतिपद्यते — After 43 D4 (marg) S (except M6-8) ins

1067* तस्य चापि दास पुत्रा भवितारो न संशय ।
गोप्तारः कुरुवंशस्य भवत्या शोकनाशनाः ।

— After the above, D4 (marg) [illegible] (except M6-8) ins 1069*

44 Ś1 K1 om उवाच; S om the ref — After वैश° उ°, N ins

1068* एवमुक्त्वा महातेजा व्यास सत्यवतीं तदा ।

D4 (marg) S ins after 1067* (M6 8, after 43) Dn, after 1068*

1069* शायने त्वद्य कौसल्या शुचिवस्त्रा स्वलंकृता ।

— a) Ñ3 [illegible] (except T1 G6) समागमनम् Ñ3 आकाङ्क्ष्यन्; Dn S °क्षेद् — b) K3 निशि (for इति) [illegible] इत्युक्त्वान्तर धीयत — c) G6 °गम्य सा देवीं, G6 M6 अभिगम्य तु सा देवी — d) K1 2 T सगता, G (except G6) सन(G3 °म)ता — e) K4 B2 6 Da1 Dn1 D2 5 G6 धर्मम् S (except G6) धर्मार्थकाम(M6 sup lin °र्थेन तु)संयुक्त (T3 G1 4 5 °सहित) — f) G6 M6 °न मिथ

45 a) K (except K1) B2,3 D (except D4 5) कौस(K0 °शि)ल्ये K0 D5 धर्मतत्त्व हि, K1 G6 °तन्त्रे यद्; Ñ1 °तन्त्राय; Ñ2 M6 °मन्त्रत्वाद्; B1 3 6 Da Dn D1 °तत्र त्वं; B2 °तत्त्वाद; D2 °तत्त्व हि; D6 M6 (sup lin as in text) °तन्त्रत्वाद्; M6 8 °तत्र च — b) K0 Ñ1 2 B D यद्ब्रवीमि K0 Ñ1 2 B D (except D4) तत् (for मे) M6 (sup lin as in text) 8 ब्रवीमि च [illegible] कामत — c) K2 4 C3 4 भारतानां Ś1 K1 समुच्छेदो; K0 कुल°; T2 G1 (sup lin as in text) 3 °च्छेदात्; M6 (sup lin as in text) 8 अभावोऽय — d) Dn1 (by corr) D2 मद्भाग्य°; G3 यद्भाग्य° M6 (sup lin as in text) 8

मतिमिच्छ शुभानने

46 b) M6 भर्तृवश — c) K0 भद्रे, K4 मे च; B D मह्य (for मेऽत्र) T1 धर्मभृतां श्रेष्ठ, T2 G1-4 M6 (sup lin) 6 8 बुद्धिमतां श्रेष्ठ, G6 M6 8 बुद्धिं ददौ भीष्मः (G6 पौत्रीं) — d) Ś1 धर्मस्यास्य; K0 2 °स्याय, K3 4 °स्यास्य, Ñ1 2 B D कुलस्यास्य, Ñ3 धर्मस्यार्थे T G1-4 M6 (sup lin) 6 8 कुरुते बुद्धिमुत्तमां, G6 M6 (orig) 8 वंशस्यास्य पुनर्भवे — After 46, K4 Ñ1 2 Da D4 (marg) ins

1070* अहं त्वामद्य वक्ष्यामि बुध्वा निखिलं भामिनि ।
श्रुत्वा तु तद्वच सुभ्रु कर्तुमर्हसि मान्यथा ।

47 a) K0 त्वदधीना, Ñ1 B D (except D4 5) T1 G1 3 6 M6 6 8 त्वद्य°, Ñ3 त्वया°; T2 G2 4 5 त्वया कार्या M6 त्वय्यधीना च सा बुद्धि° — b) K4 प्रतिज्ञात K3 4 D2 हि (for ह) Ñ3 B Da Dn D1 4 5 पुत्रि (Ñ3 °त्र) प्रापय (Da1 पुण्याज्ञापय) मा तथा (B1m मा शुच ; B3 4 5 मा तथा; D5 मेनघे); T G1 5 M6 (sup lin) 6-8 पुत्रार्थं (T1 G3 5 °हिं, T2 G2 4 °सु) मतिं कुरु; G6 M6 8 पुत्रमर्थं नान्यथा — d) Ś1 K1 पुनरेत, K4 °रेतद — After 47 G6 M6 8 ins

1071* गर्भं धारय कल्याणि देवरस्य महात्मन ।
[ G6 पुत्र जनय कल्या° ]

48 c) M6 (sup lin as in text) स ते पुत्रो [illegible] — d) Ś1 K1 ते (for स) T G1-5 M6 (sup lin) [illegible] उद्वहि(G1 3 °द्वरि)ष्यति धर्मेण ; G6 M6 8 धार्तराष्ट्री भारतीं — After 48 D4 marg ins

1072* एवमुक्त्वा [illegible] सा देवी स्नुषां सत्यवती तदा ।

49 Before 49 Ñ2 M6 ins वैश° उ° (M6 om. उ°) — a) M6 8 सा धर्मेणानु° — b) A few MSS [illegible] चारिणी — c) Ñ3 B3 5 D2 G2 4 5 M (M6 sup lin as in text) तदा; T2 द्विजान्

Colophon om in Da. — Major parvan: T G M [illegible]

## १००

वैशंपायन उवाच ।
ततः सत्यवती काले वधूं स्नातामृतौ तदा ।
संवेशयन्ती शयने शनकैर्वाक्यमब्रवीत् ॥ १
कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वानुप्रवेक्ष्यति ।
अप्रमत्ता प्रतीक्षैनं निशीथे *आगमिष्यति ॥ २
श्वश्र्वास्तद्वचनं श्रुत्वा शयाना शयने शुभे ।
साचिन्तयत्तदा भीष्ममन्यांश्च कुरुपुंगवान् ॥ ३
ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः ।
दीप्यमानेषु दीपेषु शयनं प्रविवेश ह ॥ ४
तस्य कृष्णस्य कपिला जटा दीप्ते च लोचने ।
बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत् ॥ ५
संबभूव तया रात्रौ मातुः प्रियचिकीर्षया ।
भयात्काशिसुता तं तु नाशक्नोदभिवीक्षितुम् ॥ ६
ततो निष्क्रान्तमासाद्य माता पुत्रमथाब्रवीत् ।
अप्यस्यां गुणवान्पुत्र राजपुत्रो भविष्यति ॥ ७
निशम्य तद्वचो मातुर्व्यासः परमबुद्धिमान् । C. 1. 4281 B. 1. 106. 8 K. 1. 115. 11

---

°भव° (for आदि°). — *Sub-parvan*. Ko.2–4 Ñ1.2 V1 T1 संभव. — *Adhy. name*. K3.4 व्यासनियोगः; Ñ1.2 सत्यवत्युपदेशः; G1 व्यासाभिगमनं. — *Adhy. no.* (figures, words or both): Ko 101; B1 D4 103; Dn3 104; T1 102; T2 52; G M 53 (G6 54). — *S'loka no.*: Da1 53; Dn 50; M3 66. — *Aggregate s'loka no.*: Dn3 4271.

## 100

1 Ś1 K1 [illegible] om. उवाच. — a) G6 M3(*sup. lin.* as in text).6 हृष्टा (for काले). — b) K1 G6 M5 सुप्तां; G3 मा° (for वधूं). T1 G (except G3) M3(*sup. lin.*).6–8 र्तौ तथा; M2.5 अलंकृतां. — c) T G (except G6) शयनं. — d) Ko Ñ B D (except D5) G6 M5 शनैर्वचनम° (Ñ3 सा पुनर्वाक्यम°).

2 a) MSS. indiscriminately कौसल्ये and कौश°. K3 ते चेत्; [illegible] देवि (M5 तेद्य). — b) Da त्वामम्बवे°; D5 वामुपवे°. S अद्य त्वानु(G6 स चाद्यानु; M5 स त्वाप्यानु)प्र° वेक्ष्यति (G6 M5 °प्रवेक्ष्यति). — c) B3 °मत्तां ऋतुमतीं; T2 G6 M (except M3) °मत्ताभिवीक्षेया. — d) N T1 निशीथे ह्या(D2 -ह्या)गमि°; T2 G2.4.5 °थे समुपे°; G1 °थे-न्यागमि°; G3 M3(*sup. lin.*).6–8 °थेस्यागमि°; G6 M3(orig.).5 निशायामागमि°.

3 a) K4 B3 तस्याः (for श्वश्र्वा.). S (for T2 see below) तु वचनं. T2 श्वश्रुवास्तु वचः श्रुत्वा. — b) K3 शयिता. A few MSS. शुभा. — c) T2 G2.4.5 चिंतयंती तदा; G6 M3(*sup. lin.* as in text).6 जगाम मनसा. — d) Ko.2 Ñ3 D4 T1 G1–3 M3(*sup. lin.*).6–8 कुरु-सत्तमान्; B D2 °नंदनान्; G6 M3(orig.).5 भरतांस्तथा.

4 G1.3.4.5 M3 (*inf. lin.*) ins. before 4: G6 M5–8 subst. for 4ab:

1073* ततः सुप्तजनप्राये निशीथे भगवानृषिः ।
[ G1.3.4–6 रात्रौ च (for निशी°). ]

— a) Ś1 K G1 ततोंबिकायाः. — b) K (except K3) G6 °वानृषिः. — d) Ko.2.4 Ñ B D Cd शरणं (D4 सदनं); T2 G2.4.5 निशायां (for शय°). Ś1 तां; K (except Ko) Ñ3 D5 G6 M6 तत् (for ह). — After 4, D4 (marg.) S ins.:

1074* सत्यवत्या नियुक्तस्तु सत्यवागृषिसत्तमः ।
जगाम तस्याः शयनं विपुले तपसि स्थितः ।
[ (L. 1) G3 °वानृषिस°. ]

D4 (marg.) G6 M5.6 cont.: T G1–4 M6–8 (om. lines 3–4) ins. after 5:

1075* तं समीक्ष्य तु कौसल्या दुष्प्रेक्ष्यमतथोचिता ।
विरूपमिति वित्रस्ता संकुच्यासीन्निमीलिता ।
विरूपो हि जटी चापि दुर्वर्णः पुरुषः कृशः ।
सुगन्धेतरगन्धश्च सर्वथा दुष्प्रधर्षणः ।
[ (L. 1) D4 G3.4 M6 °तथोचितं. — (L. 2) D4 °च्याक्ष्णी निमीलिते; T1 G1.2.5 M3 °च्यासीत्तरेश्वर. ]

5 ab) G3 तस्य दीप्तस्य. Ñ3 Da Dn1.n3 D5 T1 कपिलं जटां; G2.5 कलिला जटा. G6 M5.6 चक्षुषी (for लोच°). — c) Ś1 Ko.2 Ñ3 कद्रूणि; Cd बभ्रू°. S श्मश्रूणि चैव (G6 कद्रूणि चापि) पिंगानि. — d) G6 दृष्ट्वा साक्षि निमीलिता. — After 5, T G1–5 M6–8 ins. 1075* (cf. v. l. 4).

6 a) Ñ1.2 B D (except D5) तया सार्धं. — d) Ko.2 न शशाकाभि°.

7 a) Ñ1.2 B Da Dn D2.4 °मागम्य; D1 M3 (*sup. lin.*) °मालक्ष्य. — b) Ñ1.2 B D (except D5) पुत्रमुवाच

प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः ॥ ८
नागायुतसमप्राणो विद्वान्राजर्षिसत्तमः ।
महाभागो महावीर्यो महाबुद्धिर्भविष्यति ॥ ९
तस्य चापि शतं पुत्रा भविष्यन्ति महाबलाः ।
किं तु मातुः स वैगुण्यादन्ध एव भविष्यति ॥ १०
तस्य तद्वचनं श्रुत्वा माता पुत्रमथाब्रवीत् ।
नान्धः कुरूणां नृपतिरनुरूपस्तपोधन ॥ ११
ज्ञातिवंशस्य गोप्तारं पितॄणां वंशवर्धनम् ।
द्वितीयं कुरुवंशस्य राजानं दातुमर्हसि ॥ १२
स तथेति प्रतिज्ञाय निश्चक्राम महातपाः ।
सापि कालेन कौसल्या सुषुवेऽन्धं तमात्मजम् ॥ १३
पुनरेव तु सा देवी परिभाष्य स्नुषां ततः ।
ऋषिमावाहयत्सत्या यथापूर्वमनिन्दिता ॥ १४
ततस्तेनैव विधिना महर्षिस्तामपद्यत ।
अम्बालिकामथाभ्यागादृषिं दृष्ट्वा च सापि तम् ।
विषण्णा पाण्डुसंकाशा समपद्यत भारत ॥ १५

---

ह, T G M8 (orig ) 6 8 °मभाषत M8 (*sup lin* ) 5 स माता प्रत्यभाषत — c) Ś1 K1 6 B6 D1 अप्यस्या, D5 अथास्या, G6 M3 5 अप्यत्र Ś1 K0 2 4 B6 D5 G1 पुत्रो, G6 M3 5 तात — After 7, G6 (which om 8 10) ins

1076* इत्युक्त सोऽब्रवीन्मात कुमारो मातृदोषत ।
अन्धो नागायुतप्राणो भविष्यत्यम्बिकोदरात् ।

8 G6 (hapl ) om 8–10 — a) S (G6 om ) निशम्य वचन — b) Ñ1 2 B D (except D5) सत्यवतीसुत , S (G6 om ) परमधर्मवित् — c) S1 °द्रियज्ञानम्, Ñ3 °ज्ञानी — d) K3 स प्रचो°, T1 °दित

9 G6 om 9 (cf v 1 8) — c) Ś1 K1 3 4 D5 महावीर्यो महाभागो, B5 महाबाहुर्महा° — d) M7 °बुद्धिर्महात्मन

10 G6 om 10 (cf v 1 8) M8 3 om 10ab — a) K0 2 तस्य चैव — b) A few MSS भविष्यति Ñ1.3 B D (except D5) महात्मन — c) M8 (*sup lin*) 5 एव मातुश्च (M8 °स्तु)

11 a) G6 M1.3 निशम्य वचन तस्य — b) T G M6 3 माता वचनमब्रवीत् (G6 तन्माता पुनरम°), M8 5 स माता पुत्रमम° — S ins after 11ab D5 (om lines 1 2) after 12ab D1 (marg., om lines 1–3) after 12

1077* अलब्धलाभ पुत्रोऽयं यद्यन्धो वै भविष्यति ।
अस्य यशस्य गोप्तार सतां शोकविनाशनम् ।
तस्मादपरं पुत्र जनयान्य नराधिपम् ।
भ्रातुर्भार्यापरा चेयं रूपयौवनशालिनी ।
अस्यामुत्पादयापत्य मन्नियोगाद्गुणाधिकम् ।

[Before line 1, T3 G6 ins सत्यवती — (L. 2) T1 G1.2.6 M3.5 तस्य च° — (L. 3) D5 जनय त्वं; G6 °याद्य — (L. 4) G1 3 °परा चैव ]

— After 1077*, G6 M8 ins 1078* S om 11c–12b (G6 M8 om 11c–14d) — Before 11cd, Ñ3 ins सत्यवत्युवाच

12 S om 12ab (G6 M8 om 12) (cf v 1 11) — a) Ś1 K1 इति वंशस्य — b) Da1 Dn3 कुरूणां (for पितृ°) Ś1 K1 4 हर्षवर्धन — After 12ab, D5 (om lines 1–2) ins 1077* — After 12 D1 (marg om lines 1–3) ins 1077*

13 G6 M8 om 13 (cf v 1 11) — b) K0 3 Ñ1.3 B D (except D5) महायशा — G6 M8 ins after 1077* T3 G3 5 after 13ab D1 (marg, om lines 1–2) T1 G1 2 M5–8 after 14

1078* अम्बालिका समाधाय तस्यां सत्यवती सुतम् ।
भूयो नियोजयामास संतानाय कुलस्य वै ।
विषण्णाम्बालिका साध्वी निषण्णा शयनोत्तमे ।
को न्वेष्यतीति ध्यायन्ती नियता समप्रतीक्षते ।

[ (L 1) G6 अथाम्बिका T1 G1 M8 समाहूय — (L. 3) G8 विषण्णा बा°—भीषणा श° — (L 4) G3 6 प्रतीक्षि M3 5 °क्षती ]

— S om 13c–14d — c) MSS indiscriminately कौसल्या and कौशल्या — d) K0 स्नुषा चाथ, Ñ3 सुषाव Ñ3 Da D5 सुषुवे (Da1 °वाथ) तनय शुभा — After 13 D5 ins

1079* धृतराष्ट्र यतस्तेन धृतराष्ट्रस्ततोऽभवत् ।

14 S om 14 (cf v 1 13) — b) K3 पर्वभाव K1 सुतां K4 सदा, D5 नृप — d) Ñ3 B D (except D5) °पूर्वमरिंदम — After 14 D1 (marg, om lines 1–2) T1 G1 2 M5–8 ins 1078* (cf v 1 13).

15 b) Ś1 K1 सामपद्यत; K0 3–4 D5 सामपद्यत; E (except G1.2) समपद्यत — c) Ñ3 °का स्वपाश्वा°; M1 D2 6 °कापि (D1 °का तु) स दृष्ट्वा; G1 °का महाभागा, M1.3 °का समभ्यागाद् — d) Ś1 K1 Da2 G2 4 6 ऋषिं; K3 (for च) Ś1 G (except G2.6) सा च तं; K0 शान्तं; K1 सर्वत B D2 6 दीप्तदमधुजटधरं; D5 ऋषिं दृष्ट्वा तथाविध — e) Ś1 B1 sm em D (except Da2 Da3)

ीतां पाण्डुसंकाशां विषण्णां प्रेक्ष्य पार्थिव ।
ासः सत्यवतीपुत्र इदं वचनमब्रवीत् ॥ १६
स्मात्पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामपि ।
स्मादेष सुतस्तुभ्यं पाण्डुरेव भविष्यति ॥ १७
ाम चास्य तदेवेह भविष्यति शुभानने ।
त्युक्त्वा स निराक्रामद्भगवानृषिसत्तमः ॥ १८
तो निष्क्रान्तमालोक्य सत्या पुत्रमभाषत ।
ाशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् ॥ १९
ां माता पुनरेवान्यमेकं पुत्रमयाचत ।
तथेति च महर्षिस्तां मातरं प्रत्यभाषत ॥ २०
ततः कुमारं सा देवी प्राप्तकालमजीजनत् ।
पाण्डुं लक्षणसंपन्नं दीप्यमानमिव श्रिया ।
तस्य पुत्रा महेष्वासा जज्ञिरे पञ्च पाण्डवाः ॥ २१
ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत् ।
सा तु रूपं च गन्धं च महर्षेः प्रविचिन्त्य तम् ।
नाकरोद्वचनं देव्या भयात्सुरसुतोपमा ॥ २२
ततः स्वैर्भूषणैर्दासीं भूषयित्वाप्सरोपमाम् ।
प्रेषयामास कृष्णाय ततः काशिपतेः सुता ॥ २३ C. 1. 4208 B. 1. 100. 24 K. 1. 115. 29

---

विवर्णा. Ś1 K1 पांडुवदना. — f) Ñ3 विवर्णा समपद्यत.

16 a) G6 M2(sup. lin.).3 तां बालां. — b) K0 B3.6m D5 विवर्णां प्रे°. Ś1 Ñ1.2 B D T1 G3 भारत; K3.4 वै मुनिः.

17 b) Ś1 K1 मामिति; K0.2.3 D °मिह; K4 °मितः; Ñ1.3 B G1 M3 (sup. lin. as in text) °मसि. T1 विरूपा शयने स्थिता. — c) K0 Ñ3 एव; Da2 D3 अयं (for एष). Ñ1.2 B D (except D5) सुतस्ते वै. K2 तस्मात्तवैव तनयः. — d) G3 M3-8 एष; G6 एवं (for एव).

18 a) Ñ B D चास्यै(Dn3 °स्ये)त°. — b) K0 न संशयः; K1 तदानने; K3.4 वरानने. — c) B3.6 D5 °निरक्रामद्. K0 निश्चक्राम तथेत्युक्त्वा; K4 D5 °क्त्वा स च निष्क्रामद्; Da2 °क्त्वा स निश्चक्राम. — d) K3 मुनिसत्तमः. S (except G6 M3) कृष्णद्वैपायनः प्रभुः.

19 a) K0.2 Ñ3 B3.6 Da2 D3.5 T G1-3 M6-8 °मालक्ष्य. — b) Ñ1.2 B D (except D5) °मथाब्रवीत्. — After 19ab, D5 ins.:

1080* अप्यस्य गुणवान्पुत्र राजपुत्रो भविष्यति ।;

while G1 ins.:

1081* कुमारो ब्रूहि मे पुत्र अस्त्यत्र भविता शुभः ।

(cf. 1082*). — c) Ś1 K1 T1 च (for स). K0.2 स शशंस (by transp.). B1 मुनिर्मात्रे. — d) D5 तत्र (for तस्य). Ś1 G3 पुत्रस्य. — For 19, G6 M3.5 subst.:

1082* तमुवाच ततो माता अप्यत्र भविता शुभः ।
कुमारो ब्रूहि मे तत्त्वमृषिस्तां प्रत्युवाच ह ।
[ (L. 2) G6 पुत्र (for तत्त्वम्). ]

S ins. after 19 (G6 M3.5, after 1082*):

1083* भविष्यति सुविक्रान्तः कुमारो दिक्षु विश्रुतः ।
पाण्डुत्वं वर्णतस्तस्य मातृदोषाद्भविष्यति ।
[ (L. 1) G6 सुतो मातः (for सुवि°). ]

20 For S cf. v. l. 21. — a) Ś1 सुतमेवान्यं. — b) Ś1 पुनरेकम्; K1 एकं सुतम्.

21 For S see below. — c) K0.3 Ñ1 Da2 D2 पांडुलक्षणसं(Ñ1 °मा)पन्नं. — d) D2 °मानं स्वतेजसा. — e) N (except Ś1 K1.3 Da1) यस्य. — For 20-21, D5 (marg., om. lines 1-6) S subst.:

1084*
(21ef) तस्य पुत्रा महेष्वासा जनिष्यन्तीह पञ्च वै ।
इत्युक्त्वा मातरं तत्र सोऽभिवाद्य जगाम ह ।
सुप्तौ यातेऽम्बिका पुत्रं महाभागमसूयत ।
धृतराष्ट्रं महाप्राज्ञं प्रज्ञाचक्षुषमीश्वरम् ।
(21ab) अनुजाम्बालिका तत्र पुत्रं काले व्यजायत ।
(21cd) पाण्डुं लक्षणसंपन्नं दीप्यमानं श्रियावृतम् ।
तयोर्जन्मक्रियाः सर्वा यथावदनुपूर्वशः ।
कारयामास वै भीष्मो ब्राह्मणैर्वेदपारगैः ।
अन्धं दृष्ट्वाम्बिकापुत्रं जातं सत्यवती सुतम् ।
(20ab) कौसल्यार्थे समाहूय पुत्रमन्यमयाचत ।
अन्धोऽयमन्यमिच्छामि कौसल्यातनयं शुभम् ।
(20cd) एवमुक्तो महर्षिस्तां मातरं प्रत्यभाषत ।
नियता यदि कौसल्या भविष्यति पुनः शुभा ।
भविष्यति कुमारोऽस्यां धर्मशास्त्रार्थतत्त्ववित् ।
तां समाधाय वै भूयः स्नुषां सत्यवती तदा ।

22 a) K3.4 ततोऽन्यस्मिन्. S °कालं च (G3 तु) विज्ञाय. — b) Ś1 B6 (m as in text) तस्मै (Ś1 तस्यै) न्यवेदयत्; K2 तस्य न(? read नि)योजयत्; K3.4 ज्येष्ठामयोजयत्. S देव्या संचोदि(G1-3 °बोधि)ताम्बिका. — c) K0.2.4 D2 सा च; T1 सापि. — d) Ñ2.3 B3m 5.6 Da प्रतिचिंत्य; G3 प्रतिवीक्ष्य. K4 B3m Da D2 T G3 M3.5 तत्; G1.2 च (for तम्). K0 परिचिंतयत्; G4.5 प्रवि(G5 °ध्य)चिंतयत्.

23 b) Ś1 K1.3.4 D5 °प्सरःसमां. — d) K0.3 तदा (for °तः). A few MSS. काशीपतेः.

65 47 ऋतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि ।
उम्लोचेत्यभिविख्याता अम्लोचेति च ता दश ।
उर्वश्येकादशीत्येता जगुरायतलोचनाः ॥ ५४
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान्पूषा च त्वष्टा च सविता तथा ॥ ५५
पर्जन्यश्चैव विष्णुश्च आदित्याः पावकार्चिषः ।
महिमानं पाण्डवस्य वर्धयन्तोऽम्बरे स्थिताः ॥ ५६
मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः ॥ ५७
दहनोऽथेश्वरश्चैव कपाली च विशां पते ।
स्थाणुर्भवश्च भगवान्रुद्रास्तत्रावतस्थिरे ॥ ५८
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः ।
विश्वेदेवास्तथा साध्यास्तत्रासन्परिसंस्थिताः ॥ ५९
कर्कोटकोऽथ शेषश्च वासुकिश्च भुजंगमः ।
कच्छपश्चापकुण्डश्च तक्षकश्च महोरगः ॥ ६०
आययुस्तेजसा युक्ता महाक्रोधा महाबलाः ।
एते चान्ये च बहवस्तत्र नागा व्यवस्थिताः ॥ ६१
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चासितध्वजः ।

(except B6) Da D2.4 पर्णिनी; M6-8 चार्ष्णिका. Ś1 पुंजग°; K1 B6 D5 °स्थली; Ñ3 मुंज°; B3 मुंजि°; Dn2 D3 पुंजकस्थली; D4 M8 पुंज°.

54 ^ab) K3.4 Ñ3 B6 Dn D1.5 क्रतु°; B8 (m as in text) घृत°. S घृताची चैव विश्वाची पूर्वचित्तिः (G8 पूर्वा चित्र-) क्रतुस्तथा (G1.2 कृतास्तथा; M6-8 °स्थला). — ^c) Ś1 K1 मम्लो°; K2.4 अनुम्लोचेति विख्या°; K3 M2 अम्लो°; Ñ2.3 B Da Dn D1.4 °म्लोचेति च वि°; D2 अनुम्ना चेति वि°; D5 T1 G3 प्रम्लो°; T2 G3-5 विम्लो°; G1 प्रम्लोचंत्यभि°; G6 प्रम्लोचंती च वि°. — ^d) K4 Da2 Dn2 D1 T2 G1.2 M8 च तादृशी. D5 °चेति तिलोत्तमा; T1 G8 -नुम्लोचेति च तादृशी; G1 नुम्लोचारानगामिनी; G2 अनुम्लोचेति तादृशी; G6 -नुम्लोचंती च तादृशी. — ^e) Ko D5 तत्र; K2.3 चैता; K4 चैव; Ñ B Da Dn D2 2.4 M3.6-8 तासां; T1 M8 त्वेता (for इत्येता). — ^f) Ko.3.4 ननृतुर्वंनगोचरे (Ko °निर्झरे); Ñ B6 D (except D2.4.5) जगुश्चायत°.

55 ^b) D5 वरुणो गौतमस्त°. — Ś1 om. 55^cd. — ^d) B पर्जन्यो दशमः स्मृतः.

56 ^ab) Ñ1.2 B Da D2.4 पावकास्तथा; Dn D1 द्वादश स्मृताः; D5 पावकत्विषः. S ततस्त्वष्टा ततो विष्णुरजघन्यो अघन्यजः. — After 56^ab, S ins.:

1227* इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ।

— ^d) D5 वर्ण°. Ñ1 -न्ततः (for ऽम्बरे). S कुर्वंतस्तस्थुरंबरे.

57 = 1. 60. 2. — ^a) Ko.3.4 Ñ B D (except D5) M8 सर्पश्च. — ^b) Ś1 K1 निर्नृतिश्च; T1 निकृति°. — ^c) Ko.2.3 D1 °र्बुध्नः; B (except B6) °र्बुघ्नः; M (except M8) °र्बुध्निः. — ^d) Ś1 K1 °तपाः; Ñ1.2 B Dn2 G3 °तपं. D5 °की चापराजितः.

58 Cf. 1. 60. 3. — ^a) Ś1 K1 वहनोथे°; K3 मथनथे°; Ñ1 वाममोधीश्वर°; Ñ3 वाहनोथे°; T1 भवो नाथे°; T2 G1.4-6 M8 भवनोथे°; G2.3 M8 (sup. lin.) भवनाथे°; M6-8 हवनोथे°. — ^b) M6-8 महाद्युतिः (for विशां पते). — ^c) Ñ1.2 B1 D (except Da D5) T1 G M8 °र्भगश्च. — ^d) Ñ °द्राश्चात्र°. — After 58, S (except M3.5) repeats with variation, 1. 60. 17 (v. l. आपः for अहः, and वसवश्चावतस्थिरे for the final pāda).

59 ^a) T1 तथा च; T2 यदैव; G1.3 यथा च; G2 तथैव; G4-6 M यथैव (for अश्वि°). Ś1 K1.2.4 °वश्चैव; B4 °वश्चासौ; G6 °वस्त्वष्टौ. — After 59^ab, S ins.:

1328* नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।
तौ चाश्विनौ तथा साध्यास्तस्यास जन्मनि स्थिताः ।
क्रतुर्दक्षस्तपः सत्यः कालः कामो धुरिस्तथा ।
कुरुमान्मधुमांश्चैव रोचमानश्च तेजसा ।

With the posterior half of line 2 above, cf. v. 1 of 59^d below. — ^c) S °वा इति ख्याताः. — ^d) K1 °सन्परिरक्षिणः; Ñ1.2 B (except B6) Da D1.4 °सन्सपरिच्छदाः; S तस्यास जन्मनि स्थिताः (cf. line 2 of 1225*).

60 ^a) Ko च (for अथ). Dn D1 सर्पश्च. T2 कर्कोटिश्च गुल्मश्च; G1 संकीर्णोरश्च मन्युश्च; G2.4 कर्णिकारश्च मंडुश्च; G3-5 कर्णिरश्च मंडु(G3 गुल्म)श्च; M कर्णोरिश्च मडु(M3 °ल्यु; M6 °न्यु)श्च. — ^b) K1 G1.2 °नागाः. — ^c) Ko.2.4 कश्यपश्च. Ñ3 D1.3 Da2 Dn D5 M3.4 °श्चाय कुं°; Ñ2 G1.2 °श्चानुकुं°; G6 (corrupt) °श्चजयंचावकुं°. — ^d) Ś1 K1 D2 °रगाः; D5 भुजंगमः; S महाबलः.

61 ^a) T1 समायांस्; T2 G3 M आह्वायांस्; G1 आह्वायांस्; G2 आयायांस्; G3 आह्वायंस्; G4 अयायांस्; G6 अभावाम्स्. N (except Ś1 K1 D5) तपसा (for तेज°). S दीप्ता. — ^c) K2 महाभागाः; K3 Ñ2 D5 °वेगाः; S उग्रकोपाः. — ^cd) S एते महात्मनस्तस्य नागाः प्रोत्सवः स्थिताः (T G °वतया). — After 61, Ś1 K1.2 ins. 1230* (cf. v. 1. 61).

62 Ś1 K1.2 (t hapl.) om. 62. — ^a) S °श्च महायशाः. — ^d) S °वा उपासत (T2 G1 M °ते). — After

अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ॥ ६२
तद्दृष्ट्वा महदाश्चर्यं विस्मिता मुनिसत्तमाः ।
अधिकां स ततो वृत्तिमवर्तत्पाण्डवान्प्रति ॥ ६३
पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः ।
प्राहिणोद्दर्शनीयाङ्गीं कुन्ती त्वेनमथाब्रवीत् ॥ ६४

नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत ।
अतः परं चारिणी स्यात्पञ्चमे बन्धकी भवेत् ॥६५

स त्वं विद्वन्धर्ममिमं बुद्धिगम्यं कथं नु माम् ।
अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ॥ ६६

इति श्रीमहाभारते आदिपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

63, S repeats with variation, 61^ab [ v l तपसा (for तेज°) and °वेगा (for °क्रोधा) ] — S ins after the repetition of 61^ab D1 (marg sec m om lines 2–3, 6–7, 11–12), after 62

1229* महान्पितामहस्त्वेन यक्षेणारजसा सदा ।
प्रतिजग्राह नक्षत्र राजर्षिपरिवारित ।
सगरेणाम्बरीषेण नहुषेण ययातिना ।
धीमता धुन्धुमारेण राज्ञोपरिचरेण ह ।
मुचुकुन्देन मान्धात्रा शिबिनारिष्टनेमिना ।
भरतेन दिलीपेन सर्वैश्च जनमेजय ।
पूरुः सार्धं नृपतिभिर्जग्राह कुरुपुंगवम् ।
अन्ये च बहवस्तत्र समासन्राजसत्तमा ।
एते चान्ये च बहवो नरलोकाधिपास्तथा ।
देवलोकादिहागम्य प्रैक्षन्त भरतर्षभम् ।
विद्योतमान वपुषा भासयन्त दिशो दश ।
लक्षणैर्व्यञ्जितैर्युक्त सर्वैर्मोहाद्व्यसूचके ।

[ (L 1) M °जसावृत — (L 4) T2 G2 श्रीमता — (L 6) G6 भरतर्षभ (for जन°) — (L 8) D1 सम्रासन् — (L 9) Prior half = 61^a T2 नरदेवा दिवौकस ; M ययाद्या राजसत्तमा — (L 12) T2 G4 5 व्यजनैर् ]

— Ś1 K1 3 ins after 61 K0 2 4 Ñ B D, after 62 (D1 after 1229*)

1230* ताश्च देवगणान्सर्वांस्तप सिद्धा महर्षय ।
विमानगिर्यग्रगतान्ददृशुर्नैतरे जना ।

[ (L 1) N1 Da ताश्च N1 दिव्यागना सर्वा, Ñ2 B6 Da D2 दिव्यान्गणान्स°, D3 दिव्यग — (L 2) K0 2 4 D6 °नवर्याग्र°, D1 °नमागाग्र° ]

63 ^ab) S एत (T2 एतद्, G3 4 6 M5 एत) दृष्ट्वा महावीर्यं विस्मिता ऋषिस° — ^c) D6 एकैकस्मिन् G6 अथ तस्य (for °कां स) K0 च, Ñ2 B1 D5 तु (for स) T S M5 तदा (G2 3 °या) N1 3 B Da Dn3 D1-3 4 प्रीतिं, G1 वृत्त — ^d) N1 B6 अकुर्वन्, S वर्तते S पाडव प्रति (G6 ते तु पांडव) — After 63, D6 (marg sec m) S ins

1231* पाण्डु प्रीतेन मनसा देवतादीनपूजयत् ।
पाण्डुना पूजिता देवा प्रत्यूचुर्नृपसत्तमम् ।
प्रादुर्भूतो ह्यय धर्मो देवतानां प्रसादज ।
मातरिश्वा ह्यय भीमो बलवानरिमर्दन ।
साक्षादिन्द्र स्वय जात प्रसादाच्च शतक्रतो ।
पितृभ्यो देवतानां हि नास्ति पुण्यतरस्त्वया ।
पितॄणामृणमुक्तोऽसि स्वर्गं प्राप्स्यसि पुण्यभाक् ।
इत्युक्त्वा देवता सर्वा विप्रजग्मुर्यथागतम् ।

[ (L 4) G1 M6–8 °श्वा स्वय — (L 6) T1 पितॄणां देवतानां च — (L 7) T2 G4 5 °मृणनिर्मुक्त, G2 6 धन्यस्त्वमचिरादेव — Before line 8 T2 G3 ins वैश ]

64 ^a) K0 Dn1 D4 G6 च (for तु) D6 °वैता, S °वार्या — ^b) Ś1 K2 महारथ, T2 G °बल — ^c) Ñ1 3 B D (except D6) वसुमेच्छद्धर्मपत्नीं, Ñ2 °नीयार्थी; S प्रादि शाद्दर्शनीयार्थी (T1 सुरीये प्रादिश पुत्रे) — ^d) B1 °मभापत

65 Before 65, D4 5 ins कुन्त्युवाच, M2 5 कुंती — ^a) S वै (for अतद्) Ś1 व्यसन (for प्रस ) — ^b) B6 प्र (for अपि) S विदुरापत्सु भारत — ^c) K0 4 Ñ B D स्वैरिणी स्यात्, S अनाचार Cd cites चारिणी (as in text) — ^d) N (except B Da D2) transp पञ्चमे (Ś1 K2 °मी) and बन्ध° T G बर्धकी

66 ^a) S वै (for त्व) Ś1 धर्मं, K1 D2 S (except G1) विद्वान्, Da2 विदुर Ś1 बुद्धिगम्य, K0 D5 T2 M5 °मिद, B6 °मंमेव — ^b) Ś1 विद्वतिम, Ñ B D (except D6) अधिगम्य K0 2 4 Da1 D1 S (for नु) S सचोदयसि मां कथ — ^c) D2 °र्थं विवेकी सन्, S अपत्यलो (T1 G1 2 3 6 °ला) भाश्च राजन् — ^d) S प्रसक्त इव K3 जल्पसि (for भाष°) — After 66 D6 (marg sec m) S ins

1232* पाण्डु ।
एवमेतद्धर्मशास्त्र यथा वदसि तत्तथा ।
[ D6 पाडुरुवाच (for पाण्डु ) ]

Colophon *Major parvan* T2 G M सभव° (for

## ११५

वैशंपायन उवाच ।
कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च ।
मद्रराजसुता पाण्डुं रहो वचनमब्रवीत् ॥ १
न मेऽस्ति त्वयि संतापो विगुणेऽपि परंतप ।
नावरत्वे वरार्हायाः स्थित्वा चानघ नित्यदा ॥ २
गान्धार्यांश्चैव नृपते जातं पुत्रशतं तथा ।
श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन ॥ ३
इदं तु मे महद्दुःखं तुल्यतायामपुत्रता ।
दिष्ट्या त्विदानीं भर्तुर्मे कुन्त्यामप्यस्ति संततिः ॥ ४
यदि त्वपत्यसंतानं कुन्तिराजसुता मयि ।
कुर्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ॥ ५
स्तम्भो हि मे सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति ।
यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥ ६
पाण्डुरुवाच ।
ममाप्येष सदा माद्रि हृद्यर्थः परिवर्तते ।
न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया ॥ ७
तव त्विदं मतं ज्ञात्वा प्रयतिष्याम्यतः परम् ।
मन्ये ध्रुवं मयोक्ता सा वचो मे प्रतिपत्स्यते ॥ ८
वैशंपायन उवाच ।
ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत् ।

---

आदि°). — *Sub-parvan*: Ś1 K1.2.4 Ñ B3 D5 T1 संभव. — *Adhy. name*: K0 वंशसंभवः; K2.4 पांडुपुत्रोत्पत्तिः; K3 युधिष्ठिरभीमार्जुनोत्पत्तिः; Ñ1.2 B1.2.6 D पांडवोत्पत्तिः; T2 G4 फल्गुनोत्पत्तिः; G1 अर्जुनोत्पत्तिः; G3 M6-8 पार्थोत्पत्तिः. — *Adhy. no.* (figures, words or both): B3 D4 121; Dn 122; T1 114; T2 64; G M 65. — *S'loka no.:* Dn 76, M8 77. — *Aggregate s'loka no.:* Dn2 4836.

### 115

1 Ś1 K0.1 Da2 D2.5 S om. उवाच. — a) T1 बालेषु (for जाते°). — c) M6.8 मद्रराजात्मजा. — d) K0 असतो; S इदं (for रहो).

2 Before 2, T2 G (except G3) M8 ins. माद्री. — a) G3 मयि (for त्वयि). S संतापो (M °पं)(for °पो). — b) B3 m चिप्रिये°; S विगुणोपि (M °णं वा). T G M8 तथा(G2 °दा)नघ; M6.6-8 विशां पते (for पर°). — After 2ab, D5 ins :

1233* न तापो यौवनस्थायी पराभवं कथं च नः ।

— c) S मम जातो (M °तं) धनस्यायाः. — d) D5 सिद्धा (for स्थित्वा). K3 Da2 वा (for च). K4 सर्वदा. S द्वापर(T1 त्वधर; G1.2 द्वावर)त्वात्कथंचन.

3 ab) S गांधार्याश्च(G1 °म)पि पुत्राणां शतं जातं महात्मनां (M6.6-8 °सुते). — cd) K1.2 Ñ2 तथा (K1 °दा) न मे (by transp.). S तथापि नैव बलवद्दुःखं मम (T2 G2.3.6 °यि) विशां पते. — After 3c, K1 repeats 1d–3c (dittography).

4 a) D5.6 सु- (for मे). — b) Ś1 K2 अपुत्रतः; M6-8 ह्यपुत्रता. — c) G3 भद्रं ते (for भर्तुर्मे).

5 a) Ñ1.2 B3.6 Da D2 च; B1.3 Dn2 D4 वा; G3 ते (for तु). — b) Some MSS. कुंती°. B3 कश्चित्कुंतिसुता मयि. — c) T2 G3.4.6 कुर्यात्त्वनु°. — d) S (except G3, T1 corrupt) चैव (for चापि).

6 a) Ñ2 नाहं हि मे; Dn D1 संस्तंभो हि; D5 दुःखं हि न; G2.3 (by corr.) लज्जा हि मे. Ś1 K1 सपत्नत्वाद्. Cd cites स्तंभः (as in text). — b) Ś1 K1 उक्तं कुंतीसुतं प्रति; K0.2.4 वक्तुं कुंतीं प्रति प्रभो (K3 सुतं प्रति); T G1.4 M8 (*inf. lin.*) चोदितुं तां (G1 त्वां) सुतार्थ°; G3.5.6 M अस्ति कुंतीसुतार्थ°. — c) Ś1 G3 त्वं च; K1 B3 त्वं हि; D5 च त्वं; T1 स त्वं; M6.8 हि त्वं.

7 Ś1 K1 S om. उवाच. — a) M8(*inf. lin.* as in text) 6-8 सदा देवि. — b) Ś1 हृद्यंतः. K0 B3 (as in text) प्रतिवर्तते. — c) K3.4 न च त्वां; G3 न त्वां तु — d) T1 °विवित्सया.

8 a) Ś1 K1 Dn त्वत्तस्त्विदं; K3.4 तव चेदं; D5 तव त्वेवं. Dn अहं (for मतं). Ñ B Da D2.3.4 मत्वा. S तव त्वनुमते (G3.6 °तो) राज्ञि. — b) S प्रयतिष्ये यथासुखं — c) S भाषासे न(G3 ते)चिरात्कुंती. — d) N (except Ś1 K1 Ñ2 D5) वचनं (for वचो मे).

9 Ś1 K0.1 D5 S om. उवाच. — a) Ś1 K0.2.3 D5 रहः (for पुनः). — b) Ś1 K3.4 विविक्ते; K0 D5 विविक्तां; T2 G1 M8 एकांते; T1 G3-6 एकाग्रां; M6.6-8 एकांते — After 9ab, D5 (marg. sec. m.) B ins.:

कुलस्य मम संतानं लोकस्य च कुरु प्रियम् ॥ ९
मम चापिण्डनाशाय पूर्वेषामपि चात्मनः ।
मत्प्रियार्थं च कल्याणि कुरु कल्याणमुत्तमम् ॥ १०
यशसोऽर्थाय चैव त्वं कुरु कर्म सुदुष्करम् ।
प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोऽर्थिना ॥ ११
तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम् ।
गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भामिनि ॥ १२
तथा राजर्षयः सर्वे ब्राह्मणाश्च तपोधनाः ।
चक्रुरुच्चावचं कर्म यशसोऽर्थाय दुष्करम् ॥ १३
सा त्वं माद्रीं प्लवेनेव तारयेमामनिन्दिते ।
अपत्यसंविभागेन परां कीर्तिमवाप्नुहि ॥ १४
एवमुक्ताब्रवीन्माद्रीं सकृच्चिन्तय दैवतम् ।
तस्मात्ते भवितापत्यमनुरूपमसंशयम् ॥ १५
ततो माद्री विचार्यैव जगाम मनसाश्विनौ ।
तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ॥ १६
नकुलं सहदेवं च रूपेणाप्रतिमौ भुवि । C. 1. B. 1. K. 1.

---

1234* अनुगृह्णीष्व कल्याणि मद्रराजसुतामपि ।

— T1 om. 9ᶜ–10ᵇ. — ᶜ) D5 कुरुष्व (for कुल°). M6–8 चैव (for मम). — ᵈ) Ś1 कुलस्य च (*sup. lin.* as in text). Ñ3 प्रियं कुरु (by transp.).

10 T1 om. 10ᵃᵇ (cf. v. l. 9). — ᵃ) K0.3.4 Ñ3 xcept B1) Da D5 G3.5.6 चा; T2 G1.2.4 M अपि च). Ñ2 B6 Da पिंडदं सुश्रु; B1 पिंडदानाय; B3.5 ... S (T1 om.) पिंडलाभा(G3 °भावा)य. — ᵇ) K0 ... Ś1 K1.2.4 D5 अपि भामिनि; D2 अपि ...पाम. ... S (T1 om.) च महात्मनो. — ᶜ) T2 G3.4–6 हि ... च). — After 10, S ins.:

1235* कुलस्य पिण्डवृद्ध्यै कुलस्य कुलसंततिः ।
मम चेष्टस्य ...नस्तव चापि परं यशः ।

[ (L. 1) G1 °वृद्ध्यै M6–8 °वृत्तिश्च. — (L. 2) M8 ...त्वापि परमं यशः. ]

11 ᵃ) M6–8 ...र्थाय (sic). — ᵃ) Ś1 K (except K0) Ñ3 °धिपत्यं ...धिराज्यं) इंद्रेण; B1.6 Da प्राप्ताधि°; ...द्रेण; T2 G M प्राप्य दे(G1.2.6 M3 D4 T2 प्राप्ता... ᵈ) D5 इष्ट्वा. S यज्ञैरिष्ट्वा सहस्रशः. ...दे)वादपत्यं T2 repeats 11ᶜᵈ with the reading — After ...

12 ...of T1 G ...तपः कृत्वा; G6 तपस्तप्तुं. Ś1 D4.5 M6–8 ...ter 12ᵃᵇ, G5, which (hapl.) om. 12ᶜ–13ᵈ, सुदुष्क... — ᶜ) Ś1 कुरून्. Ś1 K2 अभ्यवग°; T2 G2 ins... –6 अभ्युदय°. — ᵈ) G3 यशसेर्थाय. Ñ1.2 B ...ept D2.4.5) भाविनि. Ś1 K1 यशोर्थाय (K1 यशस्विनि.

13 G5 om. 13 (cf. v. l. 12). — ᵃ) S (G5 om.) पूर्वे (M7.8 सर्वे). — ᵇ) K0 परंतपाः (for तपो°). Ś1 Ñ1.2 B1.3 D2.8 यशोर्थाय सुदुष्करं. — S ins. after 13 (G5, which om. 12ᶜ–13ᵈ, after 12ᵃᵇ):

1236* तथा राजर्षयो धीरा मनुवैन्यादयः पृथक् ।
यशोऽर्थं धर्मयुक्तानि चक्रुः कर्माणि शोभने ।

[ (L. 2) G1 यः श्रोतुं; G3–6 यथोक्तं (for यशोऽर्थं). G1 तथा चक्रुश्च शो°. ]

14 ᵃ) G6 अद्य (for माद्रीं). Ś1 Ñ D (except Dn1 D5) S (except M6.8) प्लवेनैव; K0 °नेह. — ᵇ) Ñ3 B1.6 D (except D2.4.5) T G तारयैनाम्. — ᶜ) D5 °संप्रदानेन. — ᵈ) Ñ1 प्रीतिं (for कीर्तिं). S °मवाप्स्यसि. — After 14, D4 (marg. *sec. m.*) S ins.:

1237* धर्मं वै धर्मशास्त्रोक्तं यथा वदसि तत्तथा ।
तस्मादनुग्रहं माद्याः कुरुष्व वरवर्णिनि ।

[ Before line 1, D4 ins. कुंत्युवाच; M6–8 कुंती. — (L. 2) D4 तस्याः; T1 माद्र्यां; G1 मह्यं. D4 करोमि. D4 कुरुनंदन; M नृपनंदन (for वर°). ]

15 T1 G2–6 M om. 15ᵃᵇ. — ᵃ) K2–4 Ñ B1.3 Da1 Dn D2 G1 °मुक्त्वा. Ś1 K0 D1 माद्रीं; Ñ3 कुंती; G1 स्नेहाद्. — ᵇ) K3.4 देवतां. — D5 om. 15ᶜᵈ. — ᶜ) S (except T2) तत्र ते (G2–6 मे). — D4 (marg. *sec. m.*) S ins. after 15: D5, after 16ᵃᵇ:

1238* कुन्त्या मन्त्रे कृते तस्मिन्विधिदृष्टेन कर्मणा ।
ततो राजसुता स्नाता शयने संविवेश ह ।

[ Before line 1, T1 G1.2 M3 ins. वैशं°. — (L. 1) T2 G3–6 कुंत्यां. D4 मंत्रेण सा; G3 मंत्रकृते. — (L. 2) T2 G3.4 स्नात्वा. ]

16 G2 om. 16. — ᵃ) K0.3 Ñ3 T G3.4–6 M एका (M3 एतं); Ñ1.2 B D (except Da D5) एवं (for एव). G3 ततो माद्यपि चाप्येतौ. — ᶜᵈ) K4 युवौ; G5 युतौ (for सुतौ). Ś1 Da2 तस्याः. G1 तया च कुंत्यापत्यार्थे प्रायुङ्क्त चक्षिमुत्तमं. — After 16, G1 ins. 1239*.

17 G1 om. 17. — ᵇ) K3 वीर्येणाप्रतिमौ. — ᶜ) S (G1 om.) जातौ च ता°. — ᵈ) G (G1 om.) °वाचाद्भुतोपमौ. — D4 (marg. *sec. m.*) S ins. after 17 (G1, which om. 17, after 16):

एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः ।
संभूताः कीर्तिमन्तस्ते कुरुवंशविवर्धनाः ॥ २५
शुभलक्षणसंपन्नाः सोमवत्प्रियदर्शनाः ।
सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः ।
सिंहग्रीवा मनुष्येन्द्रा ववृधुर्देवविक्रमाः ॥ २६
विवर्धमानास्ते तत्र पुण्ये हैमवते गिरौ ।
विस्मयं जनयामासुर्महर्षीणां समेयुषाम् ॥ २७
ते च पञ्च शतं चैव कुरुवंशविवर्धनाः ।
सर्वे ववृधुरल्पेन कालेनाप्स्विव नीरजाः ॥ २८

इति श्रीमहाभारते आदिपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## ११६

वैशंपायन उवाच ।
दर्शनीयांस्ततः पुत्रान्पाण्डुः पञ्च महावने ।
तान्पश्यन्पर्वते रेमे स्वबाहुबलपालितान् ॥ १
सुपुष्पितवने काले कदाचिन्मधुमाधवे ।
भूतसंमोहने राजा सभार्यो व्यचरद्वनम् ॥ २
पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः ।

---

च (for ते) — d) =28b Ko D5 T1 G (except G1 3) M5 कुल° — S ins after 25 (M5, after 26cd)

1243* देवौजस सत्ववन्त सर्वेशास्त्रविशारदा ।
दिव्यसहनना सर्वे सर्वे भास्करमूर्तय ।

[ (L. 1) G6 M6-8 सत्यवत G3 M6.8 सर्वे शास्त्र° — (L 2) G3 दिव्यसिंहासना — भास्करम्° ]

26 Ś1 K1 D2 (hapl ) om 26–28ab M5 transp 26ab and 26cd, ins 1243* between them — a) Ko शुभदर्शन°, T G2-6 M6-8 सर्वे(T1 शुत, G1 inf lin शुभ)लक्षण°. — G4 om 26cdef — c) G5 सिंहदष्ट्रा — d) M5 सर्वे (for सिंह ) — S (except G1 2, G4 om ) °चारिण (for °गामिन ) — After 26cd, M5 ins 1243*, while Ñ B D5 3 ins

1244* सिंहोरस्का सिंहसत्वा सिंहाक्षा सिंहविक्रमा ।
[ Ñ3 D5 3 सिंहास्या (for सिंहाक्षा ) ]

— e) T1 G3 5 6 M सिंहस्रीवा, T2 G5 सिंहाक्षाश्च, G2 सिंहसत्वा D5 G1 2 5 M5 °व्येंद्र D3 सिंहसहनना धीरा — f) K3 4 D1 बभूवुर, G3 ददृशुर B3 D5 °वर्चस , S (G4 om ) °दर्शना (G5 °नदना , M6-8 °दर्शिन )

27 Ś1 K1 D2 om 27 (cf v l. 26) — b) M3 दिव्ये (for पुण्ये) K4 Dn T1 हिमवते (Dn °वतो) — After 27, S (M5 om ) reads 19–21

28 Ś1 K1 D2 om. 28ab (cf v 1 26) — a) Ko 2 D5 M6-8 ते पच च, B1.3 एते पच, B5 ते तु पच, M6-8 (all inf li ) तत्र पच Da ते पचशतक चैव — b) =35d D5 पित्रो प्रीतिविव° — Cd cites 28cd exactly as in text ! — c) D4 बभूवुरल्पेन, T1 (corrupt) च पृथिवीराजन्; T2 G (except G5) ववृधिरे राजन्, M6.8 °धिरे वीरा — d) S (except M6.8) पकजा (M8 8 all inf lin नीरजा as in text) — After 28, S ins a passage of 69 lines given in App I (No 67), D5 ins certain lines thereof after 1 116 1ab (q v )

Colophon om in T G — Major parvan M संभव° (for आदि°) — Sub-parvan Ś1 K Ñ B1.5 Da D1 संभव — Adhy name K3 4 माद्रीसुतोत्पत्ति, K3 Ñ1 3 B Da D3 पांडवोत्पत्ति , M6.8 नकुलसहदेवोत्पत्ति — Adhy no (figures words or both) B1 122, Dn 123, D4 124, M 66 — Śloka no Da1 Dn 31, M5 35 — Aggregate śloka no Dn1 4867

### 116

1 Ś1 Ko 1 3 D5 3 S om उवाच (T2 G1 3 5 M5 om the ref ) — ab) Ñ3 तदा (for तत ). B3 G1 M5 पाडु पुत्रान् (by transp ) G5 पांडवाश्च (for पाण्डु पञ्च) B6 महाबलान् (for °वने) — After 1ab, D5 ins lines 4–44 of a (Southern) passage given in App I (No 67) ending with the colophon आदिपर्वणि ॥ २५ ॥ — c) Ś1 Da1 सर्वतो (for पर्व°) K3 B1.3 Dn D1 5 T2 G3 5 6 रम्ये (for रेमे) — d) K (except Ko) D5 °परिपालितान्, Ñ1 B1 3 5 Da D3 4 °बलशालिन , Ñ3 B6 Dn D1 °बलमाश्रित

2 a) K3 4 T2 G1 स, T2 G5 स- (for सु ) — b) S प्रवृत्ते म° — After 2ab, D5 S ins

1245* पूर्णे चतुर्दशे वर्षे फल्गुनस्य च धीमत ।
तदा उत्तरफल्गुन्या प्रवृत्ते स्वस्तिवाचने ।

अन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ॥ ३
जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम् ।
पाण्डोर्वनं तु संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ ४
प्रहृष्टमनसं तत्र विहरन्तं यथामरम् ।
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ॥ ५
समीक्षमाणः स तु तां वयःस्थां तनुवाससम् ।
तस्य कामः प्रववृधे गहनेऽग्निरिवोत्थितः ॥ ६
रहस्यात्मसमां दृष्ट्वा राजा राजीवलोचनाम् ।
न शशाक नियन्तुं तं कामं कामबलात्कृतः ॥ ७
तत एनां बलाद्राजा निजग्राह रहोगताम् ।
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् ॥ ८
स तु कामपरीतात्मा तं शापं नान्वबुध्यत ।
माद्रीं मैथुनधर्मेण गच्छमानो बलादिव ॥ ९
जीवितान्ताय कौरव्यो मन्मथस्य वशं गतः ।
शापजं भयमुत्सृज्य जगामैव बलात्प्रियाम् ॥ १०
तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहिता ।

---

रक्षणे विस्मृता कुन्ती व्यग्रा ब्राह्मणभोजने ।
पुरोहितेन सह सा ब्राह्मणान्पर्यवेषयत् ।
तस्मिन्काले समाहूय माद्रीं मदनमोहितः ।

[ (L. 1) M3.5 °स्य महात्मनः. — (L. 2) G1.2.4 तदा चोत्तर°; M3.5 तदा सूत्तर°. T2 G2 M3.5 स्वस्तिवाचके. — (L. 3) D5 पांडोर् (for कुन्ती). — (L. 4) D5 °हिते च सा कुंती; T1 G3.6 M °हितेन सहिता. ]

— $^{c}$) Ś1 K0.1 भूतसंमोदने; T1 मार°. S काले. — $^{d}$) K0.3 Ñ2 B1.5 D4 S वने.

3 $^{a}$) K0.4 D1.4 G4 पालाशैस्. Ś1 तत्र (for चूतैः). — Ñ3 B3.6 Da D4.5 S (except T2) ins. after $3^{ab}$; K4, after $3^{cd}$:

1246* कर्णिकारैरशोकैश्च केशरैरतिमुक्तकैः ।

[ K4 D4 केसरैर्; D5 बकुलैर्; S (except T2) मल्लिकैर्. ]

K4 Ñ3 Da D4 cont.:

1247* तथा कुरबकैश्चैव मत्तभ्रमरकूजितैः ।
चूतैर्मञ्जरिभिश्चैव पारिजातवनैरपि ।

After 1247*, K4 repeats $3^{cd}$, which is followed by:

1248* परपुष्टोपसंघुष्टसंगीतैः षट्पदैरपि ।;

while D4 ins.:

1249* जम्बूदुम्बरसैहुण्डैर्वटैराम्रातकैर्धवैः ।
नीपार्जुनकदम्बैश्च बदरैर्नागकेसरैः ।
तमालैर्बिल्वकैस्तालैः पनसैर्वनकिंशुकैः ।
मत्तभ्रमरसंगीतकोकिलस्वनमिश्रितम् ।

After 1246*, D5 ins.:

1250* हिन्तालकदलीशालैः पनसैर्वनकिंशुकैः ।;

while S (except T2 G1) ins.:

1251* बकुलैस्तिलकैस्तालैः पनसैर्वनकिंशुकैः ।

[ Cf. line 3 of 1249*. ]

— $^{c}$) Ś1 K (except K0) B5 विविधैर्वृक्षैः. Ñ2 अन्यैर्बहुविधैर्वृक्षैः. — $^{d}$) S लता(T2 G1.3 सदा)पुष्पफलैर्युतं (T2 फलमूलसमृद्धिभिः).

4 $^{a}$) Ś1 जलस्थायैश्च; K0 D5 जलाशयै°; K1 °जातै°; K3-4 °छायै°; D2 °स्थलै°; T1 G2 जन°. K3 S बहुभिः. — After $4^{ab}$, Ñ3 B3.4.6 Da ins.:

1252* नानाविहंगसंघुष्टं परपुष्टनिनादितम् ।

B6 cont.:

1253* समीक्ष्य च ततस्तत्र रम्यं कुसुमितं द्रुमम् ।

— $^{c}$) Ñ B6 Dn D1 तत्; T2 M5 च (for तु). B1 संवीक्ष्य (m as in text). — After 4, S ins.:

1254* मत्तभ्रमरसंगीतं कोकिलस्वनमिश्रितम् ।
गायमानैस्तु गन्धर्वैः पुरा नागपुरे यथा ।

[ (L. 1) T2 °स्वनमुत्तमं; T2 G4 °संयुतं; G1 °मीरितः. ]

5 $^{a}$) Ś1 K1.2.4 तं तु (for तत्र). — $^{b}$) Ñ B D (except D5) विचरंतं. — $^{c}$) K0 D5 °नुगता चैका (D5 °च). — $^{d}$) S वसने बिभ्रती (G1 वाससी) शुभे.

6 $^{a}$) Some MSS. समीक्ष्य°. K0 D5 °माणो माद्रीं तां; K1.3 B1 D3 S (except G1.3) °माणस्य तु तां; D5 °माणः सततं. — $^{b}$) Ñ1 उपस्थां. K4 D1 Cd तनुवाससां; Dn D1 G3 तां सुवा°; M (except M5) °वाससीं. — $^{c}$) Dn D1 प्रववृते. — $^{d}$) Ś1 K1 B5 M3.5 °वोज्झितः; Ñ3 °वार्जित°; B6 D (except D2.4.5) °वोद्गतः.

7 $^{a}$) Ñ B D (except D5) रहस्येकां तु तां (Ñ3 गतां). — $^{b}$) Ñ1 Da1 G2 °लोचनः. — $^{c}$) K0-3 स्व; K4 तु (for तं). — $^{d}$) K3.4 B5 D5 °बलार्दितः; B6 Da Dn D1 °वशीकृतः. T1 कामयाणबला°. — After 7, D5 (marg. sec. m.) S ins.:

1255* अथ सोऽष्टादशे वर्षे ऋतौ माद्रीमलंकृताम् ।
आजुहाव ततः पाण्डुः परीतात्मा यशस्विनीम् ।

8 $^{a}$) Ś1 K1 तत्र चैनां; K0 Da1 D5 तत एतां; D5 ततोऽथ तां. — $^{b}$) T G रहोग(G3 °द्रि)त°. K0 अभिगम्य महावने. — $^{c}$) Ś1 तथा; D2 G2 तदा (for तया).

9 $^{b}$) K0 नान्वचिंतयत्; K1 Dn3 नानु°; B5 °बुध्यत. — $^{c}$) Ñ3 Da.3 T2 G2 M6-8 माद्र°. — $^{c}$) D5 मैथुनमार्गेण. — $^{d}$) Ñ3

संप्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ॥ ११
स तया सह संगम्य भार्यया कुरुनन्दन ।
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा ॥ १२
ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ।
मुमोच दुःखजं शब्दं पुनः पुनरतीव ह ॥ १३
सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ ।
आजग्मुः सहितास्तत्र यत्र राजा तथागतः ॥ १४
ततो माद्र्यब्रवीद्राजन्नार्ता कुन्तीमिदं वचः ।
एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः ॥ १५
तच्छ्रुत्वा वचनं तस्यास्तत्रैवावार्य दारकान् ।
हताहमिति विक्रुश्य सहसोपजगाम ह ॥ १६
दृष्ट्वा पाण्डुं च माद्रीं च शयानौ धरणीतले ।
कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता ॥ १७
रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान् ।
कथं त्वमभ्यतिक्रान्तः शापं जानन्वनौकसः ॥ १८
ननु नाम त्वया माद्रि रक्षितव्यो जनाधिपः ।
सा कथं लोभितवती विजने त्वं नराधिपम् ॥ १९
कथं दीनस्य सततं त्वामासाद्य रहोगताम् ।
तं विचिन्तयतः शापं प्रहर्षः समजायत ॥ २०
धन्या त्वमसि बाह्लीकि मत्तो भाग्यतरा तथा ।
दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः ॥ २१

माद्र्युवाच ।

विलोभ्यमानेन मया वार्यमाणेन चासकृत् ।
आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा ॥ २२

---

B D (except D5) सोऽन्वगच्छद्वला°.

10 a) Ś1 Ñ Dn D1 कौरव्य. — d) Cf. 9d. Ñ1.2 B (except B6) D (except D5) विधिना संप्रचोदितः.

11 a) K0 धर्मात्मनो. — b) Ñ1.3 T1 कामेन. G5 चोदिता. — d) Some MSS. प्रणष्टा. Ś1 B4.6 G2.4.5 तेजसा; D3 तेन सा (for चेत°).

12 b) K0 Ñ2 G4.5 M °सत्तमः; K4 Ñ3 B D T1 नंदनः; T2 G1.3 °सत्तम; G2 °सत्तमं; G3 °पुंगवः. — d) B6 (m as in text) Da1 D5 °कर्मणा; Cd as in text. — After 12, D5 (marg. sec. m.) S ins.:

1256* क्षणेनाभ्यपतद्राजा राजधानीं यमस्य वै ।

13 b) Ś1 K2 M5 °चेतनं; Cd as in text. — cd) D5 ससर्ज (for मुमो°). Ś1 K1.3 B3 च; K0 Dn D3 हि (for ह). S शुक्रोश परमायस्ता (T1 °मा मत्ता; T2 G2-4 °मा यत्ता) चक्रवाकी यथा पतिं. — After 13, D5 (marg. sec. m.) S ins.:

1257* तं श्रुत्वा करुणं शब्दं सहसोत्पतितं तदा ।

14 a) K3 तत्र (for ततः). K3.4 ततः सह सुतैः कुंती. — c) Ś1 आगताः (for आज°).

15 ab) G2 transp. राजन् and कुन्तीं. B3 D2 G2 M6-8 आर्ता. Ñ3 B3 (m as in text) S (except T1 G1.2) °मेदं तदा. — d) S (except G2.4) तिष्ठंतां तत्र (T1 °ज-) दा°.

16 a) Ñ2 B3 Da D2.4 °नं देव्यास्. G1.3.5 एतच्छ्रुत्वा वचस्तस्यास्. — b) K0.3 Ñ3 B1m.6 D (except D2.5) आधाय. — d) Ś1 च; K3 Ñ3 तं; S (except G3) तां (for ह). Ñ1.2 B D (except D5) सहसैवा(Da °व)जगाम सा (D4 ह).

17 a) K0.1.3 B1.4 D2 S (except M5-8) माद्रीं च पांडुं (by transp.).

18 Before 18, D5 ins. कुंत्युवाच; T1 G5 M कुंती. — b) Ñ1 D3 S धीरः; D4 वने. — c) Ś1 त्वयमनुक्रांतः; K0.2 B D5 M5 त्वामभ्यति°; K1 त्वद्य मति°; K3 Ñ Da Dn D1 त्वामत्यति°; K4 त्वया शाप°; D2 M6 त्वामप्यति°; D4 त्वमद्य निष्क्रांतः; T1 G2.4 त्वममति°; T2 त्वं समति°; G1 च मप्यति°; G3 च समति°; G4 तु समति°; G6 त्वमस्यति°. — d) Ñ1.2 B1m.2.3 D3 जानन्वने वसन्; Cd as in text.

19 a) Ś1 K1 त्वया राक्षि. — b) K0 Ñ3 B1.4 Dn2 D5 S नराधिपः. — c) Ś1 K1 सा नृपं. — d) Ś1 K1 B3 तं; M (except M5) तु (for त्वं). — After 19, S ins.:

1258*

माद्री ।

विधिना चोदितस्यास्य मां दृष्ट्वा विजने वने ।
अचिन्तयित्वा तच्छापं प्रहर्षः समजायत ।

[(L. 1) T1 G1 M5-8 °तस्याद्य. — (L. 2) Cf. 20cd. M6-8 तं शापं.]

20 Before 20, S ins. कुंती (cf. 1258*). — ab) G6 कथं दीने वसंते त्वामासाद्य च रहो°.

21 a) K2 वाहेकि; K4 वाह्लीकि; B (except B6) Da वाह्लीकि; S वाह्लीके. — b) Ś1 K (except K4) B1.3.5 (m as in text) D2 T1 G6 मत्त(K0.3 B5 G6 °त्तो)भाग्यतरा (B3m °वती); G3 मम भाग्य°; M महाभाग्यतरा (M3 °वती); Cd (?)मत्तभाग्यतरा. B5 गुणैः (m as in text);

कुन्त्युवाच ।

अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम ।
अवश्यं भाविनो भावान्मा मां माद्रि निवर्तय ॥ २३
अन्वेष्यामीह भर्तारमहं प्रेतवशं गतम् ।
उत्तिष्ठ त्वं विसृज्यैनमिमान्रक्षस्व दारकान् ॥ २४

माद्र्युवाच ।

अहमेवानुयास्यामि भर्तारमपलायिनम् ।
न हि तृप्तास्मि कामानां तज्ज्येष्ठा *अनुमन्यताम् ॥ २५
मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः ।
तमुच्छिन्द्यामस्य कामं कथं नु यमसादने ॥ २६
न चाप्यहं वर्तयन्ती निर्विशेषं सुतेषु ते ।
वृत्तिमार्ये चरिष्यामि स्पृशेदेनस्तथा हि माम् ॥ २७
तस्मान्मे सुतयोः कुन्ति वर्तितव्यं स्वपुत्रवत् ।
मां हि कामयमानोऽयं राजा प्रेतवशं गतः ॥ २८
राज्ञः शरीरेण सह ममापीदं कलेवरम् ।
दग्धव्यं सुप्रतिच्छन्नमेतदार्ये प्रियं कुरु ॥ २९
दारकेष्वप्रमत्ता च भवेथाश्च हिता मम ।
अतोऽन्यन्न प्रपश्यामि संदेष्टव्यं हि किंचन ॥ ३०

वैशंपायन उवाच ।

इत्युक्त्वा तं चिताग्निस्थं धर्मपत्नी नरर्षभम् ।
मद्रराजात्मजा तूर्णमन्वारोहद्यशस्विनी ॥ ३१

इति श्रीमहाभारते आदिपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

---

D5 S श्रुवि (M8 ह्यसि) (for तथा). Ñ3 सभार्यया च भृशं मया. — ᵉ) Ś1 K (except K3) D5 या वक्त्रं; G1 M तद्°.

22 Ś1 K1.3 S om. उवाच. — D1 (hapl.) om. 22 and कुंत्युवाच (in 23). — ᵃ) Ś1 K1 Cd विलोक्य°; T G अलोक्य°. K3.4 Ñ1.3 B D (except D5; D2 om.) विलपंत्या मया देवि. — ᵇ) M (except M5) °माणस्त° धासकृत्. — ᶜ) K (except K3) D5 S धा(T1 द्रा)रितः. Da1 S (except G3) तेन; D5 येन (for अनेन). — ᵈ) K3-4 Cd दिष्टं सत्यं (by transp.); G3 सत्यं दृष्टं; G1 गतं दिष्टं. Ñ3 सत्यमिदं चिकीर्षता. — After 22, D5 (marg. *sec. m.*) S ins. a passage of 61 lines given in App. I (No. 68).

23 *D1 om. the ref. (cf. v. l. 22)*; Ś1 K2.3 S *om.* उवाच. — ᵃ) K3.4 सह; Ñ2.3 B (except B1) Da D2.3 श्रेष्ठं (for ज्येष्ठं). G3 मतं; G1 महत् (for मम). — ᶜ) G1 M (except M5) अवश्य°. Cd cites अभावात् (for भावात्). — ᵈ) Some MSS. मा (for मां). T1 G2.6 मा माद्रि मः; G1.5 माद्रि मा मां. K1.3.4 B6 Da निवारय. Ñ3 मा माद्रि विनिव°.

24 ᵃ) Ś1 Ñ Da Dn D1 M4.5 अन्विष्यामीह; K0.4 D5 अनुयास्यामि; K1 °ष्यामि हि. — ᵇ) Da इह (for अहं). K0.3.4 D5 प्रेतगतिं. — ᶜ) G1 इमं; G3 एवं (for एनं). G6 M3-5 transp. त्वं and एनं. — ᵈ) K0 D5 एतान्. K1 रक्ष सुदार°; K3.4 रक्ष कुमार°; Ñ3 B D (except D5) पालय दार°; G3 रक्षस्व बाल°. — After 24, T G ins.:

1259* अपाल्य पुत्रांस्त्वमद्य वीरपत्नीत्वमर्थये ।
वैशंपायनः ।
मद्रराजसुता कुन्तीमिदं वचनमब्रवीत् ।

25 Ś1 K1 S om. उवाच. — M6-8 transp. 25ᵃᵇ and 25ᶜᵈ, repeating 25ᶜᵈ after 25ᵃᵇ. — ᵇ) M अपराजितां Cd as in text. — ᶜ) G1 न हि तृप्यामि. — ᵈ) T G2.6 त्वं ज्येष्ठा. Ś1 K0.1.3 Ñ3 D5 T G1.3-5 सेनुमन्यतां; K2 मानु°; G6 ह्यनु°. Ñ1 G2 त्वज्ज्येष्ठाम(G2 मो)नु°; Ñ2 B Da Dn D1.2.6 ज्येष्ठा (D1.6 Da °ष्ठे; D2m °ष्ठा) मामनु°; M4 देवी ज्येष्ठानु°; M6-8 तां (all *inf. lin.* तं) ज्येष्ठामनु° (all *inf. lin.* चानु°).

26 ᵃ) B3 D5 S समुच्छिद्याम्; Cd as in text. — After 26, S ins.:

1260* मम हेतोर्गतो राजा दिव्यं राजर्षिसत्तमः ।
न चैव तादृशी बुद्धिर्मान्यपात्र न तादृशाः ।
न चोत्सहे धारयितुं प्राणान्भर्तृविनाकृता ।
तस्मात्तमनुयास्यामि यान्तं वैवस्वतक्षयम् ।
[ (L. 1) G2 मम हेतोर्गतो राजा यद्यं राजसत्तमः. ]

27 ᵃ) S वर्तेयं न समां वृत्तिं. — ᵇ) Ś1 K (except K0) निर्विशेषा (K3.4 °षां); [illegible] जात्वहं च. — ᶜᵈ) K1 Dn D1 च (for हि). S तथा हि वर्तमानो मामयं संस्पृशेन्महान्. — After 27, M2 ins.:

1261* त्वं तु मातुलयोर्नित्यं स्वसुतेषु समा सदा ।

28 ᵃ) B3 तस्मान्मत्पुत्रयोः. S देवि (for कुन्ति). — ᶜ) Ñ3 B1 Dn D1 च (for हि). — ᵈ) M2 मर्तो (for राजा). D5 प्रेतगतिं. — After 28, S ins.:

1262* अन्वेष्यामि च भर्तारं गच्छन्तं यमसादनम् ।

29 ᵃ) K0.3.4 D5 सह शरी° (by transp.). — ᵈ) K0 एतत्कार्यं. K0.3.4 Ñ3 B3 कुरु प्रियं (by transp.).

30 ᵃ) T2 G त्वं (for च). — ᵇ) Ś1 K1 भवेथास्त्वं; K3

# ११७

वैशंपायन उवाच ।
ण्डोरवभृथं कृत्वा देवकल्पा महर्षयः ।
तो मन्त्रमकुर्वन्त ते समेत्य तपस्विनः ॥ १
त्वा राज्यं च राष्ट्रं च स महात्मा महातपाः ।
स्मिन्स्थाने तपस्तप्तुं तापसाञ्शरणं गतः ॥ २
स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह ।
प्रदायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः ॥ ३
ते परस्परमामन्त्र्य सर्वभूतहिते रताः ।
पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयम् ॥ ४
उदारमनसः सिद्धा गमने चक्रिरे मनः । C. 1. B. 1. K. 1. 135.

---

s.s भवेयास्त्वं; T G भवेश्वाभि°. Ś1 K (except K3) तं मम; M3 सदा मम; M8 अनिंदिते. — c) Ś1 K (except K3) D2 अतो नान्यत् (K0 D2 नान्यं); D3 अतोन्यं; G3.4 अन्योन्यं न. — d) K3 Ñ1 B3 M6-8 कथंचन; K3 यं मम (for हि किं°). — After 30, D4 (marg. sec. m.) ins. a passage of 62 lines given in App. I (No. 9); while D5 ins.:

1263* तस्यास्तद्वचनं श्रुत्वा कुन्ती शोकाग्निदीपिता ।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ।
निश्चेष्टा पतिता भूमौ मोहेनैव चचाल सा ।
तस्मिन्क्षणे कृतस्नानं महदम्बरसंवृतम् ।
अलंकारकृतं पाण्डुं शयानं शयने शुभे ।
कुन्तीमुत्थाप्य माद्री तु मोहेनाविष्टचेतनाम् ।
एह्येहि कुन्ति मा रोदीः दर्शयामि स्वकौतुकम् ।
पादयोः पतिता कुन्ती पुनरुत्थाय भूमिपम् ।
रक्तचन्दनदिग्धाङ्गं महारजतवाससम् ।

31 All MSS. except Dn D4.5 om. the ref. — a) K4.5 तां (for तं). ■ नमस्कृत्य पिता°. — b) K D4 T2 G1.6 M °राजात्मजा (as in text); the rest °राजसुता. — After 31, D4 (marg. sec. m.) S ins.:

1264* आहताम्बरसंवीतो भ्रातृभिः सहितोऽनघः ।
उदकं कृतवांस्तत्र पुरोहितमते स्थितः ।
अर्हतस्तस्य कृत्यानि शतशृङ्गनिवासिनः ।
तापसा विधिवच्चक्रुश्चारणा ऋषिभिः सह ।

G1 cont.:

1265* तापसा विधिवत्कर्म कारयामासुरात्मजैः ।
(cf. last line of 1264*).

Colophon. Major parvan: T2 G2-6 M संभव° (for आदि°). — Sub-parvan: Ś1 K0.1.4 Ñ B1.3 Da D1.5 T1 संभव. — Adhy. name: K3 पांडोः स्वर्लोकगमनं; Ñ1.2 पांडुपरमः; Dn पांडोरुपरमः; T2 G1.4 M पांडुस्वर्गारोहणं (M3 पांडुमरणं). — Adhy. no. (figures, words or both): B1 123; Dn 124; D4 125; S 67 (T2 116). — S'loka no.: Da1 23; Dn 31; M8 112. — Aggregate s'loka no.: Dn2 4698.

## 117

1 Ś1 K1.3 D1.5 S om. उवाच (M3 om. the ref.). — a) Ś1 K1 पांडोरेवं दृष्टां; K2.4 तस्यांडोर्निधनं; Ñ1.2 B D (except D5) पांडोरुपरमं; Cd as in text. N दृष्ट्वा (for कृत्वा). — c) Ñ1.2 B D (except D5) ततो मंत्रविदः सर्वे. — d) K2.4 यशस्विनः; K3 महर्षयः (for तप°). K0 Ñ3 समेत्य मुनयस्तदा; Ñ1.2 B D (except D5) मंत्रयांचक्रिरे मिथः.

2 Before 2, N ins. तापसा (K0 ऋषय) ऊचुः (K1 om. ऊचुः); M6-8 शुकः. — a) Ś1 K2.4 G3 transp. राज्यं and राष्ट्रं. M भोगांश्च (for राष्ट्रं च). — b) B1.6 (by transp.) महात्मा स (B6 च). K0 Ñ1.2 B Dn D1.2.4 महायशाः. Da महात्मा सुमहायशाः. — c) K1 T2 G3.6 तपस्तप्तं; Ñ B D (except D5) G6 M °स्तप्तुं.

3 a) B3 G6 संजात°. — b) G6 °श्च भरतर्षभः. — c) K2.4 Ñ B (except B3) Dn D1.5 G3.4 प्रादा°. — After 3, N (except Ś1 K1.2) ins.:

1266* तस्येमानात्मजान्देहं भार्यां च सुमहात्मनः ।
स्वराष्ट्रं गृह्य गच्छामो धर्म एष हि नः स्मृतः ।;

while S ins.:

1267* तस्मात्कृत्यं परीक्षध्वमिति होवाच धर्मवित् ।
शुकः परमकल्याणो गिरा समभिभाषत ।

[ (L. 2) G3 °णोंगिराः सम°; M °णो महर्षिः संशितव्रतः. ]

4 Before 4, all MSS. except M3 ins. वैशं° उ° (Ś1 K0.1.3 D1.5 ■ om. उ°). — a) Ñ1.2 B Da D2 °मागम्य. — b) Ñ1.2 B D (except D5) देवकल्पा महर्षयः. — After 4ab, T G ins.:

1268* धर्मं चैव पुरस्कृत्य श्रेष्ठां मतिमकुर्वत ।
कुरुक्षेत्रमितः कुन्तीं तां सपुत्रां नयामहे ।

भीष्माय पाण्डवान्दातुं धृतराष्ट्राय चैव हि ॥ ५
तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे ।
पाण्डोर्दारांश्च पुत्रांश्च शरीरं चैव तापसाः ॥ ६
सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला ।
प्रपन्ना दीर्घमध्वानं संक्षिप्तं तदमन्यत ॥ ७
सा नदीर्घेण कालेन संप्राप्ता कुरुजाङ्गलम् ।
वर्धमानपुरद्वारमाससाद यशस्विनी ॥ ८
तं चारणसहस्राणां मुनीनामागमं तदा ।
श्रुत्वा नागपुरे नृणां विस्मयः समजायत ॥ ९
मुहूर्तोदित आदित्ये सर्वे धर्मपुरस्कृताः ।
सदारास्तापसान्द्रष्टुं निर्ययुः पुरवासिनः ॥ १०
स्त्रीसंघाः क्षत्रसंघाश्च यानसंघान्समास्थिताः ।
ब्राह्मणैः सह निर्जग्मुर्ब्राह्मणानां च योषितः ॥ ११
तथा विट्शूद्रसंघानां महान्व्यतिकरोऽभवत् ।
न कश्चिदकरोदीर्ष्यामभवन्धर्मबुद्धयः ॥ १२
तथा भीष्मः शांतनवः सोमदत्तोऽथ बाह्लिकः ।
प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयम् ॥ १३
सा च सत्यवती देवी कौसल्या च यशस्विनी ।
राजदारैः परिवृता गान्धारी च विनिर्ययौ ॥ १४
धृतराष्ट्रस्य दायादा दुर्योधनपुरोगमाः ।
भूषिता भूषणैश्चित्रैः शतसंख्या विनिर्ययुः ॥ १५
तान्महर्षिगणान्सर्वाञ्शिरोभिरभिवाद्य च ।

---

After this, the sequence of T G is: $5^{ab}$, $6^{ab}$ (for the first time), $4^{cd}$ and $5^{cd}$ etc. (G3 reads also $6^{cd}$ first time after $6^{ab}$). — After $4^{ab}$, M reads $6^{ab}$ (for the first time). — K3 om. $4^{c}$–$6^{b}$. — c) K3.4 पांडुपुत्रान्. G3 पुत्रान्पुरस्कृत्य ततो.

5 K2 om. [illegible] (*cf.* v. l. 4). *For sequence of* T G cf. v. l. 4. — a) N1.2 D2 M सर्वे (for सिद्धा). T G इत्युक्त्वा ते (G5 एवमुक्त्वा) महात्मानो. — d) K0.1.3 Da2 D5 M तु (for हि).

6 K2 om. $6^{ab}$ (cf. v. l. 4). — [illegible] repeats $6^{ab}$; G3, $6^{cd}$ also (cf. v. l. 4). — b) M3.5 (both second time) समादाय (M3 second time *sup. lin.* तानादाय). T1 G1.3.6 M (all first time) परीवार्योप(M5 °र्थं प्र)तस्थिरे. — c) Ś1 K1.3.4 D6 G4 पुत्रांश्च दारांश्च (by transp.). — d) K (except K1) Ñ2.3 B1 D2.4.5 शरीरे चैव; Ñ1 B3 Da Dn D1 शरीरं ते च; B4 शरीरेणैव; M (except M5) परिवारांश्च. — *After* 6, *B4 ins.*:

1269* आदाय प्रस्थिताः सर्वे दारश्रद्धासगोत्तमात् ।

7 a) M5-8 वा (for सा)! B6 तदा (for पुरा). Ś1 कृत्वा (for भूत्वा). — c) Ñ1 प्रपद्य; Dn1 T1 G5 °सद्य. — d) G3 सा क्षिप्रं (for संक्षि°). Ś1 K (except K0) G1 तमसन्यत.

8 a) K0.2.3 B (except B6) Dn D1.4.5 M5 सा त्वदीर्घेण; Ñ2 D2 सा च दी°; T1 सा तु दी°. — b) K0 प्रपन्ना (for संप्रा°). Some N MSS. कुरुजंगलं. — After 8, Dn D1.2.4 ins.:

1270* द्वारिणं तापसा ऊचू राजानं च प्रकाशय ।
ते तु गत्वा क्षणेनैव सभायां विनिवेदिताः ।

9 a) T1 G1.3.6 तत् (for तं). Ñ2 °सहस्राणि; T G °सहस्रं वै; M °सहस्रेण; Nilp चारण्य°; Cd as in text. — b) K3 Ñ1 D5 T2 G2.6 चागतं; Ñ3 चागमं; D2 G3.4.5 आगतं; G1 च गतं; Cd आगमं (as in text). G2.4 तथा. Ñ2 मुनींश्चैवागतांस्तदा; M मुनीनां (M3.5 ऋषीणां) संघमागतं. — c) G3 तु नगरे; M7 गजपुरे. — d) K2 Ñ1 B D (except D5) समपद्यत.

10 a) M (except M5) मुहूर्ते चोदितादित्ये. — b) Ś1 K1.2 Da1 D2.3 सर्वधर्म°; Dn D1 सर्वे बाल°; S सर्वे भीष्मपुरोगमाः (M °पुरःसराः). — c) Ś1 K0.1.3 B1.3 D1 T G सद्दारांस्ताप°. — K2 (! hapl.) om. $10^{c}$–$11^{c}$.

11 K2 om. $11^{abc}$ (cf. v. l. 10). — a) K0 M क्षत्रसंघानां. — b) K0 Ñ1 B1 D1 यानसंघं; K3 °यानैः; Ñ3 B3.4.6 Da Dn D1.4 यानसंघ; Ñ2 D3 G1-3 °संघाः; G4 योधसंघाः. Ñ3 B1 Da4 अवस्थिताः. T G2.4 समाश्रिताः; G5 °हिताः. — c) K4 G3 सह संजग्मुः; T1 G3 सहिता ज°; T2 G4 सहसा ज°. — d) T2 G1.3.6 ब्राह्मणाश्च सदो°; T1 G2.4 °णाः सहयो°; G5 °णाश्च समाहिताः (cf. c).

13 a) K2.4 M3.5 ततो भी°. — b) K0 °दत्त°. — d) Ś1 विदुरस्तथा.

14 a) Ś1 K1 तु (for च) and धीना (for देवी). — b) Some N MSS. कौशल्या. T G देवी पांचालिकापि च (T1 °का अपि). — d) Dn D1 S (except M3-4) चापि निर्ययौ.

15 b) [illegible] (except M3.8) °पुरःसराः. — c) Ś1 K1.2.4 दिव्यैः; D5 द्रव्यैः (for चित्रैः).

16 a) Ñ3 दिव्यान्; Bm.6 D (except D1.4) सर्वान् (for सर्वान्). — b) Ñ3 अभिपंच. Ś1 K Ñ1 D5 ...

उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः ॥ १६
तथैव शिरसा भूमावभिवाद्य प्रणम्य च ।
उपोपविविशुः सर्वे पौरजानपदा अपि ॥ १७
तमकूजमिवाज्ञाय जनौघं सर्वशस्तदा ।
भीष्मो राज्यं च राष्ट्रं च महर्षिभ्यो न्यवेदयत् ॥ १८
तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी ।
महर्षिमतमाज्ञाय महर्षिरिदमब्रवीत् ॥ १९

यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः ।
कामभोगान्परित्यज्य शतशृङ्गमितो गतः ॥ २०
ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना ।
साक्षाद्धर्मादयं पुत्रस्तस्य जातो युधिष्ठिरः ॥ २१
तथेमं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः ।
मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् ॥ २२
पुरुहूतादयं जज्ञे कुन्त्यां सत्यपराक्रमः । C. 1. B. 1. K. 1.

---

(for च). — After $16^{ab}$, S ins.:

1271* स्वागतं वचनं चोक्त्वा पाण्डोर्भवनमाविशन् ।
[ M चोक्ताः. ]

— c)=$17^{c}$. Ñ1.3 B Da D2.6 ततः सं(B3 प्र)वि°; G3 ते चोपवि°. — Ś1 transp $16^{d}$ and $17^{d}$. — D5 (hapl.) om. $16^{d}$–$17^{c}$; K3 (hapl.) om. $16^{c}$–$17^{b}$. — d) D2.6 G6 कौरवाः. Da च (for स-).

17 Ś1 transp. $16^{d}$ and $17^{d}$; K3 om. $17^{ab}$; D5 om. $17^{abc}$ (cf. v. l. 16). — a) Ñ1 तथैव. K0 °सा सर्वे. — b) Ś1 repeats $16^{b}$ for $17^{b}$. S (except G3) प्रसाद्य च. K0 प्रणिपत्याभिवाद्य च. — c)=$16^{c}$. — d) D6 °आनपदैः सह.

18 Ñ1 om. $18^{ab}$. — a) Ñ3 T3 G6 तमद्भुतम्; D3 °पूज्यम्; G1 तमात्मजम्; G5 °प्रजम्. Ñ3 B Dn D1.4 अभिज्ञाय. K0 D4 कृतमौन(D5 °मौन)मिव ज्ञात्वा; T2 G3.4 अक्रूरमिव चाज्ञाय; G1 स्त्रीपताभिस्तनुज्ञाय. — b) K2-4 सर्वतस्. K1 Da T G (except G1.3) M8 (inf. lin. as in text).3 तथा. — After $18^{ab}$, K4 Ñ B D (except D5) ins.:

1272* पूजयित्वा यथान्यायं पाद्येनार्घ्येण च प्रभो ।

— Ñ3 reads $18^{cd}$ in marg. — c) Ś1 G3 M6-8 transp. राज्यं and राष्ट्रं.

19 Before 19, S ins. वैशं°. — a) K3 तेषां मध्ये. S तेषां वृद्धतमः कश्चित्. — b) K0 सदाजिनी. — c) Ñ B D (except D5) ऋषीणां मतम्. T2 G1.3 आस्थाय.

20 Before 20, M ins. ऋषिः. — a) K0 D5 योऽसौ (for यः स). K2.4 Da1 D2.4 कौरव°. — b) K1 जनाधिपः; D4 महारथः. — c) T G2.4-6 M6-8 हित्वा राज्यं च राष्ट्रं च (M6-8 राष्ट्राणि); G1 हित्वा राष्ट्रं च भोगांश्च; G2 M8.3 हित्वा राष्ट्राणि राज्यं च (cf. $2^{ab}$ and 1273* below). — After 20, D4 (marg. sec. m.) S ins.:

1273* कामभोगान्परित्यज्य तपस्वी संयमुत ह ।
स यथोक्तं तपस्तेपे तत्र मूलफलाशनः ।
पत्नीभ्यां सह धर्मात्मा कंचित्कालमतन्द्रितः ।
तेन वृत्तसमाचारैस्तपसा च तपस्विनः ।
तोषितास्तापसास्तत्र शतशृङ्गनिवासिनः ।
स्वर्गलोकं गन्तुकामं तापसा विनिवार्य तम् ।
ऊचतं सह पत्नीभ्यां विप्रा वचनमब्रुवन् ।
अनपत्यस्य राजेन्द्र पुण्यलोका न सन्ति ते ।
तस्माद्धर्मं च वायुं च महेन्द्रं च तथाश्विनौ ।
आराधयस्व राजेन्द्र पत्नीभ्यां सह देवताः ।
तुष्टाः पुत्रान्प्रयच्छन्ति ऋणमुक्तो भविष्यसि ।
तपसा दिव्यचक्षुष्ट्वात्पश्यामस्ते तथा सुतान् ।
अस्माकं वचनं श्रुत्वा देवानाराधयत्तदा ।

[(L. 1) Prior half=$20^{c}$. — (L. 11) D4 प्रीताः पुत्रान्. — (L. 12) G2.3 दिव्यचक्षुर्भ्यां. ]

G1 cont.:

1274* कुन्ती संप्रेषयामास देवरन्यायधर्मतः ।
स्नानामन्यतमैर्नार्यः पुण्यैरात्प्यायिकैरपि ।
मुनेर्मन्त्रप्रभावेण शंकरांशाभियोगिनः ।
आहूय धर्मं वायुं च महेन्द्रं च तथाश्विनौ ।
असूत पुत्रान्कुन्ती च माद्री च द्वौ सुतावपि ।

21 a) D6 तेन दिव्ये°. — c) T G1-4 M तस्मात्स्वधर्माद्. G1 युधिष्ठिरोयं धर्मात्मा. — d) K3 ज्येष्ठो; Ñ B D (except D5) M6 तत्र; T G2-6 M6.8-8 कुंत्यां (for तस्य). G1 धर्मात्कुंत्यामजायत.

22 a) K2-4 Da तथैव; Ñ B Dn D1.2.4.6 M (except M6) तथैनं; G1 तथास्यां. K2.4 G1 श्रेष्ठः. — d) K3 भीमं भीमपराक्रमं; K3 भीमसेनं महाबलं; S भीमं सत्ववतां वरं.

23 b) K1 Da1 D1.3 कुंत्या. Dn S कुंत्यामेव धनंजयः (cf. 1275*). After $23^{ab}$, D4 (marg. sec. m.) S ins.:

1275* अस्मिञ्जाते महेष्वासे देवाः सेन्द्रास्तथाब्रुवन् ।
मत्प्रसादादयं जातः कुन्त्यां सत्यपराक्रमः ।
अजेयो युधि जेतारीन्देवतादीन्न संशयः ।

[(L. 1) D4 T2 G1.3-6 देवैरिन्द्रस्तथाब्रवीत् (for the posterior half).]

G1 cont.:

1276* स वर्द्धयित्वा हरिणा शुचो भारान्नियोजितः ।

यस्य कीर्तिर्महेष्वासान्सर्वानभिभविष्यति ॥ २३
यौ तु माद्री महेष्वासावसूत कुरुसत्तमौ ।
अश्विभ्यां मनुजव्याघ्राविमौ तावपि तिष्ठतः ॥ २४
चरता धर्मनित्येन वनवासं यशस्विना ।
एष पैतामहो वंशः पाण्डुना पुनरुद्धृतः ॥ २५
पुत्राणां जन्म वृद्धिं च वैदिकाध्ययनानि च ।
पश्यतः सततं पाण्डोः शश्वत्प्रीतिरवर्धत ॥ २६
वर्तमानः सतां वृत्ते पुत्रलाभमवाप्य च ।
पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ॥ २७
तं चितागतमाज्ञाय वैश्वानरमुखे हुतम् ।
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ॥ २८
सा गता सह तेनैव पतिलोकमनुव्रता ।
तस्यास्तस्य च यत्कार्यं क्रियतां तदनन्तरम् ॥ २९
इमे तयोः शरीरे द्वे सुताश्चेमे तयोर्वराः ।

---

नरो मामाविशत्कुन्ति विष्णोरर्धं नरं विदुः ।
सोऽहं त्वामाविशं भद्रे जातोऽहं फल्गुनाह्वयः ।
तस्मादजय्यो भुवने चतुर्दशभिरप्यसौ ।

In D4 (the repetition of) 23cd after 1277* has been scored out — c) K3 D4 (first time) T1 G4 M6-8 अस्य, D4 (second time) तस्य (for यस्य) — d) G3 सर्वान्वै प्रहरिष्यति — D4 (om line 6) ins (marg sec. m) after the first occurrence of 23cd S, after 23:

1277* युधिष्ठिरो राजसूयं भ्रातृवीर्यादवाप्स्यति ।
इन्द्रस्य वचनं श्रुत्वा पाण्डुः प्रीतिमवाप सः ।
एष जेता मनुष्यांश्च सर्वान्गन्धर्वराक्षसान् ।
एष दुर्योधनं कीर्त्या भारतांश्च विजेष्यति ।
वीरस्यैकस्य विक्रान्तैर्धर्मपुत्रो युधिष्ठिरः । [5]
यक्ष्यते राजसूयाद्यैर्धर्म एवापरः सदा ।

[ (L 1) D4 दृष्ट्वा कीर्तिम्, G1 यस्य वीर्याद्. — After line 1, M ins

1278* विजित्य नृपतीन्सर्वान्कृत्वा च करदान्प्रभुः ।
स्वयं भोक्ष्यति धर्मात्मा पृथिवीं सागराम्बराम् ।

— T1 G (except G2) read line 2 (of 1277*) after line 3 — After line 3, G1 ins

1279* सुरासुरोरगांश्चैव वीर्यादेकरथो जयेत् ।

— (L 5) G1 M3 5 वीरस्यैतस्य, G3 वीर्यैरेतस्य, M6-8 अस्य वीरस्य T2 G3 4 5 कुंतीपुत्रो युधि°, G1 सर्वशत्रुभयंकरः. After line 5, G1 ins

1280* अजातशत्रुर्धर्मात्मा पृथ्वीश्वर्याभिपूजितः ।

— (L 6) M राजसूयादीन् T1 G3 धर्म एव वरस्तदा, G1 महतीं कीर्तिमाप्स्यति, M क्रतून्धर्मपरायणः ]

24 ab) Ś1 K1 या तु, G1 M (except M5) इमौ (M5 inf lin यौ तु as in text) M (except M5) माद्या and जातौ च (M5 inf lin repectively माद्री and असूत as in text). Ñ B D (except D5) पुरुषोत्तमौ (for कुरु°) — c) Ñ1 2 B (except B3) Dn D1 पुरुषव्याघ्रौ — d) Ñ1 2 B D (except D5) पश्यत (for तिष्ठ°) M (except M5) जेतारौ युधि शात्रवान् — After 24, D5 (marg. sec. m, om line 2) S ins

1281* नकुलः सहदेवश्च तावप्यमिततेजसौ ।
पाण्डवौ नरशार्दूलाविमावप्यपराजितौ ।

[ (L 1) G1 उभावमित°, G3 °मितविक्रमौ — (L 2) T1 °विमौ चाप्य°, G1 °व्यपराजयौ, G3 °व्यमितौजसौ ]

25 a) B6 D5 नित्यधर्मेण — b) Ś1 K (except K0) D5 महात्मना (K1 °न) (for यश°) — c) B5.6 (both m as in text) Dn D1 4 नष्ट (for एष)

26 a) Ś1 K2 3 4 धर्मवृत्तिं, Dn1 धर्मवृद्धिं; T1 जन्म वृत्तिं, G3 6 जन्मवृत्तं — c) N पश्यत. Ś1 K0 3 4 D1.4 G3 सततिं; K1 शयनं — d) N परां प्रीतिमवाप्स्यथ

27 a) S °ता मार्गे — d) D5 स दशमेहनि

28 a) B1 3 D3 4 चितास्थितम् T2 G M3 4 आसाद्य T1 ततश्चितां समासाद्य — b) G3 °नरहुते मखे

29 a) T1 G3.6 M संगता — b) B3 भर्तृमसमनु°, G1 °लोकं पतिव्रता — c) K0 3 4 सत्कार, M3 यत्कृत्यं — d) T1 G3 4 5 M1 यदनंतरं — After 29, G1 ins

1282* भीष्मं च धृतराष्ट्रं च विदुरं च महामतिम् ।

S ins after 29 (G1, after 1282*)

1283* पृथां च शरणं प्राप्तां पाण्डवांश्च यशस्विनः ।
यथावदनुगृह्णन्तां धर्मो ह्येष सनातनः ।

[ (L 2) G2 पांडवान्परिगृह्णीध्वं धर्मसत्यान्यशस्विनः ]

G1 cont :

1284* एतेषां भरणं भीष्म महान्धर्मस्तथैव च ।
क्षत्तुश्च धृतराष्ट्रस्य गान्धार्याश्च विशेषतः ॥

while M5 cont

1285* इमे शरीरे च तयोः पृथां च शरणागताम् ।
तस्य पुत्रांश्च धर्मज्ञान्सर्वान्सत्कर्तुमर्हथ ।

[ (L 1) Prior half=(var) 30a. With the posterior half of line 1 of 1283*. ]

30 a) K0 एते (for इमे) — b) Ś1 K3 4 Dn D1 पुत्रा (for सुता) G1.5 एते (for इमे) K1 तपोधन (for तयो°) — c) M3 यथावदनु°.

31 a) Ñ B (except B3) D (except D1.4 5) G1

क्रियाभिरनुगृह्णन्तां सह माद्र्या परंतपाः ॥ ३०
तकार्ये च निर्वृत्ते पितृमेधं महायशाः ।
स्मृतां सर्वधर्मज्ञः पाण्डुः कुरुकुलोद्वहः ॥ ३१
एवमुक्त्वा कुरून्सर्वान्कुरूणामेव पश्यताम् ।
क्षणेनान्तर्हिताः सर्वे चारणा गुह्यकैः सह ॥ ३२
गन्धर्वनगराकारं तत्रैवान्तर्हितं पुनः ।
ऋषिसिद्धगणं दृष्ट्वा विस्मयं ते परं ययुः ॥ ३३

इति श्रीमहाभारते आदिपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## ११८

धृतराष्ट्र उवाच ।
पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ।
राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ १
पशून्वासांसि रत्नानि धनानि विविधानि च ।
पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम् ॥ २
यथा च कुन्ती सत्कारं कुर्यान्माद्र्यास्तथा कुरु ।
यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ॥ ३
न शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः । C. 1. B. 1. 127. K. 1.

---

°कार्ये निवृत्ते तु (G1 -पि); G3 °कर्मणि निर्वृते. — b) S पितृमेधे च पांडवाः. — c) D4 S लमं(D4 °भ)तां सर्वदायाद्यं. — d) D4 S पांडोः कुरुकुलोद्वहाः.

32 Before 32, Ś1 K0.1.3 D2.3 T G (except G3) [ins.] वैशं°; Dn D1 वैशं° उ°. — b) S कौरवाणां च प°. — c) Ñ1.2 B D (except D5) तापसा (for चार°). [...]6.1 ऋषयश्चारणैः सह.

33 S transp. 33ab and 33cd. — a) K0 S °कारान् (T1 [...]3 °काराः; G3 as in text). — b) Ñ B (except B5) D (except D1) तथैव. K0 T2 G3.4.5 M अंतर्हितान्; K2 T1 [...]1.5.6 °र्हितः; K4 Dn2 °र्हिताः. T1 G3 M6-8 ततः; T2 [...]1.2.4-6 M3.4 सदा (for पुनः). — c) K0 Dn S (except [...]1 G3) °गणान्. — d) Ś1 K1.2.4 D4.5 परमं (for ते परं). [...]3.6 D5 गताः (for ययुः). K0 ते सर्वे विस्मयं ययुः. — After 33, D4 (marg. sec. m.) S ins.:

1286* कौरव्याः सहसोत्पत्य साधु साध्विति विस्मिताः ।
[ D4 °ध्विति चाब्रुवन्. ]

Colophon om. in B1.3.6. *Major parvan* T2 G1-3 [M]3.5.7 संभव° (for आदि°). — *Sub-parvan* Ś1 K0-2.4 Ñ1.2 B3 Da Dn1.n3 D1.4.5 संभव. — *Adhy. name* K3 D1 पांडवाभि(D1 om. भि)गमनं; Ñ1.2 ऋषिसंवादः; Ñ3 पुरप्रवेशः; T2 G1.4 पांडवानां (G1 पांडव) नगरप्रवेशः (G4 °वेशनं). — *Adhy. no.* (figures, words or both): Dn1.n3 125; D4 126; S 68 (T1 117). — *S'loka no.:* Dn 35; M3 50. — *Aggregate s'loka no.:* Dn2 4933.

### 118

1 Before धृत°, D5 ins.:

1287*　　　　वैशंपायनः ।
कुरवश्च सदा सर्वे पाण्डोः श्रुत्वा तथा विधिम् ।
भीष्मप्रभृतयो माद्र्या जगृहुस्तान्सुतान्सह ।

— K1 S om. उवाच. — c) M3.4 चापि (for चैव). Ś1 K यथा विधिः (Ś1 -विधि; K1 -विदि).

2 a) T1 वसु (for पशून्). B1.3 D2.4 वस्त्राणि; Dn2 वासोपि. K3.4 गाः सुवर्णं च वासांसि. — b) Ś1 वासांसि (sup. lin. sec. m. as in text); B3 सर्वाणि. Ś1 K0-3.4 विपुलानि च. K3 D2.4 विविधा(K3 °पुला)नि धनानि च.

3 a) Ś1 K1 कुंती च (by transp.). T1 कुंत्याः; T2 G3.4.6 M3.4 कुंत्याः. K3 D1 संस्कारं; Ñ1 सत्कार्यं. — b) Ś1 माद्र्याः कुर्यात् (by transp.). T2 G (except G1.3) तथैव च (for तथा कुरु). — c) Ś1 T2 M3 वायुरादित्यः; G1 वायुः सादित्यः. K3.4 Ñ3 यां न (Ñ3 यथा) वायुर्न चादित्यः. — d) Ś1 K सुमध्य(K1 °मुख्य)मां.

4 a) Ś1 मा; Ñ B (except B1) Da D2.4 अ- (for न). G1 न शोच्याः पांडुतनयाः (see below). — b) Ś1 K1 च (for स). G1 प्रशस्याः पार्थिवात्मजाः (see below). — After 4, G1 ins.:

1288* स पाण्डुश्च न शोच्यः स्यात्प्रवरः पुण्यकर्मणाम् ।

[5] Ś1 K0.1.3 D5 S om. उवाच (T1 om. the ref.). — a) K0.3 Ñ1.2 B1.3 Da D1.2.4 M तु; K3.4 तत्; T G स (for त्वं). — b) K3 सह भीष्मे° (by transp.). — c) Ś1 Ñ1.3 सत्कारया°. — d) K3 °संस्कृ°; B6 Dn D1 °पूजि°; S

यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः ॥ ४

वैशंपायन उवाच ।

विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत ।
पाण्डुं संस्कारयामास देशे परमसंवृते ॥ ५
ततस्तु नगराच्चूर्णमाज्यहोमपुरस्कृताः ।
निर्हृताः पावका दीप्ताः पाण्डो राजपुरोहितैः ॥ ६
अथैनमार्तवैर्गन्धैर्माल्यैश्च विविधैर्वरैः ।
शिबिकां समलंचक्रुर्वाससाच्छाद्य सर्वशः ॥ ७
तां तथा शोभितां माल्यैर्वासोभिश्च महाधनैः ।
अमात्या ज्ञातयश्चैव सुहृदश्चोपतस्थिरे ॥ ८
नृसिंहं नरयुक्तेन परमालंकृतेन तम् ।
अवहन्यानमुख्येन सह माद्र्या सुसंवृतम् ॥ ९
पाण्डुरेणातपत्रेण चामरव्यजनेन च ।
सर्ववादित्रनादैश्च समलंचक्रिरे ततः ॥ १०
रत्नानि चाप्युपादाय बहूनि शतशो नराः ।
प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तत्रौर्ध्वदेहिकम् ॥ ११
अथ छत्राणि शुभ्राणि पाण्डुराणि बृहन्ति च ।
आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च ॥ १२
याजकैः शुक्लवासोभिर्हूयमाना हुताशनाः ।
अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलंकृताः ॥ १३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः ।
रुदन्तः शोकसंतप्ता अनुजग्मुर्नराधिपम् ॥ १४

°संम° (for °संवृ°).

6 a) T2 स्म (for तु). G1 ततो नागपुरात्तूर्णं. — b) Ñ1.2 B D (except D3) M3 आज्य(D3 माल्य)गंध°. — c) Ś1 निघृताः; K4 निनि° (sic); Dn निर्दं°; T2 G3 निः(T2 नि)सृ°; M6-8 निर्दू°. — d) K2.4 Ñ1.2 B6 Dn राजन्पुरो°. — After 6, G1 ins.:

1289* पलाशावृन्तकाष्ठैश्च कुशामुञ्जकवल्वजैः ।
सूत्रोक्तेन विधानेन शरीरे चक्रुरञ्जसा ।
अथ दर्भैस्तयोर्भूप कृत्वा प्रतिकृती तयोः ।
शिबिकायामथारोप्य शोभितायामलंकृतैः ।

7 ab) Ś1 K1.3 Ñ1.2 Da2 G1.3 अथैनाम्; Ko अप्येनम्; M3 तथैनम्. Ko D4 माल्यैर्गंधैश्च (by transp.); Ñ3 पुष्पैः सुगंधैर्; Ñ3 B Da Dn D1.2.4 G1 पुष्पै(Dn2 °ष्यै)र्गंधैश्च (for गन्धैर्माल्यैश्च). K1 °तवैर्गंधपुष्पैर्धूपविलेपनैः. — c) T1 G3 शिबिकास्थम्. N (except Ś1 K1) G1 M ताम् (for सम्-). Ko Ñ1.2 B D G1.3 अलंकृत्य. — d) S वस्त्रै॰राच्छाद्य. K1.2.4 सर्वतः. — After 7, G1 ins.:

1290* मुक्ताप्रवालमाणिक्यहेमस्रग्भिरलंकृताम् ।

8 a) T2 G4-6 तं तथा. K3 T2 G2.4-6 शोभितं; T1 G3 शोभितैर्. — b) Ko D4 S विविधैश्च. K1 परंतप; Ñ1.2 B (except B6) Da D2.4 महाद्युते:. — After 8ab, G1 ins.:

1291* दर्पणाशोकपुंनागमल्लिकाजातिचम्पकैः ।
नालिकेरफलैः पुष्पैः पूगीफलसुनार्चितैः ।

and thereafter repeats 8ab (the usual indication of interpolation). — c) Ñ1.2 Dn D1 चैनं. K1 सर्वसंभृतसंभारः. — d) K1 तं जनाः; M (except M3) याजकाः (for सुहृदः). G1 चोपजीविनः; G3 चावतस्थिरे.

9 a) K1 B1 Da T2 Nilp नृसिंह (voc.); Arjp as in text. G1 नरमुख्येन. — b) K1 B1 D1 G1 च (for तम्). — c) B1 अहरन् (m as in text). — d) K1 मग्न॰ चापि. T G2.4 सुसंभृतं.

10 a) S (except T1 G3.6) पांडरेण. — b) G ॰व्यजनैरपि. — c) K3 °शब्दैश्च.

11 a) S ततः सर्वाणि रत्नानि (G1 रम्याणि). — b) G1 नृपः; G3 नृपाः (for नराः). — d) Ś1 तत्रौर्ध्वदेहिकं; Ko 1.3 G3 तत्रोर्ध्वदेहिकं (K3.4 °के); K1 तत्रौर्ध्वदैहिकं (sic), K… D3 T1 तत्रो(T1 °त्रौ)र्ध्वदेहिके; Ñ B तस्यौर्ध्व°; Da2 तस्योर्ध्वं… Dn D1.2.4 तस्यौर्ध्वदे(Dn2 °स्योर्ध्वदे)हिके; T2 G1.2 तत्रौर्ध्वदेहिके; G2 तत्रोर्ध्वदैहिकं.

12 a) T G अच्छिद्राणि च. D3 यानानि; D3 सर्वाणि; T2 छिद्राणि; G1 कुंभानि; Cd शुभ्रा° (as in text). — b) Ñ1.2 B1.3 D (except Da) चामराणि; B1 m.2.3 S (except T1) पांड°; Cd as in text. D3 महांति च; Ś1 K1 च धनानि बहूनि च. — c) T1 पांडवस्यार्थे. — d) Ś1 K1 च धनानि G3 विविधानि (for रुचि°).

13 a) K3 याज्ञिकैः; Cd as in text. Ko चित्र°; Da2 … शुभ्र° (for शुक्ल°). — c) K4 B3 Da1 D1.2 T2 G1 आगच्छन्; B3m अतिष्ठन्. Ś1 Ko तत्र (for तस्य).

14 a) Ñ1.2 B1.6 Da विशेषतः; G1 परे च ये (for सह°). — c) K4 क्रंदंतः शो°. — After 14c, G1 ins.:

1293* रुदन्तश्च तथा स्त्रियः ।
विकीर्णमूर्धजाः सर्वे मूर्ध्नि विन्यस्तपाणयः ।
उरस्ताडं रुदन्त्यश्च स्त्रियः सर्वा अनुव्रताः ।
एकवस्त्रधराः सर्वे निराभरणभूषिताः ।
नोष्णीषिणो महाराज निरानन्दा भृशातुराः ।

## १९०

द्रुपद उवाच ।
अश्रुत्वैवं वचनं ते महर्षे
मया पूर्वं यतितं कार्यमेतत् ।
न वै शक्यं विहितस्यापयातुं
तदेवेदमुपपन्नं विधानम् ॥ १
दिष्टस्य ग्रन्थिरनिवर्तनीयः
स्वकर्मणा विहितं नेह किंचित् ।
कृतं निमित्तं हि वरैकहेतो-
स्तदेवेदमुपपन्नं बहूनाम् ॥ २
यथैव कृष्णोक्तवती पुरस्ता-
न्नैकान्पतीन्मे भगवान्ददातु ।
स चाप्येवं वरमित्यब्रवीत्तां
देवो हि वेद परमं यदत्र ॥ ३
यदि वायं विहितः शंकरेण
धर्मोऽधर्मो वा नात्र ममापराधः ।
गृह्णन्त्विमे विधिवत्पाणिमस्या

---

of 114 lines, comprising two adhyayas, given in App I (No 100), which are ins. in S after adhy 188

Colophon om in K₄ — *Major parvan* T₁ G M सभव° (for आदि°) — *Sub-parvan* K₃ द्रौपदीविवाह, B₁ Dn₃ D₅ द्रौपदीस्वयंवर, Dn₁ n₂ स्वयंवर, T₁ सभव, to these K₃ B₁ Dn D₅ add पंचेंद्रोपाख्यान Ś₁ K₀-₂ Ñ₃ B₃ ₅ ₆ Da D₂ ₄ (all om the sub parvan name) mention only पंचेंद्रोपाख्यान — *Adhy no* (figures, words or both) Dn₂ 196, D₃m 203, D₅ 147, T₁ 200, T₂ G₄-₆ 152, G₁ ₃ 154, G₂ 151, M 153 — *Śloka no* Da 52, Dn 53, M₈ 8. — *Aggregate śloka no* Dn₂ 7308

### 190

1 Ś₁ K₁ S om उवाच — Ñ₁ V₁ B₆ subst for 1ᵃᵇ Da Dn₂ ins before 1ᵃᵇ

1923* श्रुत्वा वचस्तथ्यमिदं महार्थं
नष्टप्रमोहोऽस्मि महानुभाव ।

— ᵃ) Ś₁ K₀ अश्रुत्वैव, K₂ श्रुत्वा त्वद, K₃ अश्रुत्वैतद्, T₂ G (except G₁ ₃) श्रुत्वैवैव — ᶜ) T G₃-₆ यदिदं; G₁ यदित, G₃ विदित K₁ Ñ₂ ₃ B₁ ₃ ₅ D (except D₅) सविधातु (K₂ °न), S वर्जयित्वा — ᶜ) K₁ नैव, Ñ₃ D₁ नैव S न हि (for न वै) K₂ N₂ ₃ V₁ B Dn D₁ ₃ ₄ विहितस्यापयान, S °ताच्चापयातु — ᵈ) Ś₁ K₁ तदेवैतदुप°. N₁ B₁ निधान Cf 2ᵈ

2 ᵃ) Ś₁ K₀ ₁,₂ Ñ₁ T₁ अनुवर्त°, B₁ न निवर्त° — ᵇ) Ś₁ चेह, K₁ तत्र, K₃ सेह, S चैव (M₆-₈ त्वेव) B₆ कश्चित्, D₅ केश्चित्; M₈ *sup lin* सर्वं — ᶜ) Ñ₃ कृत मयत — ᵈ) K₀ ₃ ₄ तथैवेदम्, G₁ तदेवेनम्, M₅ ₆ तदेव चेद् K₃ Ñ₂ ₃ B₃m ₅ ₆ Dn D₁ विधान (for बहू°); cf 1ᵈ

3 ᵃ) Ś₁ K₁ यदैव — ᵇ) K₁ नैक पतिं मे, K₂ एतान्पतीन्मा, G₁ नैतान्पतीन्मे Cd cites नैकान् — ᶜ) M₆-₈ न (for स) B₆ चाप्येन; S चाप्येतद् Ś₁ K₀ ₃ ₄ T₁ वरमित्यब्र°, B₆ वरमब्र°; B₆ वरमित्येवाब्र° G₃ ₆ M₃ (*sup lin* as in text) सदा (for तां) — ᵈ) D₅ ह, M₆ ₈ अपि (for हि) Ñ₂ ₃ V₁ B₂ ₅ Dn D₁ वेत्ता, D₂ वै (for वेद)

4 D₁ reads 4 after 6 — ᵃ) B₆ Da D₂ यदे(Da °दे)वेद Ś₁ वेय, K (except K₁) Ñ₂ ₃ B₁ ₃ ₅ Dn D₁ ₄ ₅ चैव, Ñ₁ चेद्, V₁ सार, S स्वय (M₈ स्थिय) (for वाय) Ś₁ K (except K₁) विहिता, B₆ N₁ V₁ Da D₂ °त — ᵇ) K₁ मे (for वा) D₅ om वा K₀ ₃ से मे, D₂ मे है (for मम) — ᶜ) S पाद्वा पाणिमस्या (T₁ पाणिमस्या यथावद्) — ᵈ) Ñ₃ D₁ यथायोग, S यथाजोष (G₁ °न्याय, M₈ as in text) Ś₁ K₁ ₄ N₁ विहितेषा G₁ विहिता हि कृष्णा — After 4 K₄ (marg ) D₅ (marg *sec m.*) ins

1924* नाय विधिर्मानुषाणां विवाहे
देवा ह्येते द्रौपदी चापि लक्ष्मी ।
प्राक्कर्मणा स्वकृतास्तत्र भर्तृ-
नवाप्स्येषा देवदेवप्रसादात् ।
नैषामेवाय विहित सद्विवाहो
यद्वार्येषा द्रौपदी पाण्डवानाम् ॥

K₄ cont.

1925* अन्येऽप्येव स्युर्मनुष्याः स्त्रियश्च

यथोपजोषं विहितैषां हि कृष्णा ॥ ४

वैशंपायन उवाच ।

ततोऽब्रवीद्भगवान्धर्मराज-
मद्य पुण्याहमुत पाण्डवेय ।
अद्य पौष्यं योगमुपैति चन्द्रमाः
पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ॥ ५

ततो राजा यज्ञसेनः सपुत्रो
जन्यार्थयुक्तं बहु तत्तदग्र्यम् ।
समानयामास सुतां च कृष्णा-
माप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ ६

ततः सर्वे सुहृदस्तत्र तस्य
समाजग्मुः सचिवा मन्त्रिणश्च ।
द्रष्टुं विवाहं परमप्रतीता
द्विजाश्च पौराश्च यथाप्रधानाः ॥ ७

तत्तस्य वेश्मार्थिजनोपशोभितं
विकीर्णपद्मोत्पलभूषिताजिरम् ।
महार्हरत्नौघविचित्रमाबभौ
दिवं यथा निर्मलतारकाचितम् ॥ ८

ततस्तु ते कौरवराजपुत्रा
विभूषिताः कुण्डलिनो युवानः ।
महार्हवस्त्रा वरचन्दनोक्षिताः
कृताभिषेकाः कृतमङ्गलक्रियाः ॥ ९

पुरोहितेनाग्निसमानवर्चसा
सहैव धौम्येन यथाविधि प्रभो ।
क्रमेण सर्वे विविशुश्च तत्सदो
महर्षभा गोष्ठमिवाभिनन्दिनः ॥ १० C. 1: B. 1: K. 1:

---

न धर्मः स्यान्मानवोक्तो नरेन्द्र ।

4 Ś1 K (except K0) S om. उवाच. For 4 see below. — a) Ś1 भार्गवो धर्म°. — b) K4 Ñ V2 B6 Dn D3.4 अद्यैव (for अद्य). K0 D5 उत्तमं; K4 Ñ V2 B6 Dn D4 उत वः; B5 शुभं वः (for उत). K0.4 Ñ2.3 V1 B5.6 Dn D1.5 पांडवेयाः. B1.3 D2 D1.2 पुण्याहमद्यैव युधिष्ठिरेति. — c) Ś1 K4 V1 पुष्यं योगम्; K1 पुष्ययोगम्; K2 योगं पुष्यम्; Ñ1 पुष्ये योगम्. K3 Ñ1 चंद्रः. K0.2 पौष्यं योगं चाद्य चंद्रोभ्युपैति. Nilp पौष्पं (for पौष्यं). — d) K3 om. त्वं. Ñ1 D2 om. अद्य. B6 ब्राह्मो मुहूर्तश्च तथैव राजन्. — After 5, B5 ins.:

1926* पाणिं गृहाण प्रथमं त्वमस्याः
पाञ्चालराजस्य नरेन्द्र पुत्र्याः ।

S subst. for 5; D4 ins. after 1924*:

1927* तत आजग्मतुस्तत्र तौ कृष्णद्रुपदावुभौ ।
कुन्ती सपुत्रा यत्रास्ते धृष्टद्युम्नश्च पार्षतः ।
ततो द्वैपायनः कृष्णो युधिष्ठिरमथाब्रवीत् ।
अद्य पुण्यमहश्चन्द्रो रोहिण्या च समेष्यति ।
क्रमेण मनुजव्याघ्राः पाणिं गृह्णन्तु पाण्डवाः । [5]
द्रौपद्या धर्मतः सर्वं दृष्टमेतत्पुरानघ ।

[ (L. 5) G1.3 मनुजव्याघ्र. — (L. 6) G2-4 धर्मतश्चेमे. ]

6 b) Ś1 K1 ज्ञानार्थयुक्तं; Ñ2.3 V1 B1.3 Dn D2.4.5 जन्यार्थमुक्तं; T1 G2-4 M जन्मयंयुक्तं; G1 कन्यार्थमुक्तं. Cd cites जन्यः (= जामाता). D5 बहुरत्नमग्र्यं; G5.6 M6-8 बहु तत्तदाग्र्यं. — c) B6 D2 संसज्जयामास; T G2-6 संमाव°; G1 M समर्थ°. — d) Ś1 K V1 आप्लुत्य; Ñ1 आसिच्य. Ś1 विभूष्या; K3 D2 विभूषितां (for विभूष्य). — After 6, D1 reads 4.

7 a) K2 Ñ2.3 B D (except D5) ततस्तु सर्वे सुहृदो नृपस्य. — b) K2 B5.6 D (except D5) सहिताः; B1.3 मुदिता (for सचि°). — d) Ś1 K1 Ñ1 V1 B5 D2 °प्रधानं; K3 °प्रवीराः.

8 a) K2 Ñ2.3 V1 B D G1.2 सतोऽस्य. Ś1 K0.1.3.4 Ñ1 D5 आर्थिजनोपपन्नं; K2 Ñ2.3 V1 B D2 Dn D3.2.4 आग्र्य(K3 D2 Dn2 °प्र)जनो°. — b) Ś1 K1 °भूषितं महं; Ñ1 विकीर्णपुष्पोत्करभू°; Ñ2.3 B6 Dn D5 विस्तीर्ण°; V1 प्रकीर्ण°; T2 G °शोभिताजिरं (G5.6 °ताग्रिकं). — c) K1 Ñ2.3 V1 B D बलौघ; T2 G M6.8 बभूव; T1 M6-8 अनेक- (for महार्ह-). — d) Ś1 K2 Ñ V1 B D (except D5) नभो यथा. Ñ2.3 Dn2 n2 D5 T2 G3-6 °तारकान्वितं.

9 b) S सुवेषाः. — c) B6 °चंदनाक्ताः; D2 °चंदनोक्ताः. Ś1 K (except K2) Ñ1 D5 महार्हमाल्यांबर°; Ñ2.3 V1 B1.3 Dn D1 °वस्त्रांबर°. — d) S °कौतुक°.

10 a) S °समान(G3 M °समेन)तेजसा. — b) Dn सदैव धौ°. S तथा यथा(G3 यथा तथा; M तदा यथा)विधि (G2 तथाविधिर्यथा). — c) K2 ततस्तदा; Ñ2.3 V1 B1.3 Dn D1.2 ततः सदो; B6 ततश्च तन्. — d) K3 मत्तर्षभा. K1 D5 °नंदिताः; K2 M6-8 °नंदितः; Ñ1.3 V1 B1 (m as in text) Dn2 D2 °नर्दिनः. K3 महर्षिसंजुष्टमतीव नंदिताः.

11 a) K2 अवनीय; Ñ1 B D3.4.5 G1.3 M5 अनु°; D2

ततः समाधाय स वेदपारगो
जुहाव मन्त्रैर्ज्वलितं हुताशनम् ।
युधिष्ठिरं चाप्युपनीय मन्त्रवि-
न्नियोजयामास सहैव कृष्णया ॥ ११

प्रदक्षिणं तौ प्रगृहीतपाणी
समानयामास स वेदपारगः ।
ततोऽभ्यनुज्ञाय तमाजिशोभिनं
पुरोहितो राजगृहाद्विनिर्ययौ ॥ १२

क्रमेण चानेन नराधिपात्मजा
वरस्त्रियास्ते जगृहुस्तदा करम् ।
अहन्यहन्युत्तमरूपधारिणो
महारथाः कौरववंशवर्धनाः ॥ १३

इदं च तत्राद्भुतरूपमुत्तमं
जगाद विप्रर्षिरतीतमानुषम् ।
महानुभावा किल सा सुमध्यमा
बभूव कन्यैव गते गतेऽहनि ॥ १४

कृते विवाहे द्रुपदो धनं ददौ
महारथेभ्यो बहुरूपमुत्तमम् ।
शतं रथानां वरहेमभूषिणां
चतुर्युजां हेमखलीनमालिनाम् ॥ १५

शतं गजानामभिपद्मिनां तथा
शतं गिरीणामिव हेमशृङ्गिणाम् ।
तथैव दासीशतमग्र्ययौवनं
महार्हवेषाभरणाम्बरस्रजम् ॥ १६

---

Dn1. n2 T3 G3. 4 अप°.

12 [a]) B3 प्रगृहीतपाणिकौ; S परिगृह्य पाणिना. — [b]) K3 Ñ1. 3 B D (except D1. 3) परी(K3 Da1 °रि)णयामास; Ñ2 परिणाय्यमा°; V1 प्रणीययया°. — After 12[ab], D4 (marg. sec. m.) S ins.:

1928* विप्रांस्तु संतर्प्य युधिष्ठिरोऽग्र्यै-
र्गोभिश्च रत्नैर्विविधैरपूर्वैः ।
जग्राह पाणिं नरदेवपुत्र्या
धौम्येन मन्त्रैर्विधिवद्धुतेऽग्नौ ।
ततोऽन्तरिक्षात्कुसुमानि पेतु-
र्ववौ च वायुः सुमनोज्ञगन्धः ॥

[ (L. 1) D4 T G1–3 धनैः (for अग्र्यैः). — (L. 2) M6–8 गोभिर्हिरण्यैर्. T2 G विविधैश्च पूर्वं. — (L. 3) T1 G2 M6–8 नरदेवजाया; T2 G3. 4. 6 M8 नरदेवकन्यया. ]

— [c]) Ś1 K (except K3) समभ्यनु°. K3 समाजशोभितं; Ñ1 B3 G3. 6 °शोभनं; Da1 D1. 5 G1 °शोभितं.

13 [a]) K3. 5 चान्येन; Ñ3 B1 (m as in text). 3 चान्ये च. Ñ1 °धिपा ये; B6 D3 नृपाधिपा°. — [b]) K0. 2 Ñ2. 3 B1 Dn1. n2 G1. 2. 3 M6–8 वरस्त्रियस्ते. S (except G2 M8) करं तदा (by transp.). — [c]) K2 T1 उत्तमवेष°; K4 अद्भुतरूप°. — [d]) Ñ1 D3 महाबलाः.

14 [b]) V1 जगाम. Ñ3 Dn D1 देवर्षिर्. K0. 1 V1 B1 (m as in text) Dn1. n2 D6 अतीव मानुषं; K3. 4 अमानुषं तदा. S दधार कृष्णा वपुरातिमानुषं. — [c]) K3 G2. 3 किल साधुम°. — [d]) T2 G (except G3) कन्येव. K2 गतेहनि ध्रुवं. — After 14, D4 marg. sec. m. ins. (the s'loka 1):

[illegible] ज्येष्ठे पतिदेवरतानुजे ।
मध्यमेषु च पाञ्चाल्याः त्रितयं त्रितयं त्रिषु ।

15 [b]) K4 बहुरत्नमुत्तमं. — [c]) Ś1 K1 महारथानां. K1 °रूपिणां; K2. 3 Ñ2. 3 V1 B D M8 °मालिनां (D3 °भूषणां); Ñ1 °भूषणं; T G M6–8 °भूषितं. — [d]) Ś1 K1 चतुःशतं. K2. 3 B Da Dn2 D2. 4 °खलीनवाजिनां; S °विचित्रमालिनां.

16 [a]) Cf. 1. 178. 9 for अभिपद्मिन्. Ś1 K1. 3. 4 Ñ V1 B D G3 M6–8 अपि (for अभि-). V1 पद्मिनां च; B4 पद्मिनां शतं; Dn2 D3 G3 पद्मशालिनां; T G1–3. 6 M पद्मजा(M8 °का)नां. — [b]) S तथा (G6 महा-). — After 16[ab], S (except M8) ins.:

1930* शतं दशाश्वान्मणिहेमभूषणा-
न्मनोजवान्द्वादशवार्षिकांस्तथा ।

[ [a]) G1 °हेमभूषिणां; M6–8 °हेमभूषिणो. — [b]) G1 पंक्तिशतानमेकान्; M6–8 द्वादशवार्षिकान्वरान्. ]

— [d]) Some MSS. (mostly B) °वेषा°. — After 16, D4 (marg. sec. m.) S ins.:

1931* हैमानि शय्यासनभाजनानि
द्रव्याणि चान्यानि महाधनानि ।

[ [b]) G2 दिव्यानि (for द्रव्याणि). G1 महाधनानि; M2. 8 च गोधनानि. ]

17 M6–8 om. 17[a]–18[a]. — [a]) Ś1 K1 Ñ1 चैव दशाय(Ñ1 °यु)तं ददौ; K0. 2 V1 चैव दशायुतार्पितं; K2. 4 B1. 2. 6 D2. 3 चैव दशायुताथु(D1. 3 °न्वि)तं; Ñ2. 3 B3 Da Dn दिव्यदशां पुनर्ददौ; D4. 5 चैव दशान्वितायुतं; S (M6–8 om.) चैव दशायुता(T1 °धा-; G1 °गा)नि. — [b]) K3. 4 D1. 5 T1 ददौ धनं (by transp.); Ñ2 धनं तदा; N2. 3 V1 Da Dn

पृथक् पृथक् चैव दशायुतान्वितं
धनं ददौ सौमकिरग्निसाक्षिकम् ।
तथैव वस्त्राणि च भूषणानि
प्रभावयुक्तानि महाधनानि ॥ १७

कृते विवाहे च ततः स पाण्डवाः
प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः
पुरे [redacted] पाञ्चालनृपस्य तस्य ह ॥ १८

इति श्रीमहाभारते आदिपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

## १९१

वैशंपायन उवाच ।
पाण्डवैः सह संयोगं गतस्य द्रुपदस्य तु ।
न बभूव भयं किंचिद्देवेभ्योऽपि कथंचन ॥ १
कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
नाम संकीर्तयन्त्यस्ताः पादौ जग्मुः स्वमूर्धभिः ॥ २
कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला ।
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलिः ॥ ३
रूपलक्षणसंपन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत्प्रेम्णा पृथाशीर्वचनं स्नुषाम् ॥ ४
यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ ।

$M_8$ तदा धनं; $B_6$ तथा धनं. A few MSS. सोमकिर्. $K_{0.3}$ $D_4$ अग्निमौलिकं; $K_4$ अग्निसायकं. $Ś_1$ $K_2$ धनेन सौवर्णिकमुक्तमालिकं. — $^c$) $K_3$ $Ñ_{2.3}$ B D (except $D_5$) $T_1$ वित्; $Ñ_1$ स- (for च). — $^d$) $Ś_1$ $K_1$ स्वभाव°; $V_1$ प्रताप°. $K_3$ $Ñ_{2.3}$ $V_1$ B D (except $D_5$) महानुभावः; $Ñ_1$ °नृपस्य; $T_2$ $G_{2-4}$ महासनानि; $G_1$ °रथानि.

18 $M_{6-8}$ om. $18^{abc}$ (cf. v. l. 17). — $^a$) $B_{1.3}$ D (except $D_4$) तु (for च). $K_3$ $Ñ_{2.3}$ B D (except $D_5$) T $G_{2-6}$ तु; $V_1$ अथ (for स). — $^c$) $G_1$ महारथाः. — $^d$) $Ś_1$ $K_{0.1}$ $Ñ_1$ $T_1$ पुरे स; $K_3$ पुरे च; $V_1$ पुरेषु. A few MSS. पंचाल°. $Ś_1$ $K_{0.3.4}$ D तस्य (om. ह); $K_2$ तस्य तु; $T_1$ तत्र ह; $M_3$ तत्र सः. — After 18, $D_4$ (marg. sec. m.) S ins.:

1932* सर्वेऽप्यतुल्यवपु पाण्डवेया-
स्तस्याः शुभैः शीलसमाधिवृत्तैः ।
सा चाप्येषां याज्ञसेनी तदानीं
विवर्धयामास मुदं स्ववृत्तैः ॥
[ $^a$) $T_1$ सा चारुवेषा. — $^d$) $T_1$ $G_{2-4.6}$ सुवृत्तैः. ]

Colophon. *Major parvan:* $T_2$ [redacted] M संभव° (for आदि°). — *Sub-parvan:* $Ś_1$ K $Ñ_3$ $B_{3.5.6}$ $D_a$ $D_n$ $D_{2.4}$ द्रौपदीविवाह ($K_0$ °दीवैवाहिक); $B_1$ $D_5$ द्रौपदीस्वयंवर ($D_5$ °स्वयंविवाह); $Ñ_3$ $B_6$ $D_4$ add समाप्त. — *Adhy. name:* $T_2$ $G_{1.3.4}$ M द्रौपदीविवाहः. — *Adhy no.* (figures, words or both): $D_{n1}$ 197; $D_4$m 204; $D_5$ 148; $T_1$ 201; $T_2$ $G_{4-6}$ 153; $G_{1.3}$ 155; $G_2$ 150; M 154. — *S'loka* no.: $D_n$ 17; $M_8$ 24. — *Aggregate s'loka no.:* $D_{n1}$ 7325.

## 191

1 $K_{1.3}$ $D_5$ S om. उवाच. — After the ref., $D_4$ (marg. sec. m.) S ins.:

1933* एवं विवाहं कृत्वा ते वीरा द्रुपदवेश्मनि ।
ऊषुः सर्वे यथा पुण्यं कृतयत्नोऽन्तरिक्षगाः ।

— $^b$) $T_2$ $G_{3-4}$ कृत°; Cd गत° (as in text). $Ś_1$ $K_1$ $N_3$ च; $K_{0.2}$ Ñ [redacted] D $G_{3.6}$ ह ($Ñ_1$ $D_6$ वै); Cd तु (as in text). — $^d$) $K_{0.4}$ कदाचन.

2 $^{cd}$) $K_1$ स्वं; Ñ $V_1$ B D अस्याः (for ताः). $Ś_1$ नाम संकीर्त्य स्वं तस्याः (for °). $Ś_1$ जह्रुः; $K_3$ चक्रुः (for जग्मुः). Ñ $V_1$ B D जग्मुः पादौ (by transp.). $Ś_1$ $K_1$ $Ñ_3$ $D_{n1}$ स्व($Ñ_3$ स)मूर्धनि; $B_1$m स्व मूर्धभिः. S पादौ ववंदिरे हृष्टाः शिरोभिर्नाम कीर्तयन्.

3 $^a$) S द्रौपदी (for कृष्णा च). — $^c$) $K_0$ स्वस्याः; $K_3$ स्वश्र्व्याः; $K_4$ स्वस्ताः; $Ñ_{2.3}$ $V_1$ $B_{1.3}$ $D_a$ $D_{2.4}$ श्वश्र्वाः. $Ñ_1$ कृत्वाभिवादनं श्वश्र्वाः; S अभिवाद्य तदा ($T_1$ $M_7$ तथा; $G_3$ कृता) श्वश्रूं.

4 $^a$) $V_1$ °संवीतां; $T_1$ $G_{1.3}$ °यौवन°. — $^b$) $T_1$ °चारवर्ती शुभां. — $^c$) $K_3$ °दीं प्रावदत्.

5 Before 5, S (except $T_1$ $M_3$) ins. कुंती. — $^a$) $K_3$ हरिगृहे. — $^c$) $Ś_1$ K (except $K_3$) $D_5$ $M_3$ चंद्रे (for सोमे).

6 $^b$) Some MSS. वसिष्ठे. — After $6^{ab}$, $K_{0.2}$ $D_5$ ins.:

रोहिणी च यथा सोमे दमयन्ती यथा नले ॥ ५
यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ॥ ६
जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी स्वनुव्रता ॥ ७
अतिथीनागतान्साधून्बालान्वृद्धान्गुरूंस्तथा ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ ८
कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सलम् ॥ ९
पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ १०
पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ॥ ११
यथा च त्वाभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽभिनन्दिष्ये सूतपुत्रां गुणान्विताम् ॥ १२
ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः ।
मुक्तावैडूर्यचित्राणि हैमान्याभरणानि च ॥ १३
वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ १४
शयनासनयानानि विविधानि महान्ति च ।
वैडूर्यवज्रचित्राणि शतशो भाजनानि च ॥ १५
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलंकृताः ।

1934* यथा दाशरथौ सीता यथा रुद्रे नगात्मजा ।;
while T2 G (except G1) ins.:
1935* लोपामुद्रा यथागस्त्ये यथा रामे च जानकी ।
— After 6ᵃ, T2 G2-4 ins.:
1936* वाग्देवी चतुरानने ।
गिरिजा गिरिशे यद्वत्प्रभा भानौ यथा स्थिरा ।
स्थिरा च वल्लभा च त्वं.
— ᵈ) T2 G2-4 सुप्रीता (for तथा त्वं).

7 ᵃ) Ś1 K2 जीव त्वं. — ᵇ) K2 Ñ3 B Da D2.4 °गुणान्विता; S °पुत्र°. — ᵈ) Ko 2.3 D3 धर्मपत्नी; Ñ3 याज्ञसेनि. K1 B D3 4.5 पत° ; Ñ1 अनु° ; Ñ2.3 V1 Da Dn D1 पति° ; S भवानघे.

8 ᵃ) K1 Ñ3 B Da D2.4 बालान् (for साधून्). — ᵇ) M2.3 तथा गुरून् (by transp.). K2 Ñ3 B Da D2.4 साधून्वृद्धांस्तथा गुरून्; Ñ1.2 V1 Dn D1 वृद्धान्बालांस्तथा गुरून्. — ᶜ) G1 M पूजयित्वा.

9 ᵃ) Some MSS. °जंगल°; K2 °मध्येषु. — ᵇ) K1 नगरेषु अनुत्तम. — ᶜ) B3 तत्र; D1 अत्र (for अनु). Ś1 Ko.1.2.4 D3 °षिचंतु; D1 G1.2 Ko.2.4 D3 त्वाम्. Ś1 Ko.1.2.4 D3 °षिचंतु; Cd as in text. K2 अभिषिच्यस्व नृपतिं. — ᵈ) °षिचस्व; Cd as in text. K2 स्वपतिं M3 राजानं. Ñ2.3 V1 B3 Dn D1.4 °वत्सला. K2 स्वपतिं धर्मवत्सला; T G M6-8 नृपतीन्धर्मवत्सलान्. Cd cites नृपतिं अनु.

10 ᵃ) Ñ1 एनां विनिर्जिताम्; B3 पतिभिर्विजिताम्. — ᵇ) Ś1 K1 क्रमेण च महा° ; D3 °मेण महारणे. — ᶜ) S (except T1 G2.3 M3) सर्वम्. — ᵈ) Ś1 स्वाच्छन्दं;

11 ᵃ) K2 Ko.1 [illegible]

12 ᵃ) Ko.2.4 G3 M6-8 यथा त्वा(M6-8 °द)मभिनं°. — ᵇ) Da मध्यम; D3 विशुद्ध. K2 Ñ3 B Da D2.4 क्षौमवाससं. — ᶜ) Ś1 S °पि (for ऽभि°). — ᵈ) K1.1 Ñ2.3 B D आत्मपुत्री; Cd as in text. V1 S सुतान्पुत्रां न्गुणान्वितान्.

13 Before 13, all MSS. except K4 ins. वैशं° उ° (Ś1 K1.2 D1 S om. उ°). — ᵃᵇ) Ś1 पार्थे° (for पाण्डु°). K2 Ñ1 धनं; Ñ3 *inf. lin.* विभुः (for हरिः). S प्राहिणो द्वासुदेवश्च (M °स्तु) पाण्डवेभ्यो रिपुंजयः. — ᶜ) Ñ2.3 Dn D1 वैडूर्यमणि°; M6 °रत्नानि. — D2 (hapl.) om. 13ᵈ–15ᶜ; M2.4 transp. 13ᵈ and 15ᵈ.

14 D2 om. 14 (cf. v. l. 13). — ᵇ) T1 भूषणान्यु समानि च. — ᶜ) Ñ1 V1 M3.5 कंबलानि च. Ko.2.4 °मुख्यानि; G1 °चित्राणि; M2.3 °दिव्यानि (for °रत्नानि). — ᵈ) T1 स्वर्णवंति; G1 रत्नानि च. Ko.2 Ñ1 सुखानि च

15 D2 om. 15ᵃᵇ (cf. v. l. 13). — ᵃ) B1 शयनानि च या°. — ᶜ) Ko.2.4 वज्रवैडूर्य° (by transp.); Ñ1 D1 T2 G (except G3) °रत्न°; D3 मुक्तावैडूर्य°. — ᵈ) M2.4 transp. 13ᵈ and 15ᵈ.

16 ᵃ) K2 °लावण्यैर्. — ᵇ) K2 उपेतांग्यो स्वलंकृताः. — After 16ᵃᵇ, T2 G2-4 (G3 om. line 4; G4 om. line 7) ins.:

1937* राकाशशाङ्कवदनाः पद्मिनीजातिसंभवाः ।
पद्मगन्धाः पद्ममुख्याः पद्मपत्रनिभेक्षणाः ।
मुक्ताशुकमुकर्णांश्च स्वत्बिन्दुललाटिकाः ।
पीनस्तनभारार्ताः शङ्खकण्ठ्यः सुनासिकाः ।
कृष्णदीर्घमुकेशिन्यो मुष्टिमाह्यसुमध्यमाः ।
श्यामाङ्गरोमलतिका ह्यावर्तनिमनाभिकाः ।

प्रेष्याः संप्रददौ कृष्णो नानादेश्याः सहस्रशः ॥ १६
गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलंकृतान् ।
रथांश्च दान्तान्सौवर्णैः शुभैः पट्टैरलंकृतान् ॥ १७
कोटिशश्च सुवर्णं स तेषामकृतकं तथा ।
वीतीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १८
तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविन्दप्रियकाम्यया ॥ १९

इति श्रीमहाभारते आदिपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ समाप्तं वैवाहिकपर्व ॥

## १९२

वैशंपायन उवाच ।
ततो राज्ञां चरैराप्तैश्चारः समुपनीयत ।
पाण्डवैरुपसंपन्ना द्रौपदी पतिभिः शुभा ॥ १
येन तद्धनुरायम्य लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः ॥ २
यः शल्यं मद्रराजानमुत्क्षिप्याभ्रामयद्बली ।
त्रासयंश्चापि संक्रुद्धो वृक्षेण पुरुषाञ्रणे ॥ ३
न चापि संभ्रमः कश्चिदासीत्तत्र महात्मनः । C. 1 B. 1 K. 1

विपुलश्रोणिफलका रम्भास्तम्भोरुयुग्मकाः ।
[ G3 om. line 4 and reads line 7 in its place. ]
— K4 (? hapl.) om. 16c–17b. — c) B3 m s(m as in text) s हृष्टो (for कृष्णो). — d) K3 Ñ3 B6 Dn3 n3 D5.6 स्वलंकृता॰; B1 गुणान्विताः (for सह॰)
17 K4 om. 17ab (cf. v. l. 16); K3 (hapl.) om. 17cd. — c) T2 G (except G1) M3.4 सौवर्णान्. K3 प्रादाद्धांतान्सुवर्णांश्च; B1.2.3 D4.5 प्रांशुदां(D5 °दं)तैः सुवर्णैश्च; B6 Da D2 रथानुदारान्सौवर्णैः. — d) Ñ1.2 V1 Da2 Dn D1 शुभैः. Ñ3 रतैर्; V1 अश्वैर्; T2 G M3 पत्रैर्; M5 पार्श्वैर्. K3 B (except B6) D4.5 रथान्श्चैरलंकृ॰.
18 a) S सुवर्णानो. K3 B1.2 तु; Ñ3 V2 B3.6 D (except D4) च (for स). — b) Ñ1 अकृतवत्; Cd as in text. Ś1 K3.4 Ñ1 V1 तदा; Ko ददौ. S तथैवाकृतकं बहु. — c) Ś1 K Ñ1.3 Da D2 रीतीकृ॰; Ñ1 V1 D3 T G2–6 M7.6.7 Nilp कृताकृ॰; Dn D2 वीथीकृ॰; M5 कृती कृ॰; M6 कृतं कृ॰, Nilp राशीकृ॰ (also). G1 कृतकं बहुमेयात्मा.
19 c) ■ अर्चयिष्यन् (G2–5 °यित्वा) हृषीकेशं

Colophon om. in K3 D4. — *Major parvan*: T2 G M संभव॰ (for आदि॰). — *Sub-parvan*: Ko विदुरागमन, Dn1 n3 M6–8 द्रौपदीस्वयंवर; T2 संभव, to it Dn1 n2 M6–8 add समाप्त. — *Adhy. name*: Ś1 राज्यलाभ; Ko.4 दाशार्हप्रीतिदाय; K3 पांडवस्य श्रीकृष्णेन प्रीतिदान प्रेषितः; B3 कृष्णोपायनप्रवेशनं; D3 द्रौपदीविवाह; T2 G1.2.4 कुन्तीवचनं. — *Adhy. no.* (figures, words or both): Dn3 198; D3 149, T1 202, T2 G3–6 154; G1.2 156, G2 153, M 155. — *Śloka no.*: Da1 Dn 19, M3 20. — *Aggregate śloka no.*: Dn1 7345

### 192

1 Ś1 K1–3 D2 S om. उवाच. — a) Ś1 Cd राज्ञश्चैर्. — b) Ñ1 ज्ञातैः G1 वार्तां; Cd चार॰ (as in text). K (except K3) S (except M5) Cd समुपनीयते. Ñ3 B6 D (except Da) प्रवृत्तिरुपनीयत. — d) K3 transp. द्रौप॰ and पति॰. S बलिभिस्त्विति.
2 a) K1.4 Ñ3 Da D2.4.5 G1 M3 °नस्य; Ñ3 V1 °द्रस्य (for °यस्य). — b) Ś1 K (except K3) Ñ1 D2 विद्धं लक्ष्यं (by transp.). Some MSS लक्षं. — d) N3 B1 (m as in text) °बल, S °बाहुर्.
3 a) K3 Ñ2.3 V1 B D (except D3) °राज्ञं वै (D4 च). — b) K3 Ñ2.3 V1 B D प्रोत्क्षिप्यापातयद्बली (D2 समुत्क्षिप्याहनद्बली); Ñ1 ■ उत्क्षिप्य न्यहनद्बली (G5 °ल). — c) Ś1 K1 आ(K2 अ)मयश्चापि. K3 Ñ2.3 B D त्रासयामास. V1 संत्रासयन्सुसंक्रुद्धो.
4 a) Ś1 K (except K3) Ñ2.3 V1 B6 D (except D4) M3 न चास्य; M3 6–8 न चात्र. — b) M3.6–8 तस्य (for तत्र). Ś1 Ko.1.4 Ñ3 Da D5 हतात्मन. — c) Ś1 °संस्पर्धं, Ñ1 M3 °सकाश, T G °संनाद. — d) Ś1 °सेनाविपातन; K1 °सेनानिबर्हण; K3 D1.6 °सेनांगतापन; Ñ1 °सेनाप्रतापन; V1 °सेनागपाटक, ■ °सैन्यां(M3.5 °सेनां)गमर्दन. — After 4, D4 (marg. sec. m.) S ins.:

51 1.5 0.5 रोहिणी च यथा सोमे दमयन्ती यथा नले ॥ ५
यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ॥ ६
जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी स्वनुव्रता ॥ ७
अतिथीनागतान्साधून्बालान्वृद्धान्गुरूंस्तथा ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ ८
कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सलम् ॥ ९
पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ १०
पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ॥ ११
यथा च त्वाभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽभिनन्दिष्ये सूतपुत्रां गुणान्विताम् ॥ १२
ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः ।
मुक्तावैडूर्यचित्राणि हैमान्याभरणानि च ॥ १३
वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ १४
शयनासनयानानि विविधानि महान्ति च ।
वैडूर्यवज्रचित्राणि शतशो भाजनानि च ॥ १५
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलंकृताः ।

1934* यथा दाशरथौ सीता यथा रुद्रे नगात्मजा ।; while T3 G (except G1) ins.:

1935* लोपामुद्रा यथागस्त्ये यथा रामे च जानकी ।

— After 6ᵃ, T3 G3-6 ins.:

1936* वाग्देवी चतुरानने ।
गिरिजा गिरिशे यद्वद्रुपा भानौ यथा स्थिरा ।
स्थिरा च वल्लभा च त्वं.

— ᶜ) T3 G3-6 सुप्रीता (for तथा त्वं).

7 ᵃ) Ś1 K1 जीव त्वं. — ᵇ) K3 Ñ3 B Da D3.4 °गुणान्विता; S °पुत्र°. — ᶜ) K0.3.9 D8 धर्मपत्नी; Ñ3 याज्ञसेनि. K3 B D3.4.5 सत°; Ñ1 अनु°; Ñ2.3 V1 Da Dn D1 पति°; S भवामघे.

8 ᵃ) K3 Ñ3 B Da D3.4 बालान् (for साधून्). — ᵇ) M3.8 तथा गुरून् (by transp.). K3 Ñ3 B Da D3.4 साधून्भृत्यांस्तथा गुरून्; Ñ1.2 V1 Dn D1 वृद्धान्बालांस्तथा गुरून्. — ᶜ) G1 M पूजयित्वा.

9 ᵃ) Some MSS. °जंगल°; K3 °मध्येषु. — ᵇ) K3 नगरेषु भनुत्तम. — ᶜ) B3 तत्र; D1 अत्र (for अनु). Ś1 K0.3.4 D3 त्वाम्. Ś1 K0.1.2.4 D3 °षिंचंतु; D1 G1.2 °षिंचस्व; Cd as in text. K3 अभिषिच्यस्व नृपतिं. — ᵈ) M3 राजानं. Ñ2.3 V1 B3 Dn D1.4 °वत्सला. K3 स्वपतिं धर्मवत्सला; T G M6-8 नृपतीन्धर्मवत्सलान्. Cd cites नृपतिं अनु.

10 ᵃ) Ñ2 एतां विनिर्जिताम्; B3 पतिभिर्विजिताम्. — ᵇ) Ś1 K1 क्रमेण च महा°; D3 °मेण महारणे. — ᶜ) S (except T1 G2.3 M3) सर्वम्.

11 ᶜ) K3 तानि प्राप्नुहि क°. — ᵈ) Ś1 स्वाच्छरच्छतं; K0.1.3 Cd शरदः शतं.

12 ᵃ) K0.2.4 G3 M6-8 यथा त्वा(M6-8 -ह)मभिनं°. — ᵇ) Da मध्वद्य; D3 विशुद्ध°. K3 Ñ3 B Da D3.4 क्षौमवाससं. — ᶜ) Ś1 S -पि (for ऽभि°). — ᵈ) K1.3 Ñ2.3 B D जातपुत्रां; Cd as in text. V1 S सूतान्पुत्रा-न्गुणान्वितान्.

13 Before 13, all MSS. except K4 ins. वैशं° उ° (Ś1 K1.4 D3 S om. उ°). — ᵃᵇ) Ś1 पार्थे° (for पाण्डु°). K3 Ñ1 धनं; Ñ3 inf. lin. विभुः (for हरिः). S प्राहिणो द्वासुदेवश्च (M °स्तु) पांडवेभ्यो रिपुंजयः. — ᶜ) Ñ2.3 Da D1 वैडूर्यमणि°; M4 °रत्नानि. — D3 (hapl.) om. 13ᵈ-15ᶜ; M3.8 transp. 13ᵈ and 15ᵈ.

14 D3 om. 14 (cf. v. l. 13). — ᵇ) T1 भूषणान्यु-त्तमानि च. — ᶜ) Ñ1 V1 M3.6 कंबलानि च. K0.2.4 °मुख्यानि; G1 °चित्राणि; M3.8 °दिव्यानि (for °रत्नानि). — ᵈ) T1 स्वर्णवंति; G1 रत्नानि च. K0.2 Ñ1 सुखानि च.

15 D3 om. 15ᵃᵇ (cf. v. l. 13). — ᵃ) B1 शयनानि च या°. — ᶜ) K0.2.4 वज्रवैडूर्य° (by transp.); Ñ1 D1 T2 G (except G3) °रत्न°; D3 मुक्तावैडूर्य°. — ᵈ) M3.8 transp. 13ᵈ and 15ᵈ.

16 ᵃ) K3 °लावण्यैर्. — ᵇ) K3 उपेतांग्यो ह्यलंकृताः. — *After 16ᵃᵇ, T3 G3-6 (G3 om. line 4; G6 om. line 7) ins.:*

1937* राकाशशाङ्कवदनाः पद्मिनीजातिसंभवाः ।
पद्मगन्धाः पद्ममुखाः पद्मपत्रनिभेक्षणाः ।
मुक्ताशुक्तसुकर्णाश्च स्वस्तयिन्दुललाटिकाः ।
पीवरस्तनभारार्ताः शङ्खकण्ठ्यः सुनासिकाः ।
कृष्णदीर्घसुकेशिन्यो मुष्टिग्राह्यसुमध्यमाः ।
भृङ्गालिरोमलतिका ह्यावर्तनिभनाभिकाः ।

प्रेष्याः संप्रददौ कृष्णो नानादेश्याः सहस्रशः ॥ १६
गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलंकृतान् ।
रथांश्च दान्तान्सौवर्णैः शुभैः पट्टैरलंकृतान् ॥ १७
कोटिशश्च सुवर्णं स तेषामकृतकं तथा ।
वीतीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १८
तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविन्दप्रियकाम्यया ॥ १९

इति श्रीमहाभारते आदिपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ समाप्तं वैवाहिकपर्व ॥

## १९२

वैशंपायन उवाच ।
ततो राज्ञां चरैराप्तैश्चारः समुपनीयत ।
पाण्डवैरुपसंपन्ना द्रौपदी पतिभिः शुभा ॥ १
येन तद्धनुरायम्य लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः ॥ २
यः शल्यं मद्रराजानमुत्क्षिप्याभ्रामयद्बली ।
त्रासयंश्चापि संक्रुद्धो वृक्षेण पुरुषान्रणे ॥ ३
न चापि संभ्रमः कश्चिदासीत्तत्र महात्मनः । C. B. K.

---

विपुलश्रोणिफलका रम्भास्तम्भोरुयुग्मकाः ।
[ Gs om. line 4 and reads line 7 in its place. ]
— K (? hapl.) om. 16ᵉ–17ᵇ. — ᶜ) Bs m. s (m as in text), s हृष्टो (for कृष्णो). — ᵈ) Ks Ñs Bs Dn1.n2 D1.6 स्वलंकृताः; B1 गुणान्विताः (for सह°).

17 Ks om. 17ᵃᵇ (cf. v. l. 16); Ks (hapl.) om. 17ᶜᵈ. — ᶜ) Ts G (except G1) M2.5 सौवर्णान्. Ks माद्राद्दांतान्सुवर्णांश्च; B1.2.5 D5.6 मांशुद्रां(Ds °दं)तैः सुवर्णैश्च; Bs Da Ds रथानुदारान्सौवर्णैः. — ᵈ) Ñ1.3 V1 Da2 Dn D1 शुभ्रैः. Ñs रंगैर्; V1 भद्रैर्; Ts G Ms पत्रैर्; Ms पादैर्. Ks B (except Bs) D1.8 रथानश्वैरलंकृ°.

18 ᵃ) ■ सुवर्णानां. Ks B1.6 तु; Ñs V1 B2.6 D (except Ds) च (for स). — ᵇ) Ñ1 अकृतवत्; Cd as in text. Ś1 K3.4 Ñ1 V1 सदा; Ko ददौ. S तथैवाकृतकं बहु. — ᶜ) Ś1 K Ñ2.3 Da Ds रीतीकृ°; Ñ1 V1 Ds T G2–6 M1.6.7 Nīlp कृताकृ°; Dn Ds पीथीकृ°; Ms कृतीकृ°; M2 कृतं कृ°; Nīlp राशीकृ° (also). G1 कृतकं बहुमेयात्मा.

19 ᵃ) ■ अर्चयिष्यन् (G2–5 °यित्वा) हृषीकेशं.

Colophon om. in Ks Ds. — *Major parvan*: Ts G M संभव° (for आदि°). — *Sub-parvan*: Ko विदुरागमन; Dn1.n2 M6–8 द्रौपदीस्वयंवर; T1 संभव; to it Dn1.n2 M6–8 add समाप्त. — *Adhy. name*: Ś1 राज्यलाभः; Ko.4 दाशार्हप्रीतिदायः; Ks पांडवस्य श्रीकृष्णेन प्रीतिदानं प्रेषितं; Bs कृष्णोपायनप्रवेशनं; Ds द्रौपदीविवाहः; Ts G1.2.4 कुंत्याशीर्वचनं. — *Adhy. no.* (figures, words or both): Dn2 198; Ds 149; T1 202; Ts G4–6 154; G1.3 156; G2 153; M 155. — *S'loka no.*: Da1 Dn 19; Ms 20. — *Aggregate s'loka no.*: Dn2 7345.

97

## 192

1 Ś1 K1–3 Ds S om. उवाच. — ᵃ) Ś1 Cd राजश्चैर्. — ᵇ) Ñ1 ज्ञानं; G1 वार्तां; Cd चारः (as in text). K (except K1) S (except Ms) Cd समुपनीयते. Ñs Bs D (except Da) प्रवृत्तिरुपनीयत. — ᵈ) Ks transp. द्रौप° and पति°. ■ बलिभिस्त्विति.

2 ᵃ) K1.4 Ñs Da D2.4.6 G1 Ms °तस्य; Ñs V1 °दाय (for °यस्य). — ᶜ) Ś1 K (except K2) Ñ1 Ds विद्धं लक्ष्यं (by transp.). Some MSS. लक्षं. — ᵈ) Ñs B1 (m as in text) °बल; S °बाहुर्.

3 ᵃ) K2 Ñ2.3 V1 B D (except Ds) °राजं वै (Ds च). — ᵇ) K2 Ñ2.3 V1 B D मोत्क्षिप्यापातयद्बली (Ds समुत्क्षिप्याहनद्बली); Ñ1 S उत्क्षिप्य न्यहनद्बली (Gs °ं). — ᶜ) Ś1 K1 आ(K1 अ)मयंश्चापि; K2 Ñ2.3 B D त्रासयामास. V1 संत्रासयन्सुसंक्रुद्धो.

4 ᵃ) Ś1 K (except K3) Ñ1.2 V1 Bs D (except D1) Ms न चास्य; M2.6–8 न चात्र. — ᵇ) M2.6–8 तस्य (for तत्र). Ś1 Ko.1.4 Ñs Da Ds धृतात्मनः. — ᶜ) Ś1 °संस्पर्धः; Ñ1 Ms °संकाशः; T ■ °संनादः. — ᵈ) Ś1 °सेनाविपातनः; K1 °सेनानिबर्हणः; Ks D1.6 °सेनांगतापनः; Ñ1 °सेनाप्रतापनः; V1 °सेनांगपाटकः; ■ °सैन्यां(M2.6 °सेनां)गमर्दनः. — After 4, Ds (marg. *sec. m.*) S ins.:

स भीमो भीमसंस्पर्शः शत्रुसेनाङ्गपातनः ॥ ४
ब्रह्मरूपधराञ्श्रुत्वा पाण्डुराजसुतांस्तदा ।
कौन्तेयान्मनुजेन्द्राणां विस्मयः समजायत ॥ ५
सपुत्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता ।
पुनर्जातानिति स्मैतान्मन्यन्ते सर्वपार्थिवाः ॥ ६
धिक्कुर्वन्तस्तदा भीष्मं धृतराष्ट्रं च कौरवम् ।
कर्मणा सुनृशंसेन पुरोचनकृतेन वै ॥ ७
वृत्ते स्वयंवरे चैव राजानः सर्व एव ते ।
यथागतं विप्रजग्मुर्विदित्वा पाण्डवान्वृतान् ॥ ८
अथ दुर्योधनो राजा विमना भ्रातृभिः सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ॥ ९
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् ।
तं तु दुःशासनो व्रीडन्मन्दं मन्दमिवाब्रवीत् ॥ १०
यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः ।
न हि तं तत्त्वतो राजन्वेद कश्चिद्धनंजयम् ॥ ११
दैवं तु परमं मन्ये पौरुषं तु निरर्थकम् ।

---

1938* योऽसावत्यक्रमीद्युद्धे युध्यन्दुर्योधनं तदा ।
स राजा पाण्डवश्रेष्ठः श्रेष्ठभाग्बुद्धिवर्धनः ।
दुर्योधनाद्वरजैर्यौ युध्येतां प्रतीतवत् ।
तौ यमौ वृत्तसंपन्नौ संपन्नबलविक्रमौ ।
चारैः प्रणिहिते चारे राजानो विगतज्वराः ।

[ (L. 1) $D_4$ $G_7$ योसौ वीतक्रमो यावद्. — (L. 2) $D_4$ $T_2$ श्रेष्ठवान्; $G_{3-5}$ श्रेष्ठवाग्. $D_4$ बुद्धिमरत्तु च; $T_2$ कुरुपुंगवः. ]

5 $^a$) $Ñ_{2.3}$ दृष्ट्वा; S श्रुत्वा (for श्रुत्वा). — $^b$) $K_3$ $Ñ_{2.3}$ $V_1$ B D प्रज्ञातान्पांडुनंदनान् ($D_5$ राज्ञः पांडोः सुतांस्तदा); $Ñ_1$ श्रुत्वा पांडुसुतांश्च तान्; S तत्र तान्पू($T_1$ M °नू)पमेक्षणान्. — $^{cd}$) $V_1$ °पद्यत (for °जायत). B पांडवान्मनुजेंद्रास्ते समपद्यन्त विस्मिताः.

6 $^a$) $K_3$ ससुता हि; $T_2$ $G_{2-6}$ सा सपुत्रा. $T_1$ $G_1$ $M_{2.3}$ पतिता; $T_2$ $G_{3-6}$ हि तदा; $M_{6-8}$ घातिता (for हि पुरा). — $^b$) $Ñ_1$ युता; $B_6$ m मताः; $B_6$ $Da_1$ $D_6$ शुभा (for श्रुता). — After $6^{ab}$, S ins.:

1939* सर्वभूमिपतीनां च राज्ञां च यशस्विनाम् ।

— $^c$) $Ś_1$ $K_1$ पुनर्जातानिव स्मेराः; $K_{0.4}$ °र्जाता इति कौन्तो ($K_4$ °तां); $K_3$ $Ñ_3$ B D °र्जातामि($Dn_3$ °नि)व च तां ($B_3$ am तान्); $Ñ_1$ °र्जातामिव कौन्तों; $Ñ_3$ $V_1$ °र्जातानिव च तान् — $^d$) $Ś_1$ $K_1$ तेमन्यन्सर्वपार्थिवाः; $K_3$ $Ñ_{2.3}$ B D तेमन्यंत ($D_5$ मन्यंत ते) नराधिपाः; $V_1$ ते स्वमन्यंत पार्थिवाः.

7 $^a$) $K_3$ $N_3$ $V_1$ B D धिग्( $D_5$ धिग्धिक्)कुर्वन्; $K_4$ $Ñ_1$ धिक्कुर्वंश्च; S व्य($G_3$ अ; $M_{6-8}$ वि)निंदंश्च. $K_{0.4}$ $T_1$ M तथा. $V_1$ अन्योन्यं (for भीष्मं). — $^c$) $K_3$ ते कर्मणा नृशं°; $N_3$ B $Da$ $Dn$ $D_{1.3.4}$ कर्मणातिनृशं°. — $^d$) Here and below $Ś_1$ $K_1$ (mostly) प्ररोचन°. — After 7, $K_4$ $D_4$ (both suppl. fol.) S ins. a passage given in App. I (No. 103).

8 Before 8, $D_4$ S ins. वैशं° ($D_4$ cont. उवाच). — $^a$) S ततः स्वयंवरे वृत्ते. — $^b$) $T_1$ $G_{1.2.3.6}$ हि; $T_2$ $G_{3.4}$ $M_{6-8}$ ह (for ते). — $^c$) $V_1$ ब्राह्मणान् (for पाण्डवान्). $D_1$ च तान्; $T_2$ $G_{2-4}$ हि तान्. — After 8 (i. e. before 9), $Ñ_1$ $D_4$ ins. वैशं° उ°.

10 $^a$) $G_1$ $M_{6-8}$ तथा रंगे (for विनि°). $K_4$ वृतो; $G_{2.3.4}$ (before corr.) [ऽ]पि तं. — $^c$) $K_4$ ततो; $D_2$ तं तद्; S अथ (for तं तु). $Ñ_{2.3}$ $V_1$ $B_1$ $Dn_2.n_3$ $D_2$ [ऽ]व्रीडो; T G राजा; M (except $M_8$) राजन्. ❀Nil.: अव्रीड इति छेदः । व्रीडन्निसेव पाठः । अन्यथा मंदंमंद- मित्यस्यानुपपत्तिः ।❀ — $^d$) $G_2$ अथ (for इव). $K_4$ इदं वचनमब्रवीत्. — After 10, T $G_{2-4}$ ins.:

1940* स्रियच्छुष्यन्मुखो राजा दूयमानेन चेतसा ।

11 $^a$) $Ś_1$ K (except $K_3$) यदि विप्रो नाभविष्यत. $D_2$ corrupt. — $^b$) $Ś_1$ K (except $K_3$) नावेत्स्यद्द्रौपदीम् असौ ($K_{0.4}$ स्वयं; $K_3$ अयं); $Ñ_{1.3}$ S न च विंदेत द्रौपदीं ($G_{2-4}$ न विंदेद्द्रुपदात्मजां). — $^c$) T G राजा (for राजन्).

12 S transp. $12^{ab}$ and $12^{cd}$. — $^a$) $K_{0.3.4}$ हि; $K_3$ N $V_1$ B $Dn$ $D_{1.3.4}$ $G_{5.6}$ च (for तु). T $G_{1.3.4}$ M दैवमेव परं मन्ये. — $^b$) K (except $K_1$) $Ñ_{1.3}$ $V_1$ च; $G_3$ हि (for तु). $Ñ_2$ B D $T_2$ $G_{5.6}$ चाप्यनर्थकं (for तु निर°). — $^c$) $K_2$ $Ñ_{2.3}$ $V_1$ B D (except $D_5$) $M_{6-8}$ धिगस्तु. $T_2$ $G_{3.4}$ पौरुषं मंत्रं; $G_{1.2.6}$ $M_3$ पौरुषं त($G_3$ य)च; $M_{6-8}$ चात्मपौरुष्यं. — $^d$) $K_2$ $Ñ_2$ B D $G_5$ ध्रियंते यत्र पांडवाः; $K_3$ यदि जीवंति पां°; $Ñ_{1.3}$ $V_1$ यद्ध्रियंते हि ($Ñ_3$ ह) पां°; $T_2$ $G_{3.4}$ बुद्धिं नीतिं च मातुल; $M_{6-8}$ यज्जीवंतीह पां°. Cd cites घरंति (as in text). ❀Arj.: घरंत (sic) इति पाठे प्रसिद्ध एवार्थः ।❀ — After 12, $T_2$ $G_{1-4}$ ins.:

1941* वञ्च्य चक्षूंषि नः पार्थो राज्ञां च द्रुपदात्मजाम् ।
उद्वाह्य राज्ञां तेन्यंस्तं पादं वामं पृथासुतैः ।
विमुक्ताः कथमेतेन जतुवेश्मद्दहविर्भुजः ।
अस्माकं पौरुषं सत्त्वं बुद्धिश्चापि गता कुतः ।
वयं हता मातुलाद्य विश्वस्य च पुरोचनम् ।
अदग्ध्वा पाण्डवान्दग्ध्वा स्वयं दग्धो हुताशने ।
मत्तो मातुल मन्येऽहं पाण्डवा बुद्धिमत्तराः ।

धिगसत्पौरुषं तात यद्धरन्तीह पाण्डवाः ॥ १२
एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम् ।
विविशुर्हास्तिनपुरं दीना विगतचेतसः ॥ १३
त्रस्ता विगतसंकल्पा दृष्ट्वा पार्थान्महौजसः ।
मुक्तान्हव्यवहाच्चैनान्संयुक्तान्द्रुपदेन च ॥ १४
धृष्टद्युम्नं च संचिन्त्य तथैव च शिखण्डिनम् ।
द्रुपदस्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् ॥ १५
विदुरस्त्वथ तान्श्रुत्वा द्रौपद्या पाण्डवान्वृतान् ।
व्रीडितान्धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ॥ १६
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशां पते ।
उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ॥ १७
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ १८
मन्यते हि वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया ।
दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः ॥ १९
अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु ।
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ॥ २०
अथास्य पश्चाद्विदुर आचख्यौ पाण्डवान्वृतान् ।
सर्वान्कुशलिनो वीरान्पूजितान्द्रुपदेन च ।
तेषां संबन्धिनश्चान्यान्बहून्बलसमन्वितान् ॥ २१

तेषां नास्ति भयं मृत्योर्मुक्तानां जतुवेश्मनः ।

13 G3 om. 13ᵃ–14ᵇ. — ᵃ) D5 च (for ते). — ᵇ) Ś1 K Ñ1.3 V1 निंदमानाः (K3 निंदंतं च); D1 निंदिते च; T1 निंदंतस्तं. — After 13ᵃᵇ, T2 G2.4 ins.:

1942* पञ्चपुत्रां किरातीं च विदुरं च महामतिम् ।

— ᶜ) Most S MSS. हस्तिनपुरं. — ᵈ) K4 °चेतमाः.

14 Ś1 K1 G3 om. 14ᵃᵇ (cf. v. l. 13). — ᵃ) G1.2 M4 त्रस्तान्विगतसंकल्पान्. — ᵇ) K0.3.4 Ñ1 D4 श्रुत्वा (for दृष्ट्वा). — ᶜ) K0.3.4 T1 G1.2.6 M मुक्तान्वै (T1 G1.2.6 M विमुक्तान्) हव्यवाहाच्च; K3 Ñ2.3 V1 B D मुक्तान्हव्यभुजश्चैव (Ñ3 °श्चैतान्); Ñ1 मुक्तान्हव्यवहो होमान्; T2 G2–4 विमुक्ता-न्महतो वह्नेः. — ᵈ) M6–8 तु (for च).

15 ᵃ) B (except B1) D6 Dn1.n2 D1.2 G2 तु (for च). — ᶜ) T2 G2–4 om. च. K3 चैव; D5 चासन्; M8 सर्वान् (for चान्यान्). — ᵈ) D2.3 T1 G1.2.6 सर्वान्युद्ध°; T2 G2–4 तथा बुद्धि°. — After 15, T2 G2–4 ins.:

1943* मुखानि धार्तराष्ट्राणां दृष्ट्वा क्षत्ता मुदान्वितः ।
विकसद्वक्त्राम्भोजः पद्मं दृष्ट्वेव भास्करम् ।

16 ᵃᵇ) K0.3.4 D2.3 G5.6 तां; Ñ1 G1 M तत् (for तान्). K3 Ñ2 B D (except D5) द्रौपदीं पांडवैर्वृतां. T2 G2–4 द्रौपद्या संवृतान्पार्थाञ्श्रुत्वाथ विदुरो मुदा (G2 °रस्तदा). — After 16ᵃᵇ, K1 ins.:

1944* सर्वांस्तु बलिनो वीरान्संयुक्तान्द्रुपदेन च ।

— ᵈ) Ñ2 भग्नगर्वान्; G6 हीनदर्पान्.

17 ᵃ) D3.4 श्रुत्वा (for क्षत्ता). — ᵇ) T2 G2–4 विशां पतिं. — ᶜ) S उवाच कुरवो (G1 कुपितो) दिष्ट्या. — ᵈ) T2 G2–4 वर्धते भुवि विश्रुताः. — After 17, T2 G2–4 (which om. 18ᵃᵇ) ins.:

1945* सर्वापद्भ्यो विमुक्ताश्च विमुक्ता राजसंगरात् ।
कृष्णया संवृताश्चैव वीरलक्ष्म्या तथैव च ।
वैशंपायनः ।
विदुरोक्तं वचः श्रुत्वा सामान्यात्कौरवा इति ।
उल्ललास स हर्षेण संतोषभरितो नृपः ।
प्रहर्षहरितो राजा लक्ष्मीभूत इव क्षणम् ।

18 T2 G2–4 om. 18ᵃᵇ. — ᵃ) K3 वचो; T1 G1.2.6 M तदा (for नृपो). — ᶜ) T2 G2–4 तथाब्रवीत्सुसंप्रीतो. — ᵈ) Ś1 K1 पार्थिवः; S कौरवः.

19 ᵃ) K3 तु; Ñ2.3 V1 B Da1 Dn2 D3.4 स; Da2 Dn1.n3 D1 सं° (for हि). T2 G2–4 मन्यमानो (for °ते हि). — ᶜ) G1 °धनमविज्ञाय. — ᵈ) K3 जनेश्वरः; B1 नराधिपः.

20 ᵃ) K0.3.4 T2 G2–4 आज्ञापयामास तदा. — ᵇ) Ś1 K1 भूषणं परं; T2 G2–4 भूषणादिकं. — After 20ᵃᵇ, T2 G2–4 ins.:

1946* पुत्राणां च तथा सर्वं विचित्राभरणं वरम् ।

— ᶜ) T2 G2–4 सा (for वै). — ᵈ) Ś1 K (except K3) B1 D5 M3 पुत्रो दुर्योधनस्तथा (K0.3.4 °नो मम); T2 G2–4 पुत्रा दुर्योधनादयः.

21 ᵃ) T2 G2–4 अथ स्म. K0 विदुरः पश्चात् (by transp.). D1 अथ पश्चाद्विदुरश्च. — ᵇ) T2 G2–4 आच-ख्यावंबिकात्मजे. — After 21ᵃᵇ, T2 G2–4 ins.:

1947* पुत्राभिवृद्धिसंतोषश्रवणानन्दनिर्भरम् ।
कौरवा इति सामान्यात्स मन्येथास्तवात्मजान् ।
वर्धिता इति मद्वाक्याद्वर्धिताः पाण्डुनन्दनाः ।
कृष्णया संवृताः पार्था विमुक्ता राजसंगरात् ।

— ᶜ) T2 G2.4 दिष्ट्या; G6 पार्थान् (for सर्वान्). Ś1 K1 तु बलिनो. S (except G6) राजन् (for वीरान्). — ᵈ) Ś1 K (except K3) संयुक्तान्; D5 संगतान् (for पूजितान्).

स भीमो भीमसंस्पर्शः शत्रुसेनाङ्गपातनः ॥ ४
ब्रह्मरूपधराञ्श्रुत्वा पाण्डुराजसुतांस्तदा ।
कौन्तेयान्मनुजेन्द्राणां विस्मयः समजायत ॥ ५
सपुत्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता ।
पुनर्जातानिति स्मैतान्मन्यन्ते सर्वपार्थिवाः ॥ ६
धिक्कुर्वन्तस्तदा भीष्मं धृतराष्ट्रं च कौरवम् ।
कर्मणा सुनृशंसेन पुरोचनकृतेन वै ॥ ७
वृत्ते स्वयंवरे चैव राजानः सर्व एव ते ।
यथागतं विप्रजग्मुर्विदित्वा पाण्डवान्वृतान् ॥ ८
अथ दुर्योधनो राजा विमना भ्रातृभिः सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ॥ ९
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् ।
तं तु दुःशासनो व्रीडन्मन्दं मन्दमिवाब्रवीत् ॥ १०
यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः ।
न हि तं तत्त्वतो राजन्वेद कश्चिद्धनंजयम् ॥ ११
दैवं तु परमं मन्ये पौरुषं तु निरर्थकम् ।

---

1938* योऽसावत्यक्रमीद्युद्धे युध्यन्दुर्योधनं तदा ।
स राजा पाण्डवश्रेष्ठः श्रेष्ठभाग्बुद्धिवर्धनः ।
दुर्योधनादवरजैर्यौ युध्येतां प्रतीमवत् ।
तौ यमौ वृत्तसंपन्नौ संपन्नबलविक्रमौ ।
चारैः प्रणिहिते चारे राजानो विगतज्वराः ।

[ (L. 1) D4 G3 योसौ वीतक्लमो यावद्. — (L. 2) D4 T1 श्रेष्ठवान्; G3-5 श्रेष्ठभाग्. D4 बुद्धिमत्सु च; T1 कुरुपुंगवः. ]

5 a) Ñ1.3 दृष्ट्वा; S बुद्ध्वा (for श्रुत्वा). — b) K3 Ñ2.3 V1 B D प्रशांतान्पांडुनंदनान् (D3 राज्ञः पांडोः सुतांस्तदा); Ñ1 श्रुत्वा पांडुसुतांश्च तान्; S तत्र तान्नृ(T1 M °नृ)पश्रेष्ठणान्. — cd) V1 °पद्यत (for °जायत). S पांडवान्मनुजेंद्राणां समपद्यन्त विस्मिताः.

6 a) K3 सपुत्रा हि; T2 G3-5 सा सपुत्रा. T1 G3 M6.8 पतिता; T2 G2-6 हि सदा; M6-8 घातिता (for हि पुरा). — b) Ñ1 युता; B3 m मता; B6 Da1 D4 शुभा (for श्रुता). — After 6ab, [illegible] ins.:

1939* सर्वभूमिपतीनां च राज्ञां च यशस्विनाम् ।

— c) Ś1 K2 पुनर्जातानिव कौरा°; K0.4 °जाता इति कौंता (K4 °ता); K3 Ñ3 B D °जातामि(Dn3 °नि)व च तां (B3 sm तान्), Ñ1 °जातामिव कौंता; Ñ2 V1 °जातानिव च तान् — d) Ś1 K1 तैमन्यन्सर्वपार्थिवाः; K3 Ñ2.3 B [illegible] तेमन्यंत (D3 मन्यंत ते) नराधिपाः; V1 ते त्वमन्यंत पार्थिवाः.

7 a) K3 N3 V1 B D धिग(D3 धिग्धिक्)कुर्वं; K4 Ñ1 धिक्कुर्वंश्च; S व्य(G3 न; M6-8 वि)निंदंश्च. K0.4 T1 M तथा. V1 अन्योन्यं (for भीष्मं). — c) K3 ते कर्मणा नृशं°; N3 [illegible] Da Dn D1.2.4 कर्मणातिनृशं°. — d) Here and below Ś1 K1 (mostly) प्ररोचन°. — After 7, K4 D4 (both suppl. fol.) S ins. a passage given in App. I (No. 103).

8 Before 8, D4 S ins. वैशं° (D4 cont. उवाच). — a) S ततः स्वयंवरे वृत्ते. — b) T1 G1.2.3.6 हि; T2 G1.4 M6-8 ह (for ते). — d) V1 ब्राह्मणान् (for पाण्डवान्). D1 च तान्; T2 G3-4 हि तान्. — After 8 (i. e. before 9), Ñ1 D4 ins. वैशं° उ°.

10 a) G1 M6-8 तथा रंते (for विनि°). K4 वृतो; G3.5.6 (before corr.) [ऽ]पि तं. — c) K4 ततो; D2 तं तद्; S अथ (for तं तु). Ñ2.3 V1 B1 Dn2.n3 D1 [ऽ]मीढो; T G राजा; M (except M4) राजन्. ❀Nil.: अमीढ इति छेदः । व्रीडन्निसत्येव पाठः । अन्यथा मंदंमंदमित्यस्यानुपपत्तिः ।❀ — d) G3 अथ (for इव). K4 इदं वचनमब्रवीत्. — After 10, T G3-4 ins.:

1940* खिद्यच्छुष्यन्मुखो राजा दूयमानेन चेतसा ।

11 a) Ś1 K (except K3) यदि विप्रो नाभविष्यत्. D1 corrupt. — b) Ś1 K (except K3) नाधरिष्यद्द्रौपदीम् असौ (K0.4 स्वयं; K3 अयं); Ñ1.3 [illegible] न च विंदेत द्रौपदीं (G3-4 न विंदेद्द्रुपदात्मजां). — c) T G राजा (for राजन्).

12 [illegible] transp. 12ab and 12cd. — a) K0 3.4 हि; K3 N V1 B Dn D1 2.4 G3 4.6 च (for तु). T G1.3.4 M दैवमेव परं मन्ये. — b) K (except K1) Ñ1 3 V1 च; G2 हि (for तु). Ñ3 B D T2 G5.6 चाप्यनर्थकं (for [illegible] निर°). — c) K3 Ñ2.3 V1 [illegible] D (except D3) M6-8 धिगस्तु. T2 G3.4 पौरुषं मंत्रं; G1.5.6 M8 पौरुषं त(G1 य)च; M6-8 चास्मपौरुष्यं. — d) K3 Ñ3 B D G3 ध्रियंते यत्र पांडवाः; K3 यदि जीवंति पां°; Ñ1.3 V1 यद्ध्रियंते हि (Ñ3 ह) पां°; T2 G3.4 बुद्धिं नीतिं च मातुल; M6-8 यज्जीवंतीह पां°. Cd cites धरंति (as in text). ❀Arj.: धरंत (sic) इति पाठे प्रसिद्ध एवार्थः ।❀ — After 12, T2 G3-4 ins.:

1941* बद्ध्वा चक्षूंषि नः पार्थो राज्ञां च द्रुपदात्मजाम् ।
उद्वाह्य राज्ञां सैन्यस्तं पादं वामं पृथासुतः ।
विमुक्ताः कथमेतेन जतुवेश्मह्वविर्भुजा ।
अस्माकं पौरुषं सत्त्वं बुद्धिश्चापि गता कुतः ।
वयं हता मातुलाद्य विश्वस्य च पुरोचनम् ।
अदृष्ट्वा पाण्डवान्दग्ध्वा स्वयं दग्धो हुताशने ।
मत्तो मातुल मन्येऽहं पाण्डवा बुद्धिमत्तराः ।

धिगसत्पौरुषं तात यद्धरन्तीह पाण्डवाः ॥ १२
एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम् ।
विविशुर्हास्तिनपुरं दीना विगतचेतसः ॥ १३
त्रस्ता विगतसंकल्पा दृष्ट्वा पार्थान्महौजसः ।
मुक्तान्हव्यवहाच्चैनान्संयुक्तान्द्रुपदेन च ॥ १४
धृष्टद्युम्नं च संचिन्त्य तथैव च शिखण्डिनम् ।
द्रुपदस्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् ॥ १५
विदुरस्त्वथ ताञ्श्रुत्वा द्रौपद्या पाण्डवान्वृतान् ।
व्रीडितान्धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ॥ १६
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशां पते ।
उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ॥ १७
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ १८
मन्यते हि वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया ।
दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः ॥ १९
अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु ।
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ॥ २०
अथास्य पश्चाद्विदुर आचख्यौ पाण्डवान्वृतान् ।
सर्वान्कुशलिनो वीरान्पूजितान्द्रुपदेन च ।
तेषां संबन्धिनश्चान्यान्बहून्बलसमन्वितान् ॥ २१　G. 1. / B. 1. / K. 1. 21

---

तेषां नास्ति भयं मृत्योर्मुक्तानां जतुवेश्मनः ।

13 G2 om. 13c–14b. — a) D5 च (for ते). — c) Ś1 K Ñ1.3 V1 भिंदमानाः (K3 निंदंतं च); D1 निंदिते च; T1 निंदंतस्तं. — After 13ab, T2 G3.4 ins.:

1942* पञ्चपुत्रां किरातीं च विदुरं च महामतिम् ।

— c) Most S MSS. हस्तिमपुरं. — d) K4 °चेतनाः.

14 Ś1 K1 G3 om. 14ab (cf. v. l. 13). — a) G1.3 M3 त्रस्तान्विगतसंकल्पान्. — b) K0.3.4 Ñ1 D3 श्रुत्वा (for दृष्ट्वा). — c) K0.2.4 T1 G1.5.6 M मुक्तान्वै (T1 G1.5.6 M विमुक्तान्) हव्यवाहाच्च; K3 Ñ2.3 V1 B D मुक्तान्हव्यभुजश्चैव (Ñ3 °श्चैतान्); Ñ1 मुक्तान्हव्यवहो ह्येनान्; T2 G2–4 विमुक्तान्महतो वह्नेः. — d) M6–8 ह (for च).

15 a) B (except B1) D5 Dn1.n2 D1.3 G1 तु (for च). — c) T2 G2–4 om. च. K2 चैव; D5 चासन्; M5 सर्वान् (for चान्यान्). — d) D3.5 T1 G1.5.6 सर्वान्युद्ध°; T2 G2–4 तथा बुद्धि°. — After 15, T2 G2–4 ins.:

1943* मुखानि धार्तराष्ट्राणां दृष्ट्वा क्षत्ता मुदान्वितः ।
विकसद्वन्मुखाम्भोजः पद्मं दृष्ट्वेव भास्करम् ।

16 ab) K0.2.4 D1.5 G5.6 तां; Ñ1 G1 M तत् (for तान्). K1 Ñ3 B D (except D5) द्रौपदी पांडवैर्वृतां. T2 G2–4 द्रौपद्या संवृतान्पार्थाञ्श्रुत्वाथ विदुरो मुदा (G2 °रस्तदा). — After 16ab, K1 ins.:

1944* सर्वांस्तु बलिनो वीरान्संयुक्तान्द्रुपदेन च ।

— d) Ñ1 भग्नमानां; G5 हीनदर्पान्.

17 a) D3.4 श्रुत्वा (for क्षत्ता). — b) T2 G2–4 विशां पतिं. — c) S उवाच कुरवो (G1 कुपितो) दिष्ट्या. — d) T2 G2–4 वर्धते भुवि विश्रुताः. — After 17, T2 G2–4 (which om. 18ab) ins.:

1945* सर्वापद्भ्यो विमुक्ताश्च विमुक्ता राजसंगरात् ।
कृष्णया संवृताश्चैव वीरलक्ष्म्या तथैव च ।
वैशंपायनः ।
विदुरोक्तं वचः श्रुत्वा सामान्यात्कौरवा इति ।
उल्ललास स हर्षेण संतोषभरितो नृपः ।
प्रहर्षहरितो राजा स्तम्भीभूत इव क्षणम् ।

18 T2 G2–4 om. 18ab. — a) K3 वचो; T1 G1.5.6 M तदा (for नृपो). — c) T2 G2–4 तथाब्रवीत्सुसंप्रीतो. — d) Ś1 K1 पार्थिवः; S कौरवः.

19 a) K2 सु; Ñ2.3 V1 B Da1 Dn1 D2.4 स; Da2 Dn1.n2 D1 सं (for हि). T2 G2–4 मन्यमानो (for °ते हि). — c) G1 °धनमविज्ञाय. — d) K3 जनेश्वरः; B1 नराधिपः.

20 a) K0.3.4 T2 G2–4 आज्ञापयामास तदा. — b) Ś1 K1 भूषणं परं; T2 G2–4 भूषणादिकं. — After 20ab, T2 G2–4 ins.:

1946* पुत्राणां च तथा सर्वं विचित्राभरणं वरम् ।

— c) T2 G2–4 त्वा (for वै). — d) Ś1 K (except K1) B5 D5 M5 पुत्रो दुर्योधनस्तथा (K0.3.4 °नो मम); T2 G2–4 पुत्रा दुर्योधनादयः.

21 a) T2 G2–4 अथ त्वा. K0 विदुरः पश्चात् (by transp.). D1 अथ पश्चाद्विदुरस्य. — b) T2 G2–4 आचख्यावंबिकात्मजं. — After 21ab, T2 G2–4 ins.:

1947* पुत्राभिवृद्धिसंतोषश्रवणानन्दनिर्भरम् ।
कौरवा इति सामान्यात्स मन्येयास्तवात्मजान् ।
वर्धिता इति मद्वाक्याद्वर्धिताः पाण्डुनन्दनाः ।
कृष्णया संवृताः पार्था विमुक्ता राजसंगरात् ।

— c) T2 G2.4 दिष्ट्या; G5 पार्थान् (for सर्वान्). Ś1 K1 तु बलिनो. S (except G5) राजन् (for वीरान्). — d) Ś1 K (except K1) संयुक्तान्; D5 संगतान् (for पूजितान्).

887 Bo. III 19. 27

धृतराष्ट्र उवाच ।

यथैव पाण्डोः पुत्रास्ते तथैवाभ्यधिका मम ।
सेयमभ्यधिका प्रीतिर्वृद्धिर्विदुर मे मता ।
यत्ते कुशलिनो वीरा मित्रवन्तश्च पाण्डवाः ॥ २२
को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवम् ।
न बुभूषेद्भवेनार्थी गतश्रीरपि पार्थिवः ॥ २३

वैशंपायन उवाच ।

तं तथा भाषमाणं तु विदुरः प्रत्यभाषत ।
नित्यं भवतु ते बुद्धिरेषा राजञ्शतं समाः ॥ २४
ततो दुर्योधनश्चैव राधेयश्च विशां पते ।
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा ॥ २५
संनिधौ विदुरस्य त्वां वक्तुं नृप न शक्नुवः ।

---

Ko.2.3 Ñ2.3 B D (except D5) तु; Ñ1 चै. — After 21ab, D4 (marg. sec. m.) ins.:

1948* संकर्षणेन कृष्णेन सत्कृतान्पाण्डुनन्दनान् ।

D4 (marg. sec. m.) cont.; S ins. after 21cd:

1949* एतच्छ्रुत्वा तु वचनं विदुरस्य नराधिपः ।
आकारच्छादनार्थं तु दिष्ट्या दिष्ट्येति चाब्रवीत् ।
एवं विदुर भद्रं ते यदि जीवन्ति पाण्डवाः ।
साध्व्याचारा तथा कुन्ती संबन्धो द्रुपदेन च ।
अन्ववाये वसोर्जातः प्रवरो मात्स्यके कुले ।
वृत्तविद्यातपोवृद्धः पार्थिवानां धुरंधरः ।
पुत्राश्चास्य तथा पौत्राः सर्वे सुचरितव्रताः ।

[ Before line 3, D4 ins. धृतराष्ट्र उ°. — After line 3, T2 G3–4 ins.:

1950* न ममौ मे तमौ प्रीतिस्त्वद्वाक्यात्तत्संभवा ।
आलिङ्गस्वेति मां क्षत्तः पुनः पुनरभाषत ।
दुर्भावगोपनार्थाय बाहू विस्तार्य दूरतः ।
एह्येहि विदुर मात्र मामालिङ्गितुमर्हसि ।
इत्युक्त्वाकृष्य विदुरं ज्ञात्वान्तर्भावमात्मनः ।
आलिलिङ्गे दृढं दोर्भ्यां निरुच्छ्वासं दुरात्मवान् ।

— (L. 5) D4 M3.5 प्रवर्हो; G6 °कृष्टो (for °वरो). — (L. 6) D4 G3.4 M3.5 च संमतः (for धुरं°). ]
— e) S अन्ये (for अन्यान्). — f) D3 धन° (for बल°). S बहवः सुमहाबलाः. — After 21, N ins.:

1951* समागतान्पाण्डवेयैस्तस्मिन्नेव स्वयंवरे ।
[ Ś1 K1 पांडवेयांस्तस्मिन्. ]

22 Ś1 K1.2 om. उवाच; D4 (by corr.) S om. the ref. M6–8 om. 22ab. — a) Ś1 K1 पांडु°. Ñ2.3 Dn1.n2 तु (for ते). — b) Ś1 M3.5 °भ्यधिकं. — c) K2 Ñ1 V1 B1.3.6 D यथा च; Ñ3 B3 यथैव (for सेयम्). K3 Ñ2.3 V1 B D वृद्धिः; S अन्येभ्यो (for प्रीतिः). — d) T2 G2–4 वृत्तिर्विदुर. K2 Ñ1.3 V1 B D मम साम्प्रति तच्छृणु. — After 22cd, T2 G2–4 ins.:

1952* या प्रीतिः पाण्डुपुत्रेषु न सान्यत्र ममाभिभो ।
नित्योऽयं निश्चितः क्षत्तः सत्यं सत्येन ते शपे ।

— f) T1 G1.5.6 M ते सुताः (for पाण्डवाः). T2 G2–4 पांडुपुत्रा महारथाः (after which G3 adds the te: reading). — After 22, N ins.:

1953* तेषां संबन्धिनश्चान्ये बहवः सुमहाबलाः ।

D4 (marg. sec. m.) cont.:

1954* सन्मे पुत्रा दुरात्मानो विनष्टा इति मे मतिः ।

— After 22, T1 (om. line 1).2 G2–4 ins.:

1955* मित्रवन्तोऽभवन्पुत्रा दुर्योधनमुखाः सदा ।
मया श्रुता यदा वह्नेर्दग्धाः पाण्डुसुता इति ।
तदादद्य दिवारात्रं न भोक्ष्ये न स्वपामि च ।
असहायाश्च मे पुत्रा लूनपक्षा इव द्विजाः ।
तत्त्वतः शृणु मे क्षत्तः ससहायाः सुता मम ।
अद्य मे स्थिरसाम्राज्यमाचन्द्रार्कं समाभवत् ।

23 a) B6 केचित्; T2 G2–4 को नु. Ś1 K1 द्रुपदराजस्य. — c) T1 G1.5.6 M भवस्यार्थी (T1 G1.5.6 °र्थे); T2 G2–4 कथं चार्थी. Cd cites भवेन (as in text). — d) Ñ1 V1 D2 Dn1.n2 D2 °श्रीरिव. K3 पांडवान्. K4 पार्थिव G1 पांडवः.

24 Ś1 K (except Ko) S om. उवाच. — a) T2 G3.4 धृतराष्ट्रेणैवमुक्तो. — After 24ab, T2 G2–4 ins.:

1956* बुद्धिरेषा महाराज रूढमूला च ते हृदि ।
कर्मणा मनसा वाचा स्थिरा यदि जनेश्वर ।

— c) S (except G2) नित्या (G6 as in text also). — d) D6 ईदृशी राजसत्तम. — After 24, Ñ1 D4 (marg. sec. m.) S (except M6) ins.:

1957* इत्युक्त्वा प्रययौ राजन्विदुरः स्वं निवेशनम् ।;

while D3 ins.:

1958* इत्युक्त्वा निरगात्क्षत्ता स्वगृहाय महामते ।

25 a) Ñ2.3 Dn D1 चापि; Cd चैव (as in text). — c) S धृतराष्ट्रस्य तच्छ्रुत्वा. — d) K1 समं; K3 तथा; S (except G1.2) ततः (for तदा).

26 Before 26, T G (except G1.2) M6–8 ins. दुर्योधनः. — a) Some MSS. (mostly S) त्वा (for त्वां). — b) K3 Ñ1 V1 B D दोषं वक्तुं (B6 Da2 वक्तुं दोषं) (for वक्तुं नृप). K (except K1) Ñ2.3 V1 B6 D (except D1.2) G1.2.6 M6 (inf. lin. as in text).6–8 शक्नुमः.

विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम् ॥ २६
सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपदां वर ॥ २७
अन्यस्मिन्नृप कर्तव्ये त्वमन्यत्कुरुषेऽनघ ।
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः ॥ २८
ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे ।
यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान् ॥ २९

इति श्रीमहाभारते आदिपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## १९३

धृतराष्ट्र उवाच ।
अहमप्येवमेवैतच्चिन्तयामि यथा युवाम् ।
विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति ॥ १
अतस्तेषां गुणानेव कीर्तयामि विशेषतः ।
नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः ॥ २
यच्च त्वं मन्यसे प्राप्तं तद्ब्रूहि त्वं सुयोधन ।
राधेय मन्यसे त्वं च यत्प्राप्तं तद्ब्रवीहि मे ॥ ३
दुर्योधन उवाच ।
अद्य तान्कुशलैर्विप्रैः सुकृतैराप्तकारिभिः ।
कुन्तीपुत्रान्भेदयामो माद्रीपुत्रौ च पाण्डवौ ॥ ४ C. 1. 7300 B. 1. 201. K. 1.

— c) Ś1 Ko. 3. 4 Ñ1 D5 विविक्त इति. K (except K1) Da Dn3 D5 M3 (inf. lin. as in text) 6-8 वक्ष्यामः. — d) Ś1 K1 तवेह; K3 तवेयं (m as in text); M5 तवैतच्. G3 विमिश्रितं.

27 a) K3 °वृद्धौ; Ñ1. 3 °वृद्धं; Ñ2 B (except B5) D5 °बुद्धिं; Dn (erroneously) Nilp as in text. ❀ Nil.: वृद्धिमिति पाठः स्वच्छः। ❀ K3 वां तात; T3 G3-5 हे तात; M6-8 एतौ च. — After 27ab, Dn3 repeats 22ef (with v. l.: द्विष्टया for यत्ते, and तेमघाः for पाण्डवाः). — d) Ś1 D1 द्विपतां वरं; K1. 3 द्विपतो बलं; Ñ3 B3 Dn द्विपतां वर.

28 a) K1 पुन; K3 T3 G3. 4 अपि (for नृप). Ñ1 अस्मिन्नृप च कर्तव्ये. — b) Ś1 K1 °पे नृप.

29 a) B (except B5) D5 तवेयं (for ते वयं). — b) B चिकिर्सां. Ś1 चिंतयामहे; K3 मंत्रयावहे. — d) Ś1 K (except K3) Ñ1 V1 Da G1 सपुत्रपशु°; T1 G3. 5. 6 M सपुत्रगण°; G3. 4 (before corr.) सर्वत्र बल°.

Colophon om. in Ś1 K1. — *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* Ko विदुरागमन. — *Adhy. name:* Ko. 3. 4 पांडवाभ्युदयः; D5 धृतराष्ट्रं प्रति दुर्योधनवाक्यं; T3 G4 धृतराष्ट्रकपटवार्ता; G1. 3 धृतराष्ट्रशांतिः (G3 °शान्त्यं). — *Adhy. no.* (figures, words or both): Dn3 199; D4m 207; D5 150; T1 205; T3 G3-5 157; G1 169; G2 155; G6 M 158. — *Śloka no.:* Da3 31; Dn 30; M5 27.

193

Before धृत° उ°, D4 (marg. sec. m.) S ins.:

1959* वैशंपायनः ।
दुर्योधनेनैवमुक्तः कर्णेन च विशां पते ।
पुत्रं च सूतपुत्रं च धृतराष्ट्रोऽब्रवीदिदम् ।
[ D4 वैशं उ°. — (L. 1) M °मुक्ते. ]

1 Ś1 K1. 3 S om. उवाच. — a) K3 Ñ B D चिकीर्षामि (for चिन्त°). Ś1 transp. यथा and युवाम्. Ñ1 परं (for युवाम्). — c) Ko. 3 Ñ1 विविक्तुं; K3 D1 विवक्तुं; S विवृतं; Cd as in text. Ś1 K1 व्यक्तं नो कर्तुमिच्छा°. — d) Ko. 4 G2 M5 आकारं (om. तु); K3 तत्कृते; K3 स्वाकारं; Ñ3 B1. 3. 5 कार्यं तु; V1 B6 Da D3. 4 कारणं. M6-8 (corrupt) क्षत्तारं विवृतं दुरं(!).

2 a) K3 Ñ2 B D T1 ततस् (D5 अथ) (for अतस्). — b) K3 B Da D3. 4 कीर्तयिष्यामि नित्यशः. — c) S न च बु°.

3 a) V1 यथा; B5 यस्तु. Ś1 K (except K3) ते; N1 अपि; V1 तु; S चै (for त्वं). Ś1 K (except K3) मनसि (for मन्य°). — b) K3 Ñ2. 3 B D तद्ब्रवीहि (cf. 3d); V1 तत्तद्ब्रूहि (om. त्वं). — Ś1 K1 om. 3cd. — c) K3 Ñ2. 3 B D (except D5) यच्च; V1 त्वं यत् (for त्वं च). — d) K3 Ñ1. 3 V1 B D (except D5) प्राप्तकालं वदाशु (K3 D3 D3. 4 वदस्व) मे.

4 Ś1 सुयो° (for दुर्यो°). Ś1 K1 S om. उवाच. — a) T G M3. 6-8 प्रच्छन्नैः (for अद्य तान्). M5

तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ॥ १२
का वै त्वमसि कल्याणि कुतो वासि जलेचरी ।
किमर्थं च महत्पापमिदं कृतवती पुरा ॥ १३

नार्युवाच ।

अप्सरासि महाबाहो देवारण्यविचारिणी ।
इष्टा धनपतेर्नित्यं वर्गा नाम महाबल ॥ १४
मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः ।
ताभिः सार्धं प्रयातास्मि लोकपालनिवेशनम् ॥ १५
ततः पश्यामहे सर्वा ब्राह्मणं संशितव्रतम् ।
रूपवन्तमधीयानमेकमेकान्तचारिणम् ॥ १६
तस्य वै तपसा राजंस्तद्वनं तेजसावृतम् ।
आदित्य इव तं देशं कृत्स्नं स व्यवभासयत् ॥ १७
तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतदर्शनम् ।
अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया ॥ १८
अहं च सौरभेयी च समीची बुद्बुदा लता ।
यौगपद्येन तं विप्रमभ्यगच्छाम भारत ॥ १९
गायन्त्यो वै हसन्त्यश्च लोभयन्त्यश्च तं द्विजम् ।
स च नास्मासु कृतवान्मनो वीर कथंचन ।
नाकम्पत महातेजाः स्थितस्तपसि निर्मले ॥ २०
सोऽशपत्कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ ।
ग्राहभूता जले यूयं चरिष्यध्वं शतं समाः ॥ २१ C. 1. 7860 B. 1. 216. K. 1. 230.

इति श्रीमहाभारते आदिपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

---

ग्राहो; K1 D1 T1 जग्राह (for तु ग्राहः). — b) Ś1 हि (for सः). K0 Ñ1 T G2-6 M1 तपस्विना; D5 G1 M3 तर°. — f) G1 M3 मनोहरा.

12 a) K0.4 S °द्भुततमं; D5 °द्भुतमिदं.

13 Before 13, S (except G1 M3.5) ins. अर्जुनः. — b) G1 M3.5 वापि. K3 B (except B1) D (except Da1 D5) G3.6 M3.5 °चरि. Ś1 K0.1.3.4 Ñ1.3 V1 कुतो वा जलचारिणी. — c) G3.6 त्वं (for च). — d) Ś1 K1 Ñ1 ह्यसि (for पुरा).

14 K0.4 D5 स्त्री उ°; N2 Dn D3.4 वर्गोवाच; T G M3.5 स्त्री; M6-8 अप्सरा (for नार्युवाच). *N. B.* In this instance neither Ś1 or K1 om. उवाच; both read the ref. exactly as in text! — a) K2 हि (for ऽस्मि). Ś1 K0.2.4 Ñ1 D5 °रा ह्यस्मि कौंतेय. — b) Ś1 K0.1.3.4 Ñ1 V1 D5 °निवासिनी; Ñ2.3 B3.6 Da Dn D1.3.4 M °विहारिणी; T2 G4 इन्द्रारण्य°. — c) K2 Ñ3 अहं; B3 कांता (for इष्टा). — d) Ś1 K1 वर्पा; K0.3-4 V1 वर्चा; Ñ1 वृंदा; D1 वर्दा; D3 T3 [illegible] M3.5 वंदा; T2 नंदा; M6-8 विंदा.

15 a) Ś1 K1 °श्च तथान्याः; G1 °श्चतुर्थोन्याः. — c) Ś1 समं (for सार्धं). — d) Ś1 K0.1.4 D5 देवराजनिवेशनं (K0 °शनात्); K2.3 °निवेशनात्.

16 a) Ś1 तथा; K1 तत्र. T1 पश्याम वै सार्धं. — b) MSS. (as usual) शंसित°, संश्रित°, शंशित°; cf. v. l. 1. 1. [illegible] etc. — c) Ñ3 V1 B1.3.6 m Da D1.2.3 तपस्विनं. Da D1.2 रूपवंतं.

17 a) K3 Ñ1 B1 Dn S एव (for वै). Ś1 K1.3 तेजसा; K4 तरसा. Ś1 K0.3.4 Ñ1 D1.2.3 वीर; K1 नित्यं (for राजन्). — c) T2 °रूपस् (for इव). — d) K1 सम°भभा°; K2 विप्रोष्य भा°; Ñ1 एवावभा°; Ñ2.3 Dn D4 सर्वं व्यकाशयत्; B1.3 स हि व्यभा°; B3 D1.2 स व्यप्रकाशयत्; B6 Da एव व्यकाश°; D5 सो व्यवभा°; T [illegible] अभ्यवभासयत् (G1 तथ्यवभासयत्); M6 तद्व्यवभा°; M6-8 °यत्.

18 b) K0 Ñ2.3 B D (except D1.2.3) °चाद्भुतमुत्तमं. — c) K3 D4 G3.6 °र्णोस्मि.

19 b) Ś1 K0.3.4 सामेयी; K1 सामैयी; K2 सध्यायी; N1 सौश्रेया; D2 शमीची. K3 D2 S (except G1) °बुल्बुदा. — c) K2 transp. तं and विप्रं. — d) Ś1 K1 अभ्याग°; T2 G2-4 अभिग°.

20 a) K2 च; N2 B3 D अथ; B1.3.4 वि- (for वै). Ś1 K0.1 Ñ1 गायंत्यो ल्लमानाश्च; K4 °न्त्यो नृत्यमानाश्च. Cd cites ल्लमानाः. — b) Ś1 लोभमानाश्च; Ñ2 Da लोभयित्वा च; B3.6 लोभयंतश्च; T1 क्षोभयंत्यश्च. T2 G नृत्यंतश्च (T2 G3.6 °तो वै) वरांगनाः (G1 विशेषतः). — After 20ab, T G ins.:

2010* प्रेक्षणानि च कुर्वन्त्यो विवृतं कारयन्ति च ।
अभिच्छन्त्य इवाङ्गानि हासभावविलासितैः ।
बाहूरमूलदन्तानां दर्शनं वै वराङ्गनाः ।
कुर्वन्त्यो लोभयन्त्यश्च तं द्विजं परितः स्थिताः ।

[ (L. 1) G3 प्रेक्षमाणानि कु°. T1 विकारान्कारयाम च. — (L. 2) T1 आविशद्भिर्; G1 आनमंतीर्; G3.6 °च्छंतीर्. — (L. 4) T2 G4 पुरतः; G2 परतः. G3.6 श्रिताः. ] — c) K4 वै (for च). Ñ1 मासा°. — d) Ś1 K1 वीरः;

103

## २०९

वर्गोवाच ।
ततो वयं प्रव्यथिताः सर्वा भरतसत्तम ।
आयाम शरणं विप्रं तं तपोधनमच्युतम् ॥ १
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः ।
अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज ॥ २
एष एव वधोऽस्माकं सुपर्याप्तस्तपोधन ।
यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ॥ ३
अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचिन्तकाः ।
तस्माद्धर्मेण धर्मज्ञ नास्मान्हिंसितुमर्हसि ॥ ४
सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ॥
शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ॥ ६
वैशंपायन उवाच ।
एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत् ।
प्रसादं कृतवान्वीर रविसोमसमप्रभः ॥ ७
ब्राह्मण उवाच ।
शतं सहस्रं विश्वं च सर्वमक्षय्यवाचकम् ।
परिमाणं शतं त्वेतन्नैतदक्षय्यवाचकम् ॥ ८
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले ।

---

K3 Ñ1 B3 Da D2 धीरः. — d) T G निर्भयः; M3 निश्चलः.

21 a) K0 सोपस्यत. Ś1 K0.1.3 (after corr.).4 °स्माकं; K2 (before corr.).3 D5 °स्मांश्च; Ñ2.3 V1 B1 Dn G1 °स्मासु. — c) K0.4 Da1 D5 प्राही°. — d) Ś1 K0.3.4 D5 भविष्यथ्यं; K2 भविष्यंति; Ñ1.3 V1 B1 Dn D1 T G चरिष्यथ.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B Da Dn1.n2 D1.2.4 M3.5 अर्जुनतीर्थयात्रा (B3 °वनवास); T1 संभव. — *Adhy. name:* Ś1 K0.1.3 D5 अप्सरसा (Ś1 K2 अप्सरः) शापपर्व; K3 अप्सरःशापः; M3.5 वन्दाशापमोचनं (M5 °क्षणं). — *Adhy. no.* (figures, words or both): Dn2 215; D4m 225; D5 166; T1 221; T2 G1.4 176; G2 173; G3 177; G5.6 M 175. — *S'loka no.:* Da1 Dn M3 23. — *Aggregate s'loka no.:* Dn2 7839.

### 209

1 Ś1 K1 वर्गोवाच (sic); K0.2.4 V1 वर्गो°; K3 T1 मंदो°; Ñ1 वृंदो°; B1.3 वर्दो°; T2 G M3.5 वंदा; M6-8 विंदा. — a) Ñ1 प्रस्थिताः स्म (for प्रव्य°). — b) Ñ2 B D2.4 भारत°. — c) K0.2.4 D5 आयाताः; Ñ1 B1.3 Dn अयाम; V1 जगाम; S याचाम.

2 b) M2 मोहि° (for दर्पि°). — c) T2 G2-6 च (for स्म). — d) K4 भवान् (for द्विज).

3 a) K0 एवम्; K4 एक; T G ह्येष (for एष). — b) Ñ2 Da स्वयं प्राप्तः; T2 G3.4 स्म पर्याप्तस. — c) MSS. (as usual) शंसि°, शांसि° etc. — d) Ś1 K (except K3) D D2.4 Cd प्रलब्धुं. Ś1 K Ñ1 V1 D1 वय (for इह). T G (except G1) प्रलोभयितुमा°.

4 a) Ś1 K1 सृष्टो; K2 सर्वाः. — b) Ñ3 V1 Dn D4 धर्मचारिणः. — c) T1 G3.4 अस्माद्. Ñ2 B1.3 Dn D4 वधे त्वं; B3 वर्तस्व; D1.2 वर्धत्वं (for धर्मज्ञ).

5 a) V1 D5 सर्वे° (for धर्मे°). — d) K3 Ñ2.3 B1.3 Dn D2.4 एवं (for एष).

6 b) Ś1 K1 दृष्टं (for शिष्टाः). — Da1 om. 6cd. — c) K0 D5 स्थितं च (for शरणं). T G (except G1) M च (for त्वां).

7 Ś1 K Ñ1 D5 S om. उवाच (K0.4 Ñ1 M3 om. the ref.). — a) K2 Ñ2.3 B D (except D5) T2 G2-6 स (for तु). — c) Ś1 K (except K3) Ñ1 V1 धूर (for वीर). — d) Ś1 °शुचिप्रभः; G5.6 °दीप्तिप्रभः.

8 Ś1 K2 D5 S om. उवाच. K3 विप्र उ°; K4 ऋषिरु°. — a) T G M3.5 विश्वं (for शतं). K3 Ñ2.3 B (B3 marg.) D (except Da) T1 G5.6 शतसहस्रं; V1 सहस्रमयं; B3 सहस्रं त्रिदं; T2 G1-4 M3.5 शतं सहस्रं (for सहस्रं विश्वं). Ñ2.3 B (B3 marg.) Dn G1 M3 तु (for च). Cd as in text. — b) K (except K3) Ñ V1 B D M3.5 °मक्षय्य°; Cd as in text. — c) T2 G3.4 °णतां; G1 °णं तु सं. Ś1 K1 D5 स्थितं; K0.3 Da त्वेव; Ñ1 चैव; T1 G1 चैतं; T2 G3.4 चैतत्. — d) Ñ2 B D नेदम् (D5 एतदे); Ñ1 V1 सत्यं. K0.3 Ñ1.2 V1 B (B3 marg.) D T1 M3.5

त्कर्षति जलात्कश्चित्स्थलं पुरुषसत्तमः ॥ ९
तदा यूयं पुनः सर्वाः स्वरूपं प्रतिपत्स्यथ ।
अनृतं नोक्तपूर्वं मे हसतापि कदाचन ॥ १०
तानि सर्वाणि तीर्थानि इतः प्रभृति चैव ह ।
नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः ।
पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम् ॥ ११

वर्गोवाच ।

ततोऽभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम् ।
अचिन्तयामोपसृत्य तस्माद्देशात्सुदुःखिताः ॥ १२
क नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ।
समागच्छेम यो नस्तद्रूपमापादयेत्पुनः ॥ १३
ता वयं चिन्तयित्वैवं मुहूर्तादिव भारत ।
दृष्टवत्यो महाभागं देवर्षिमुत नारदम् ॥ १४
सर्वा हृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम् ।
अभिवाद्य च तं पार्थ स्थिताः स्म व्यथिताननाः ॥ १५
स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तत् ।
श्रुत्वा तच्च यथावृत्तमिदं वचनमब्रवीत् ॥ १६
दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत माचिरम् ॥ १७
तत्राशु पुरुषव्याघ्रः पाण्डवो वो धनंजयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ॥ १८
तस्य सर्वा वयं वीर श्रुत्वा वाक्यमिहागताः । C. 1. 7879 B. 1. 217. 19 K. 1. 237. 19

---

भक्षय्य°; Ñ3 नाक्षय्य°.

9 a) K0 महीभूत्वा; K2 महो भूत्वा; K4 महीभूता. — b) K0.1.4 Ñ1 B2.5 Da Dn1.n2 T2 गृह्णती:; K3 गृह्णीतं; V1 B3 D1 गृहीतः; G2.3.5 M6–8 गृह्णंति. — c) V1 समुद्धरिष्यति; D5 उत्कृष्यति; T G उत्तारयेज्; M समुद्धरिष्येत्. K2 Ñ3 B (except B3) D (except D1.2.5) तस्मात्; G1 कश्चित्; G2.3.4 (before corr.).5 किंचित्. — d) K (except K3) D5 स्थले; M6–8 यदा.

10 a) G2.3.4 (before corr.).5.6 सर्वं; M6–8 स्वस्थाः. — b) Ś1 K3 Ñ V1 [illegible] Da3 Dn1 D2.4.5 M6.8 स्वं (for स्व-). — d) Ñ2 स्वैरेष्वपि; D4 सहसापि; G5.6 सवितापि. B1 कथंचन; T2 G2–4 न किंचन.

11 a) Ś1 K1.3 तत्र; K0.4 ततः (for तानि). T G transp. सर्वा° and तीर्था°. — b) K3 Ñ1.2 B (except B3) D M ततः (for इतः). K (except K3) D5 T G2.4.5 हि (for ह). — c) Ś1 K1 तानीह; K0.3.4 D5 ह्येतानि; D1 चैवेह; M5 यान्येह (for नाम्नेह). — d) V2 चैव ह (for सर्वशः). D1 नाम्ना ख्यातानि सर्व°. — f) Ś1 च सर्वशः; T1 विशेषतः (for मनी°).

12 Ś1 K1 वर्णोवाच (sic); K0.3.4 V1 वर्चोवाच; K2 नंदो°; B1.3 वर्दो°; T1 नंदा; G1 M8 वंदा; M6–8 विंदा; D5 T2 G2–6 M5 om. the ref. — a) D2 तीर्थानि (for तं विप्रं). — b) K3 Ñ3 Dn D3 S अपि (M6–8 अभि-) (for पुन). — c) K4 चिंतयाना दुपक्रांताः; Ñ2.3 Dn1.n2 D4.5 आचिंत°; D1 आचिंतयामोपसृताः; B3 आचिंतयामास सृताः; B5 संचित्य मोहापसृताः; B5m Ma.7 °यामाप°; B6 अचिंतयन्नापसृताः; T1 अचिंतयमपासृत्य; T2 G2–5 चिंतयंत्यो° पसृत्याय; G1.5.6 M5 °यामावसृत्य-

13 b) K4 स्थिताः कालेन; M6.8 कालेनालेन. B1 (m as in text) जनं (for नरं). — c) Ñ3 V1 अभि° (for समा°). — d) K4 आदाय तत्; Da1 T1 M6–8 आसादयेत्; G5.6 आवापयेत्.

14 a) K1.2 [illegible] D1.2 चिंतयित्वेह; K4 N Da Dn D4 S °त्वैव. — b) Ś1 K0.1 D2.5 मुहूर्तम्. — c) Ś1 K1 दृष्ट°. K0 B6 D5 महात्मानं; D1.2 T2 G1.3.4 °भाग. — d) Ś1 K1 महर्षिमुत; K0.3.4 Da1 °र्षिसुत; K3 Ñ1 T2 G4 °र्षिमथ; D1.2 °र्षि तत्र.

15 a) K2 Ñ2.3 B D (except D5) संप्रहृष्टाः; Ñ1 ततो हृष्टाः. K1 सर्वाः (for दृष्ट्वा). — b) G6 अमरद्युतिं. — c) Ñ1 विप्रं (for पार्थ). K4 om. 15c–16e. — d) M6–8 स्थित्वा. K1 प्रव्यथि°; K2 Ñ V1 B D स्म व्रीडि°; K3 स व्यथि°; S व्रीडितचेतनाः (T1 G2 M8 °लोचनाः).

16 K4 om. 16abc (cf. v. l. 15). — a) Ñ1 G3 दुःखहेतुं. — b) K0 N1.2 Dn D5 M6–8 तं; B6 Da2 T1 यत्. K3 °त्स्योथ तं वयं. — After 16ab, Ñ1 ins.:

2041* क गच्छामो वयं सर्वा यत्र लप्स्यामहे पुनः ।

— c) Ñ1 एतत् (for श्रुत्वा). K0 D5 स च; K3 Ñ2.3 B1.3 Dn D4 तत्र; Ñ1 श्रुत्वा; B5 तत्तु; B6 तं च; D2 तं तु (for तच्च). Ś1 K1 यथातथ्यं; K0 Ñ1 °तत्त्वं; V1 G2 तथा°.

17 Before 17, S (except M5.6) ins. नारदः. — a) K2.3 सागरोपांते; Ñ1 संगतानीह; D5 सागरद्वीपे. — b) Ñ1 यानि (for पञ्च). — c) V1 तत्र (for तानि). K4 G2 M गच्छथ.

18 a) Ś1 K0.3.4 D1.2.5 तत्रस्थाः; K1 Ñ1 तत्रस्थः; M5 तत्र वः. — b) K0 Ñ2 V1 B5.6 [illegible] (except Da2) पांडवेयो; K2 °वो वै; Ñ1.3 G1.3.5.6 M °चोय. — c) Ś1

।दिदं सत्यमेवाद्य मोक्षिताहं त्वयानघ ॥ १९
एतास्तु मम वै सख्यश्चतस्रोऽन्या जले स्थिताः ।
कुरु कर्म शुभं वीर एताः सर्वा विमोक्षय ॥ २०
वैशंपायन उवाच ।
ततस्ताः पाण्डवश्रेष्ठः सर्वा एव विशां पते ।
तस्माच्छापाददीनात्मा मोक्षयामास वीर्यवान् ॥ २१
उत्थाय च जलात्तस्मात्प्रतिलभ्य वपुः स्वकम् ।
तास्तदाप्सरसो राजन्नदृश्यन्त यथा पुरा ॥ २२
तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुः ।
चित्राङ्गदां पुनर्द्रष्टुं मणलूरपुरं ययौ ॥ २३
तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनम् ।
तं दृष्ट्वा पाण्डवो राजन्गोकर्णमभितोऽगमत् ॥ २

इति श्रीमहाभारते आदिपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

K1 Dn3 धर्मात्मा — After 18, D3 (marg *sec m*) S (except M3) ins

2042* इत्युक्त्वा नारद सर्वांस्तत्रैवान्तरधीयत ।

19 M6 7 read 19^ab *twice*, once with the S reading and again with the N reading I — ^a) S (M6 7 first time) तस्मात्सर्वा (T1 सर्वास्तस्माद्) — ^b) M6 7 (both second time) s वाचम् (*for* वाक्यम्) K2 Ñ2 B1 Dn2 n3 D2 इतोगता (for इदं°) S (M6 7 first time) नियतात्मा (T1 M6 8 °मो)त्र मिलता — ^c) T2 G2 3 सर्वम् (for सत्यम्) T G3 4 अत्र (for अद्य)

20 ^a) K2 3 V1 D2 च (for तु) K2 Ñ2 3 B D (except D5) G3 ता (for वै) Ś1 transp वै and सख्य — ^b) K1 शतद्रोण्यां (for चतस्रोऽन्या), see below Ko 1 4 V1 जलं, S ह्रदे K Ñ2 3 V1 B1 m Da Dn1 n2 D3 स्थिता (K3 चरा) (*for* स्थिताः) Dn3 जलस्थिता; D5 जलाश्रि° Ś1 शतद्रोणाजल स्थिता — ^c) S (except M6 8) एता अपि महाबाहो — ^d) Ñ2 3 B3 5 शापाद्, D1 2 पापाद् (*for* सर्वा) Ś1 तास्त्वाप्याशु विमो°, Ko 1, 2 4 एतास्त्वाप्याशु मोक्ष°, V1 एता शापात्प्रमोचय, B3 एता अप्याशु मोचय, B3 m Da एता शापाद्विमोचय; D5 एता स्त्याशु मोचय S मुनिशापाद्विमो° (M6-8 एताश्चैवापि मोचय) K1 N3 B1 Dn D3 as in text

21 Ś1 K1-4 D2 T G M6-8 om उवाच, Ko 4 V1 Da D3 M8 om the ref — ^a) S (except M6-8) तच्छ्रुत्वा (for ततस्ता) G3 पाण्डवस्तत्र — ^b) M6-8 °वां भरत सत्तम — ^c) G3 transp तस्मात् and शापात् Ś1 °पाद्विमीतात्मा

22 ^a) K1 V1 D1 G3 M (except M3) [redacted] (for च) S (except M6-8) सर्वा (for तस्मात्) — ^b) D3 स्त (for वपु) K4 D1 स्वयं S (except M6-8) transp वपु and स्वक — ^c) Ś1 Ko 1 4 Ñ1 तास्तत, K3 M6-8 तास्तथा; T1 तस्मात् — ^d) S पुरम् B1 (m as in text) तत्रैवान्तरधीयत

23 ^a) S अथ (T2 G2 4 च) (for तु) — ^b) °ज्ञाप्य ता — ^d) Ś1 मणिपूर°; Ko-3 4 Ñ1 V1 B3 D D1 2 मणिपूर°; K3 Ñ3 B1 2 3 मणपूर°; N3 Dn D5 मणिपूर पुनर्, T1 G1 2 6 मणलूर°

24 ^a) K3 Da Dn1 n3 D1 4 तां (*for* त) — Afte 24^a, Ñ2 D4 (*marg sec m*) S ins a passage given App I (No. 112) *N B* This passage, thoug included in all other printed edns, is missing eve in Dn MSS, of v 1 1 96 6 (998*) I — ^d) Ś1 K °भितो गत, V1 °णाभिमुखो ययौ, D1 2 G3 °भितो ययौ — After 24, almost all edns ins the following stanza which is not found in any MS hitherto collated except Ñ2

2043* आद्य पशुपते स्थान दर्शनादेव मुक्तिदम् ।
यत्र पापोऽपि मनुज प्राप्नोत्यभयद पदम् ।

— illuminating for the growth of the epic corpus!

Colophon om in B6 — *Major parvan* T2 G M सभव° (for आदि°) — *Sub-parvan* Ś1 K N2 B (B6 om ) Da Dn1 n2 D1 2 4 M6 8 अर्जुनतीर्थयात्रा (B1 °वनवास), T1 सभव — *Adhy name* Ś1 K1 M6 8 बभ्रुवाहनजन्म (M6 8 °नोत्पत्ति); Ko 4 अप्सरसां शापमोक्ष; D5 चित्राङ्गदाप्राप्ति — *Adhy no* (figures, words or both) Dn3 216, D1m 226, D3 167, T2 232, T3 G2 4 177, G3 174 G5 178, G6 8 M 176 — *Śloka no* Dn 24, M3 35 — *Aggregate śloka no* Dn3 7873

## 210

1 Ś1 K (except Ko) S om उवाच (G1 om the ref) — ^a) K1 °पराक्रम; Ñ2 V1 °पराक्रमः; D5 °पराक्रमः; M6 (*sup lin* as in text) 6-8 °परांताति K2 6 हीर्य — Ś1 K1 (hapl.) om 1^c-2^b — ^c) D1 G2 6 च (for

# २१०

वैशंपायन उवाच ।
सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ १
समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥ २
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं च शुश्राव मधुसूदनः ॥ ३
ततोऽभ्यगच्छत्कौन्तेयमज्ञातो नाम माधवः ।
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ ४
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ ५
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवेमानि तीर्थान्यनुचरस्युत ॥ ६
ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ॥ ७
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ ८
पूर्वमेव तु कृष्णस्य वचनात्तं महीधरं ।
पुरुषाः समलंचक्रुरुपजह्रुश्च भोजनम् ॥ ९
प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् ॥ १०
अभ्यनुज्ञाप्य तान्सर्वानर्चयित्वा च पाण्डवः ।
सत्कृतं शयनं दिव्यमभ्यगच्छन्महाद्युतिः ॥ ११
तीर्थानां दर्शनं चैव पर्वतानां च भारत । C. 1. 7899 B. 1. 218. 12 K. 1. 233. 31

---

पूव). Some MSS. °पूर्वेण.

2 Ś1 K1 om. 2ᵃᵇ (cf. v. l. 1). — ᵃᵇ) V1 °द्रे यानि तीर्थानि पश्चिमे भरतर्षभः. — ᶜ) [illegible] transp. सर्वाणि and गत्वा स. — After 2, D4 (marg. *sec. m.*) [illegible] ins. a passage given in App. I (No. 113).

3 ᵃ) Ś1 K1 °देशे. T G (except G1) प्रभासं समनुप्राप्तं. — ᶜ) K3 तं; M6–8 तु (for च). Ñ2.3 B (except B6) Dn D4 सुपुण्यं रमणीयं च. — After 3, D4 (marg. *sec. m.*) [illegible] ins.:

2044* चारणानां तु वचनादेकाकी स जनार्दनः ।

4 ᵃ) M (except M8) तत्राभ्यगच्छ°. — ᵇ) K1 नृप (for नाम). K4 Ñ V1 B D सखायं तत्र; Cd अज्ञातो नाम (as in text).

5 Ś1 K1 om. 5; G1 (hapl.) om. 5ᵃ–8ᵃ. — ᵇ) K0.2.3 N1 G3 (after corr.) जने; Da1 मुने; T1 G2.4.6 M पथि; T2 G3 (befor corr.) जले (for वने). — ᶜ) V1 रमेतां (for आस्तां). — ᵈ) K4 Ñ1 V1 उभौ (for ऋषी).

6 G1 om. 6 (cf. v. l. 5). — ᵃ) G3.6 तं च पार्थो ह्यपृच्छ°; M तत्कार्यं पर्य°. — G3.6 om. 6ᶜᵈ. — ᶜ) K2.3 Ñ2.3 B D (except Dn3 D1.2) एतानि (for इमानि). T1 °र्थं पार्थ सर्वाणि; T2 G2.4 °र्थं पावनानीति. — ᵈ) Ś1 K1.2 तीर्थान्युपच(K3 °स)र°; K3 °न्यनुसर°; D4 °न्यनुसरासि च.

7 G1 om. 7 (cf. v. l. 6). — Before 7, T1 M3 ins. वैशं°. — ᵃ) Ś1 K (except K3) Ñ1 B6 Da D1 तस्य (for ततो). — ᶜ) V1 S (G1 om.) transp. उवाच and च. Ñ1 वाचं (for उवाच). Ś1 K Ñ1 स (for च). — ᵈ) S (G1 om.) त्वेवमे° प्रभो.

8 G1 om. 8ᵃᵇ (cf. v. l. 5). — ᵃ) T1 समेतौ (for प्रभासे). Ś1 °पार्थिवौ. — ᵈ) Ś1 K3 M6–8 उप°; K1 अप° (for अभि°).

9 ᵃ) G1 M3.6 तु (for तं). — ᶜ) K2 Ñ1.3 V1 B D (except D1.2) समंतात्; B1 m पुरस्तात्. K2.3 Ñ2.3 B D (except D5) मंडयांचक्रुः; T2 G2.4 समलं°. — ᵈ) Ś1 K0.1.4 सर्वकामसमृद्धिभिः.

10 K2 (hapl.) om. 10ᶜ–11ᵇ.

11 K2 om. 11ᵃᵇ (cf. v. l. 10). — ᵃ) N V1 B D (except D5) °ज्ञाय तान्; S (except M6–8) °ज्ञातवान्. — ᵇ) M6–8 तु (for च). — ᶜ) Da D1.2 transp. सत्कृतं and शयनं. — ᵈ) K0.2.4 Ñ1 D5 T G3–6 M सहाच्युतः; K3 G1.2 सहार्जुनः; Ñ2.3 Dn D4 महामतिः; B (except B6) समद्युतिः. — After 11, N (except K0.1 Ñ1) ins.:

2045* ततस्तत्र महाबाहुः शयानः शयने शुभे ।

12 T G M6 om. 12. — ᵃ) Ñ3 B Da1 Dn D4 नदीनां (for तीर्थानां). N2.3 B D (except D1.2.5) पल्वलानां च (for दर्शनं चैव). — ᵇ) K2.3 Ñ3 Dn D4 तथैव च; Ñ3 B Da D5 च दर्शनं (for च भा°). — ᶜ) Ś1

आपगानां वनानां च कथयामास सात्वते ॥ १२
स कथाः कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपहृतस्तस्मिञ्शयने स्वर्गसंमिते ॥ १३
मधुरेण स गीतेन वीणाशब्देन चानघ ।
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा ॥ १४
स कृत्वावश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ १५
अलंकृता द्वारका तु बभूव जनमेजय ।
कुन्तीसुतस्य पूजार्थमपि निष्कुटकेष्वपि ॥ १६
दिदृक्षवश्च कौन्तेयं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ॥ १७
अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥ १८
स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥ १९
कुमारैः सर्वशो वीरः सत्कारेणाभिवादितः ।
समानवयसः सर्वानाश्लिष्य स पुनः पुनः ॥ २०
कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते ।
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ॥ २१

इति श्रीमहाभारते आदिपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ समाप्तमर्जुनवनवासपर्व ॥

K1 सात्वतः; M (except M3) सत्वतः.

13 a) Ś1 K0.1.4 D5 स तथा; K2.3 Ñ2.3 B Da Dn D1.2.4 एवं स; G1 कथां स; M6-8 स कथं. — c) Ñ2.3 B3 Da1 Dn D4.5 °योपि ह°; B5 कुंतीपुत्रो ह°. — d) K2.3 Ñ V1 B D °संनिभे; T G (except G1) सत्यविक्रमः.

14 a) Ś1 K1 M6-8 च; K2.3 Ñ2.3 B D (except D1.2) एव; M8 सु- (for स). — b) T G (except G1) वाद्यशब्देन. Ś1 Da M6-8 भारत; K1 चानघ; Ñ3 Dn D4.6 चैव ह. — cd) M6-8 transp. बुबुधे and स्तुतिभिर्.

15 a) M8 कृत्वा च (for स कृत्वा). Ś1 K0.3 B3 D5 °कर्माणि. — b) Ś1 °वंदितः. — After 15ab, [illegible] ins.:

2046* वार्ष्णेयं समनुज्ञाप्य ततो वासमरोचयत् ।
तथेत्युक्त्वा वासुदेवो भोजनं वै चकार ह ।
प्रतिरूपधरं पार्थं विसृज्य सहसा हरिः ।
[ (L. 1) M6-8 °ज्ञाप्य. ]

— d) Here and below Ś1 द्वारिका (for द्वार°).

16 S (except M6-8) om. 16cd. — c) K2.3 Ñ2.3 V1 [illegible] D (except D1) M6-8 कुंतीसुतस्य. — d) K0.4 D1 अभि-; Ñ1 अथ; M6-8 इह (for the first अपि). K0 M7.8 निष्कंट°.

17 a) Ñ2 B6 D दिदृक्षंतश्च. S गोविंदं. — d) Ñ1 स्तुवंतश्च सह°. — After 17, T [illegible] (except G1.3) ins.:

2047* क्षणार्धमपि वार्ष्णेया गोविन्दविरहाक्षमाः ।
कौतूहलसमाविष्टा स्वदामुत्प्रेक्ष्य संस्थिताः ।
[ (L. 1) T1 G3.6 °क्षताः. ]

18 a) Ś1 K (except K3) Ñ1 D5 अथावलोके (for अव°). — b) V1 सखिस्तु शतशस्तथा. — d) V1 °योभयन्महान्.

19 a) K1 सत्कृतः (for [illegible] तथा). M3.5 transp. and तथा. — b) Ś1 K Ñ1 D1.2.4 °कादिभिः. — c) [illegible] °याभिवाद्यार्हान्.

20 Ś1 om. 20; G1 (1 hapl.) om. 20ab. — a) [illegible] सत्कृतो; T2 G2-6 सर्वतो. — b) K0 D5 °वंदितः; K3-4 [illegible] B6 °पूजितः; Ñ2.3 B1.3.6 Dn °चोदितः; M3 (inf. lin. [illegible] in text).5 °नंदितः. — d) K5 आभाष्य. K1 D1 [illegible] (except T1) च (for स).

21 b) Ñ1 वृष्णिभोजस°. — For 21, [illegible] subst.:

2048* कृष्णः स्वभवनं रम्यं प्रविवेश महाद्युतिः ।
प्रवासादागतं सर्वा देव्यः कृष्णमपूजयन् ।
[ (L. 1) M3.5 दिव्यं (for रम्यं). G1 M3.5 महायशाः. — (L. 2) T2 G2-4 प्रभासात्. ]

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan.* K Ñ3 B Da Dn1.n3 D2.5.6 M3 अर्जुन(B6 om.)तीर्थयात्रा (B3 °वनवास); T1 संभव; to [illegible] K0.4 add समाप्त. — *Adhy. name:* Ś1 K1 रैवतकगिरिम(Ś1 °स)हः; K0.3.4 D5 द्वारका(K3 °काभि)गमनं; M3 वासुदेवागमः. — *Adhy. no.* (figures, words or both): Dn3 217; Dam 237; D5 168; T1 223; T2 G1.4 178; G2 175; G3 179; G5.6 M 177. — *Śloka no.:* Dn 21; M3 40. — *Aggregate śloka no.:* Dn3 7894.

## 211

1 Ś1 K (except K0) S om. उवाच. — In Ś1 the portion of the text from कतिपया° (in a) up to

वैशंपायन उवाच ।

ततः कतिपयाहस्य तस्मिन्नैवतके गिरौ ।
वृष्ण्यन्धकानामभवत्सुमहानुत्सवो नृप ॥ १
तत्र दानं ददुर्वीरा ब्राह्मणानां सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा ॥ २
प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः ।
स देशः शोभितो राजन्दीपवृक्षैश्च सर्वशः ॥ ३
वादित्राणि च तत्र स्म वादकाः समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गानानि गायनाः ॥ ४
अलंकृताः कुमाराश्च वृष्णीनां सुमहौजसः ।
यानैर्हाटकचित्राङ्गैश्चञ्चूर्यन्ते स्म सर्वशः ॥ ५
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ॥ ६
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ॥ ७
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान् ।
उपगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ॥ ८
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ ९
अक्रूरः सारणश्चैव गदो भानुर्विडूरथः ।
निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ १०
सत्यकः सात्यकिश्चैव भङ्गकारसहाचरौ । C. 1. 7916 B. 1. 210. K. 1. 230. 11

°मभवत् (in a) is lost on a broken part. — a) T1 G1.2 M °पयाहस्सु. — b) S तत्र रैव°. — d) K3.5 Ñ2 B D (except D5) त्सवो नृपसत्तम.

2 Ś1 missing for 2bc. — b) K (except K3) Ñ V1 Dn D5 ब्राह्मणेभ्यः. — d) K3m.4 V2 Dn1 D5 महेंद्रस्य; K5 महांतश्च; T1 महत्सस्मिन्; T2 G1.4 (after corr.) M1 महे तस्मिन्; G2.3.4 (before corr.).5.6 M6-8 मखे तस्मिन्. Ñ3 गिरस्तथा; S गिरौ तथा (G1.3 M6-8 °दा). Cd cites महः.

3 a) Ś1 Ko.2.4 Ñ1 पादपै (for प्रासादै). — Ś2 missing from च (in a) up to दीप (in d). K1 S (except M6-8) तु (for च). — b) Ko.3 Ñ3 V1 तत्र (for तस्य). K4 समीपतः. — G1 om. 3cd. — c) K1 °शः पूजितो. — d) K3 फल°; Ñ2 B (except B5) D कल्प°; Ñ3 V1 नदी°; Cd Arjp दीप° (as in text). Ś1 K4 च सर्वतः; Ko.2 B (G1 om.) च शोभितः (M5.6 समंततः).

4 V1 (hapl.) om. 4-5. Ś1 missing from स्म (in a) up to जगुर्गा (in d). — a) K3 Ñ B D तथान्ये (Ñ3 तान्येव); T2 G3-4 तत्र स्युर्. — b) Ko चाथ वादयन्. — M6-8 om. 4c-5d. — c) Ko.4 D1.6 चापि (for चैव). — d) K2 Ñ3 B Da Dn1.n2 D5 गेयानि; K4 सामानि; Ñ3 तत्रैव; Dn3 D1.2 S (M6-8 om.) गीतानि. Ñ3 Dn3 D2.3 S (M6-8 om.) गायकाः.

5 V1 M6-8 om. 5 (cf. v. l. 4). — Ś1 missing from स्म (in a) up to चञ्चूर्यन्ते (in d). — b) K3 Ñ2.3 B2.6 D T2 G3-4 M2 (inf. lin. as in text) सुमहौजसां. — Ñ1 om. 5c-6d. — c) K1 कांचन° (? gloss); K2 Ñ2.3 V1 B D (except D5) हाटकचित्रैश्च. — d) K3 B1.3 च (for स्म). M5.6 भारत (for सर्व°).

6 Ñ1 om. 6 (cf. v. l. 5); M2 (? hapl.) om. 6-7.

7 M2 om. 7 (cf. v. l. 6). — a) Ś1 K (except K3) D5 हलायुधः. — b) Ś1 K1 रेवत्या. — c) Hypermetric! cf. 8c. Ś1 K D5 अनुगीय° (K3m as in text); T2 G3 अभिगम्य°; G2 अमेय°. T G M2 बहुभिर्. — K1 D1 (hapl.) om. 7d-8c.

8 K2 D1 om. 8abc (cf. v. l. 7). — c) Hypermetric! K2 प्रगीय°; K3 Ñ Dn D2.4.5 अनुगीय°; V1 B1.3 Da अनुगम्य° (cf. 7c); B3 अनुगीतः स.

9 a) K3(m as in text).4 G2 M2 रौहिणे°; Cd as in text. Some MSS. शांबश्च. — b) K2 D2.5 S (except M3) समर(M6-8 परम)दुर्जयौ. — c) Ś1 K1.2.4 Da1 D5 °माल्यांबर°.

10 a) K3.2 Ñ B D (except D5) गदो बभ्रुर्. N (except Dn1) T1 G1.2.5.6 विदू(Ś1 °भू)रथः; cf. 1. 90. 42. — c) Ś1 निषद°; K1 °शह°; K2 °सित°; K3 °षध°; T2 G4 निःशठ°; G2.3 निःशंक°.

11 a) Ko.4 D5 भृंगकार; K2.3 भद्रकार; T1 G1 भंगाकार°. Ko.2.3 Da -सहाचरौ; K4 -महाबलः; Ñ1

हार्दिक्यः कृतवर्मा च ये चान्ये नानुकीर्तिताः ॥ ११
एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।
तमुत्सवं रैवतके शोभयांचक्रिरे तदा ॥ १२
तदा कोलाहले तस्मिन्वर्तमाने महाशुभे ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ १३
तत्र चङ्क्रम्यमाणौ तौ वसुदेवसुतां शुभाम् ।
अलंकृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ १४
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तथैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ १५
अथाब्रवीत्पुष्कराक्षः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १६
ममैषा भगिनी पार्थ सारणस्य सहोदरा ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ १७

अर्जुन उवाच ।

दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव संपन्ना कमिवैषा न मोहयेत् ॥ १८
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ १९
प्राप्तौ तु क उपायः स्यात्तद्ब्रवीहि जनार्दन ।
आस्थास्यामि तथा सर्वं यदि शक्यं नरेण तत् ॥२०

वासुदेव उवाच ।

स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ २१
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतोः शूराणामिति धर्मविदो विदुः ॥ २२
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।

---

-महाबलौ; Ñ3 B Dn D3 -महारथौ; D1.2 -महोदरौ; M8 -सखेचरौ; M6-8 -सहायकौ. — c) K2.3 Ñ2.3 V1 B D (except D3) °थ बभ्रुवश्चैव.

12 After 12, S ins.:

2049* वासुदेवो ययौ तत्र सह स्त्रीभिर्गुणान्वितः ।
यत्वा दानं द्विजातिभ्यः परिव्राजमपश्यत ।

13 a) Ś1 K0.2.4 D2 ततः; K3 B1.3.5 चित्रे; K3 तत्र; N1 D1.2 तथा; Da1 Dn D4 चित्र-. Ñ2 Dn D4 S (except M5.6) कौतूहले. — b) K3 m.2 Ñ V1 B D (except D3) महाद्भुते; K4 महे शुभे; S महोत्सवे.

14 a) Ś1 K0.1 ततः (for तत्र). Ñ1.2 B (except B1) Dn D3.4 G1 M5.6 चंक्रम°; D5 चंक्रममाणानां. — c) K0.2.4 N1 V1 S (except G1 M6.7) स्वलंकृतां. — d) K3 V1 B3 Dn1.n3 T G (except G5.6) M8 सुभद्रां ददृशुस्तदा; D1.2.6 सुभद्रां ददर्शार्जुनः.

15 a) G3 दृष्ट्वैतामर्जुनस्यास्य. — c) K0 D2 S त्व(T1 G1-4 था)नेकाग्र°; K3-4 B3.6 D1.2.4 (after corr.) तदेकाग्र°; Ñ3 B1.4 Da Dn D3 (before corr.) तदैकाग्र°; Cd अनेकाग्र°.

16 a) Ñ3 B5.6 D (except Da D5) अब्रवीत्पुरुष व्याघ्रः; S अब्रवीत्पुंडरीकाक्षः.

17 a) M6-8 ममैव. — b) T G सहोदरी. — After 17ab, K2-4 N2.3 V1 B D ins.:

2050* सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।

— d) B3 D1.2 °र् स्वकं. — After 17, M6-8 (which om. the ref. before 18) ins.:

2051* अब्रवीत्पुण्डरीकाक्षं प्रहसन्निव भारत ।

(cf. 16ab and v. l.).

18 Ś1 K1 S om. उवाच (M6-8 om. the ref.). — a) Ś1 K4 Ñ2 एव च; Ñ2 B1 Da1 Dn चैषा (for चैव). G3 रूपयौवनसंपन्ना. — d) B (except B1) Dn1 (by corr.) कमेवैषा; G1 कथं चैषा. K0 D5 न क्षोभयेत्; G1 (before corr.) मनो हरेत्.

19 b) K3 स्वयमेव भ°. N1 स्थिरं (for ध्रुवम्). — T1 G1-4 ins. after 19ab; G5.6, after 19:

2052* देववृन्दः सदा त्वां तु स्तुत्वा विजयतेऽसुरान् ।
तव संदर्शनात्स्वामिन्प्राप्यं न हि तत्किमु ।

— c) G (except G1.4) वार्ष्णेय.

20 a) Ś1 K0.1.4 B3 प्राप्तौ च; G1 प्राप्तुं तां. T1 तत्प्राप्तौ क उपायं मे. — b) Ś1 K0.2 तन्मम ब्रूहि; K2.3 Ñ V1 B5.6 D S (except M6-8) तं म°; K4 तद्ब्रूहि त्वं. — c) K2 Ñ V1 B D M6-8 तदा; K4 G1 M8 यथा; T1 G3 इति तत्. — d) K2 कर्तव्यं मानुषेण तत्; D2 यदि शक्यं जनार्दन.

21 Ś1 K1 S om. उवाच. — b) K4 क्षत्रियर्षभ; M6-8 पुरुषोत्तम. — c) B3 M8 स तु. Ś1 K1 संगमितः पार्थ; D2 संशयितार्थश्च. Cd cites संशयितः (as in text). — d) K3 विवाहस्यानि°; S (except G1.2 M5.6) स्वभाव[:]स्यापि°.

22 b) K1 विधीयते; G3 विधौ परे. — c) Ñ1.2 M1 विवाहहेतुः. S कन्यानां. — d) T1 G2-4 वेदविदो.

हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ २३
वैशंपायन उवाच ।
ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान्पुरुषान्राजन्प्रेषयामासतुस्तदा ॥ २४
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः ॥ २५

इति श्रीमहाभारते आदिपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

## २१२

वैशंपायन उवाच ।
ततः संवादिते तस्मिन्ननुज्ञातो धनंजयः ।
गतां रैवतके कन्यां विदित्वा जनमेजय ॥ १
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ।
कृष्णस्य मतमाज्ञाय प्रययौ भरतर्षभः ॥ २
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
सैन्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ३
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ॥ ४
संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् । C. 1. 7935 B. 1. 220. 1 K. 1. 244. 1

23 ᵃ) Ś1 K0.1.4 N1 अतः प्रचिन्त्य क॰. — After 23ᵃᵇ, T2 G (except G1) ins.:

2053* पतिरूपधरस्त्वं तु यदा कालविपाकतः ।

— ᶜ) D5 तस्याः; S चा(G3 चा)स्याः. — ᵈ) K0 D5 कस्ते (द्; D1 को वेद वै (by transp.).

24 Before 24, only Dn2 ins. वैशं॰ उ॰ (as in text), and G1.2 M6-8 वैशं॰; the rest om. the ref. — ᵇ) Ś1 K1 विनिश्चित्य विहृत्य च (Ś1 तो). — ᶜ) K2 Ñ2.3 B D मन्यान् (for राजन्).

25 ᵇ) K0.3.4 ॰प्रस्थ(K4 ॰स्थे)स्थिताय वै; T1 ॰प्रस्थनिवासिने. — ᶜ) T1 G1 M महाबुद्धिर्. — ᵈ) K1 च संहृष्टः; T1 ससारस्फः; T2 G2-4 समाहितः; G1 समावृतः; G5.6 M (except M8) समाहृतः. — After 25, S ins.:

2054* भीमसेनस्तु तच्छ्रुत्वा कृतकृत्यं स मन्यते ।
हृष्टेयं मनुजैः सार्धमुत्सवा प्रीतिमुपेयिवान् ।

Colophon. *Major parvan:* T2 G M संभव॰ (for आदि॰). — *Sub-parvan:* Ś1 K N2 B3.5.6 Da Dn1.n2 D1.3.4.6 M5.6 सुभद्राहरण (K3 अर्जुनतीर्थयात्रा and सुभद्राहरण); B1 अर्जुनतीर्थयात्रा. — *Adhy. name:* K0.4 वासुदेवार्जुन(K4 ॰नयोर्)मंत्रः; K1 वासुदेवमंत्रः. — *Adhy. no.* (figures, words or both): K3 213; Dn2 218; D4m 228; D5 169; T1 224; T2 G1.4 179; G2 176; G3 180; G5.6 M 178. — *S'loka no.:* Dn M2 25. — *Aggregate s'loka no.:* Dn2 7919.

### 212

☞ The sequence of st. 1–8 in S (which om. 5ᶜᵈ, 7ᶜ–8ᵇ) is: 1ᵃᵇ, 2, 6, 7ᵃᵇ, 1ᶜᵈ (followed by passage No. 114 given in App. I, see below), 3–5ᵃᵇ, 8ᶜᵈ.

1 K1.2.4 D2 S om. उवाच; K3 om. the ref. Ś1 om. up to संवादि- (in ᵃ). — ᵃ) K0.3.4 संनिश्चिते; K1 N1 संचारिते; Ñ2 V1 B3.6 ससु॰; B1.2m संव॰; Da संसु॰. S चारैः संचारिते त॰; Arjp (?) संचारिणा तु तच्छ्रुत्वा. Cd cites संचारिणा (=वार्ताहरेण). — T2 G2.4 om. 1ᶜᵈ. — ᶜ) S (T2 G2.4 om.) रैवतकात्. — ᵈ) K2 विनिश्चित्य शुभाननां; S (T2 G2.4 om.) प्रविष्टां द्वारकां प्रति. — A passage given in App. I (No. 114) is ins. in S after 1ᶜᵈ (in T2 G2.4, which om. 1ᶜᵈ, after 7ᵃᵇ); in D4, suppl. fol. *sec. m.*, after 2ᵃᵇ.

2 For the sequence of S cf. v. l. 1. — ᵃ) K3 ततोऽर्जुनोऽप्य॰. After 2ᵃᵇ, D4 ins. a passage given in App. I (No. 114); cf. v. l. 1. — ᶜ) Ñ3 Dn D2.4.5 आदाय; S आस्थाय. — ᵈ) K4 पुरुष॰; Some MSS. ॰पैभ. — After 2, S ins.:

2055* वृष्णैः सहोत्सवैरेवं कृष्णयोऽप्यगमत्पुरीम् ।
[ M वृत्तोत्सवे रैवतके (for the prior half). ]

3 For sequence of S cf. v. l. 1; G3 om. 3–5ᵃᵇ. — ᶜ) Ś1 K0-3 S (G3 om.) सैन्य- (as in text); B3.6 सैव्य; the rest शैब्य-.

4 G3 om. 4 (cf. v. l. 3). — ᵇ) K0 Ñ2 V1 D2.6 T2 G1-6 -वर-; K2 -रथ-; D1 इव (for -रव-). — ᶜ) T2 G2 ज्वलिताकं॰. — ᵈ) T2 G2 ॰नाशिना.

5 G3 om. 5ᵃᵇ (cf. v. l. 3). K3 reads 5ᵃᵇᶜ in marg. — After 5ᵃᵇ, S (except G3) ins.:

2056* युक्तः सेनानुयात्रेण रथमारोप्य माधवीम् ।

मृगयाव्यपदेशेन यौगपद्येन भारत ॥ ५
सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्य सह रैवतम् ।
दैवतानि च सर्वाणि ब्राह्मणान्स्वस्ति वाच्य च ॥ ६
प्रदक्षिणं गिरिं कृत्वा प्रययौ द्वारकां प्रति ।
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ॥ ७
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ।
रथेनाकाशगेनैव प्रययौ स्वपुरं प्रति ॥ ८
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिको जनः ।
विक्रोशन्प्राद्रवत्सर्वो द्वारकामभितः पुरीम् ॥ ९
ते समासाद्य सहिताः सुधर्मामभितः सभाम् ।
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् ॥ १०
तेषां श्रुत्वा सभापालो भेरीं सांनाहिकीं ततः ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥ ११
क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा ।
अन्नपानमपास्याथ समापेतुः सभां ततः ॥ १२
ततो जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥ १३
भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ॥ १४
तेषां समुपविष्टानां देवानामिव संनये ।
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः ॥ १५
तच्छ्रुत्वा वृष्णिवीरास्ते मदरक्तान्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहंकृताः ॥ १६
योजयध्वं रथानाशु प्रासानाहरतेति च ।

[ T3 G4.6 शुस-; G6 शुसः (for क्षुब्धाः). ]
— S om. $5^{cd}$. — $^{d}$) Ñ1 चानघ. K3.4 Ñ3 B3 D1.2 स (B3 प्र-) ययौ भरतर्षभ (Ñ3 D1 °भः); V1 ययौ रैवतकं गिरिं; B5.6 Dn D4.5 प्र(B6 स)ययौ पुरुषर्षभः.
6 For sequence of S cf. v. l. 1. — $^{a}$) K3 S -व्यथ. — $^{b}$) Ś1 K1 °भ्यर्च्य मह-; K0 °भ्यर्च्य स ह; K2.3 corrupt; N1 समभ्यर्च्य च; Ñ3 B (except B1) D (except D5) °भ्यर्च्येव हि. M (except M6) दैवतं.
7 $^{a}$) Ś1 K0 Ñ2 Dn D3.4.5 गिरेः; K3 स्वयं. — After $7^{ab}$, Ñ1 ins.:
2057* सुभद्रां कृष्णभगिनीं स्त्रीभिः परिवृतां तदा ।
while S reads $1^{cd}$ (om. in T3 G3.4; cf. v. l. 1). — S om. $7^{c}$–$8^{b}$ (G4 om. $7^{c}$–$14^{d}$). — After 7, K (except K1) Ñ3 V1 B D ins.:
2058* सुभद्रां चारुसर्वाङ्गीं कामबाणप्रपीडितः ।
8 S om. $8^{ab}$, G3 om. $8^{cd}$ also (cf. v. l. 7). — $^{c}$) Ś1 K1 आकाशवेगेन; K3.4 Ñ2 V1 B1.3.6 Dn1.n3 D4 कांचनाङ्गेन; Ñ1 कामयानेव; Dn3 D3.2 कामवे(D2 °यो)गेन. — $^{d}$) K4 G1.6 स्वपुरीं.
9 G3 om. 9 (cf. v. l. 7). — $^{b}$) K3 N3 V1 B D T1 °का जनाः. — $^{c}$) K0 T3 G3.4–6 व्या(K0 G2 व्य)क्रोशत. K3 Ñ3 V1 B D T1 विक्रोशन्तो(D5 T2 व्याक्रोशन्प्रा)द्रवन्सर्वे.
11 G3 om. 11 (cf. v. l. 7). — $^{b}$) T2 G1 M संनाहयं(G1 °यीं)स्तदा; T3 G1 सांनाहयंस्तदा; G3.6 सांनाहयत्तदा.
12 G3 om. 12 (cf. v. l. 7). — $^{a}$) Ñ2 क्रुद्धास् (for क्षुब्धास्). T3 G1–6 क्षोभितास्तेन; G6 सुधर्मास्तेन (all these om. अथ). — $^{b}$) Ś1 K0.4 B1 तथा; Ñ1.3 तत°. — After $12^{ab}$, S (except G3) ins.:
2059* अन्तर्द्वीपास्ससुपेतुः सहसा सहितास्तदा ।
[ G1 M4 सभां दे; M6–8 तथैव (for सहसा). T1 सहैव कुले तदा. ]
— $^{c}$) D5 D1.2 अथापास्य (by transp.); S (G3 om.) अपाहाय. Ś1 K1 Ñ1 °पानाद्य(°नम)पास्यैव. — $^{d}$) K3 Ñ1 V1 B D (except Dn3 D5) T3 G3.4–6 समंततः; Ñ3 तत सभां (by transp.).
13 G3 om. 13 (cf. v. l. 7). — $^{a}$) Ñ3 V1 B3.4 D धत्र. — $^{b}$) K3 T3 G3.4.6 परार्ध्यास्तरणानि; G1 चित्रास्तरण°.
14 G3 om. 14 (cf. v. l. 7). — $^{b}$) G1 M1–4 °महाबलाः. — D1 om. $14^{c}$–$15^{d}$. — $^{c}$) Ś1 K0.1.4 Ñ1 बहुशः. — $^{d}$) K1 काष्ठानीव. T3 G3.4 दीप्यमानानि सर्वतः.
15 D2 om 15 (cf. v. l. 14). — $^{b}$) T3 G (except G1) संगमे. — $^{d}$) Ñ1 समानुगः; T1 तथाविधं; G1 समागत M समागतः (M3.5 °तान्) (for सहा°).
16 $^{a}$) Ñ3 °स्ता वृष्णि°. — $^{b}$) Ñ3 V1 B6 D (except D5) मदसंरक्त°; B5 क्रोध°. — $^{c}$) K3 B पार्थेन. — $^{d}$) K0.4 D5 अमर्षिताः; T3 G (except G1) महाबलाः (for अहं°). T1 यादवाः सहसा द्रुताः.
17 $^{a}$) G1 योजयित्वा. — After $17^{a}$, S ins.:
2060* नागानश्वांस्तथैव च ।
कवचानाहर क्षिप्रं.

धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥ १७
सूतानुचुक्रुशुः केचिद्रथान्योजयतेति च ।
स्वयं च तुरगान्केचिन्निन्युर्हेमविभूषितान् ॥ १८
रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्संकुलं महत् ॥ १९
वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ २०
किमिदं कुरुथाप्रज्ञास्तूष्णीं भूते जनार्दने ।
अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः ॥ २१
एष तावदभिप्रायमाख्यातु स्वं महामतिः ।
यदस्य रुचितं कर्तुं तत्कुरुध्वमतन्द्रिताः ॥ २२
ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णीं भूतास्ततः सर्वे साधु साध्विति चाब्रुवन् ॥ २३
समं वचो निशम्येति बलदेवस्य धीमतः ।
पुनरेव सभामध्ये सर्वे ते समुपाविशन् ॥ २४
ततोऽब्रवीत्कामपालो वासुदेवं परंतपम् ।
किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्दन ॥ २५
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ।
न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ॥ २६
को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति ।
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् ॥ २७
ईप्समानश्च संबन्धं कृतपूर्वं च मानयन् ।
को हि नाम भवेनार्थी साहसेन समाचरेत् ॥ २८
सोऽवमन्य च नामास्माननादृत्य च केशवम् । C. 1. 7069 B. 1. 220. 8 K. 1. 244. 6

[ (L. 2) T2 G3-4 °चान्याहर (G3 °रत्); G5.6 °चानाहरत्; G1 °चामक्षतान्. ]
— K3 (hapl.) om. 17c-18b. — c) G1 M3 तोमराणि. B6 Da D1.3 महान्ति च.

18 K3 om. 18ab (cf. v. l. 17). — a) Ñ1 च चुक्रु°; T2 G (except G1) विचुक्रु°. — b) K0 रथानायोजयेति; D3 रथानां योजयेति; T1 रथानाहरतेति. — d) Ñ1 T1 हेमपरिष्कृतान्. Ś1 K1 आनिन्युर्हेमभू°; N2 B6 D1,2.4 अयुंजन् हेमभू° (D2 हेममालिनः).

19 a) T2 G3-6 महत्सु (for ध्वजे°). — c) D1 आक्रंदे च; G5.6 महास्कंधे. Ś1 K1.2 M5.6 °क्रंदेन वी°; T2 G3-4 महायादववी°. — d) K2.3 Ñ2 V1 B Da D4.5 G1 तुमु(or °म)लं; M6-8 क्रंदनं.

20 c) K3 B (except B6) D3 तदा (for ततः).

21 a) Ś1 K3 D1.6 °साम्रा°; K0.1 N2 °ताम्र°; N1 पुरुषाः प्रा°; T1 M स्वकृतप्र°; T2 G चाकृतप्र° (G1 तु कृतं प्रा°). — K0 (1 hapl.) om. 21d-22c. — d) Ś1 K1 G1-6 M3 मेघ°; K3.4 D3 किमु गर्जथ (K3 °त); D1 मोह°; D2 आहव°.

22 K0 om. 22a (cf. v. l. 21). — b) Ś1 K3 D1.3 G2.3.6 आख्यातुं स्वं; G1 M आख्यातीव. B3 सु- (for स्वं). T2 G (except G1) °तु मम यद्वदि. — c) Ś1 K0.1.4 यदस्मै; K3 यद्यस्य. K2-4 B1 Dn D3 G1 M5.6 रुचिरं. T1 corrupt.

23 a) Ñ1 M3 °स्तद्वचनं; T2 G (except G1) °स्ते वचनं. — c) K0.3 D1.2.3 G3 M3 तूष्णीभूतास् (D3 °भूत्वा). — d) Ś1 K0.1.4 D3 T1 अथ (for च).

24 a) K0.3.4 सु(K4 स)संवादं; B1 D2.4.5 समं वाचो; B3.5 सर्वे वाचं; B6 सर्वे व°. K0 D3 निशम्यैते; Ñ2 B3 Da Dn D3 °स्यैव; B1.3.6 °म्याथ. K3 V1 D1 समं ततो(V1 समवाये)थ निःशब्दे; T1 G5.6 समवाय(°वोयं)स्तु निःशब्दा; T2 G3-4 यावद्वास्त्वपि (G3 om. तु) निःशब्दा; G1 समा वाचा तु निःशब्दा.

25 ab) K3.6 Ñ3 B (except B6) वचो रामो वासु°; Ñ3 Dn D3 वासुदेवं वचो रामः; T1 G1 M वासुदेवं कामपालः (by transp.). Ś1 K1 अरिंदमं; K4 Ñ2 B D M (except M3) परंतपः. — After 25ab, S ins.:

2061* त्रैलोक्यनाथ हे कृष्ण भूतभव्यभविष्यकृत् ।

[ Before the line, T1 ins. कामपालः; G1 बलः; M5-8 बलदेवः. ]
— c) T1 M6-8 किमिवांगोप°; T2 G3.4 किमुपांशूप°; G5.6 किमु चाग्रोप°. — T1 om. 25d-26a. — d) V1 मुहुर्मुहुः; S (T1 om.) जनाकुलं.

26 T1 om. 26a (cf. v. l. 25). — b) G1 M (except M3) अर्चितः (for अच्युत).

27 a) Ś1 K0.1.4 Ñ1 D2.3.6 भुक्त्वैव (Ñ1 °क्त्वापि; D2 °क्त्वा हि) तत्रान्नं; G6 तत्रैव भिक्षान्नं. — b) G3 पापकृद् (for भाज°). Ś1 K1 भक्तुम्. T1 G5 भोक्तुमर्हति पापकृत्; G6 मयीमां भोक्तुमर्हसि. — c) Ś1 K (except K2) D3 जन्म; T2 G2 M3 जातः (for जातम्).

28 a) K2 Ñ2 B2.3 D1 ईप्सन्नेव हि; Ñ3 B1.6 Da Dn D3 इच्छन्नेव हि; D2 °मानः स्व-. — b) K2.4 Ñ2 B1.3.4 D (except Da2 D3) M5.6 कृतं (for कृत-). T1 सुमारयन्; G1 समानवै; M समानयेत् (M3 °नयन्; M5 °ययत्).

29 30 प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ २९
कथं हि शिरसो मध्ये पदं तेन कृतं मम ।
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ॥ ३०
अद्य निष्कौरवामेकः करिष्यामि वसुंधराम् ।
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ॥ ३१

तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ॥ ३२

इति श्रीमहाभारते आदिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ समाप्तं सुभद्राहरणपर्व ॥

## २१३

वैशंपायन उवाच ।
उक्तवन्तो यदा वाक्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंहितम् ॥ १
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयमसंशयम् ॥ २
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ३
प्रदानमपि कन्यायाः पशुवत्कोऽनुमंस्यते ।

---

— ᵉ) Ś1 Ñ1–D1 मवेशार्थी; T–G °दर्थी. — ᶠ) K1.3 समाचरन्; S चरेद्बुधः.

29 ᵃ) S सोवमस्य. K3.4 Ñ1.3 V1 B3.5.6 Da Dn D1.4.5 तथास्माकम्; K3 च मः सर्वान्; B1 तथा चास्मान्; T2 G1 च नैयास्मान्; G1 च मास्मासु. D1 सोचमन्यत तानस्मान्. — ᵇ) S अवमस्य (for अना°). — ᶜ) K3 B6 (before corr.) Da3 D3 कृतवान्.

30 ᵃ) D5 हे; T2 G2–4 तु (for हि). T2 G2–4 सात्वतां मध्ये. — ᵇ) K0.2.3 Ñ3 B D (except D1) transp. पदं and कृतं. M3 महत् (for मम). T1 यादं संनिहितं मम; T2 G1–4 कृत (G3 °तः) मोहादकः (G3 °कं) कथं. — After 30ᵃᵇ, T2 G (except G1) ins.:

2062* त्वया चेदाभ्यनुज्ञातो धर्षयिष्यति माधव ।
[ G2.6 मर्षयिष्यामि. ]

— ᵈ) Ñ1 न सहिष्यामि; T2 G (except G1) न मर्षयिष्ये.

31 ᵃ) T2 G2–4 पूर्णां; M उर्वी (for एकः). — ᵇ) G1 M °मि न संशयः. — ᶜ) Ś1 K (except K1) Ñ2 D2.5.6 अर्जुनेन (Ś1 Ñ1 °नस्य) पराभवः. — After 31, T2 G (except G1) ins.:

2063* तमहं भ्रातृभिः सार्धं निहन्मि कुलपांसनम् ।

— After 31, M1–3 (erroneously) read 1. 213. 4ᵃ–5ᵇ]

32 Before 32, T G ins. वैशं. — ᵃ) S रौहिणेयं गर्जमानं. — ᵇ) D2.5 °गंभीर°. — ᶜ) Ś1 K3 D5 अन्व°; M3 °वर्तत. — ᵈ) Ś1 K3 Ñ2 B3.5 Da Dn2 D2.6 G2.6 सद्य; T1 M ततः. T2 G2.5 °वृष्ण्यंधकेश्वराः.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B Da Dn1.n3 D1.3.4.5-T2 G2–4 M2.4 सुभद्राहरण; T1 संभव. — *Adhy. name:* Ś1 K1 वृष्ण्यंधककोपः (K1 °कमकोपः); K0.2.4 D1 बलदेवकोपः (K0 °क्रोधनः; K3 °कोपः); T2 G2–4 बलभद्रकोपः (G3 °कोपनं); M3 सभाक्षोभः. — *Adhy. no.* (figures, words or both): Dn2 210; Dm 233; D1 170; T1 229; T2 G1.4–6 M 183; G2 181; G3 184. — *Śloka no.:* Dn 32; M3 63. — *Aggregate śloka no.:* Dn 7950.

## 213

1 Ś1 K (except K0) D1 S om. उवाच. — ᵃ) Ś1 K0.2.4 सदा वाक्यं; K3.3 Ñ3 B1.6 Dn1.n2 D1 T2 G1.4 यथा वीर्यं; D1m 6 D1 M3 यदा वीर्यं; Dn2 यथा वा°; D1 तथा वा°. — ᵇ) G1 M2.3 सर्वयादवाः. — ᵈ) K1 Ñ1.2 B D (except D1) °संयुतं. Ñ1 वाचो धर्मार्थसंहिता. — After 1, S ins.:

2064* मयोक्तं न श्रुतं पूर्वं सहितैः सर्वयादवैः ।
अतिक्रान्तमविक्रान्तं न निवर्तेति कर्हिचित् ।
शृणुध्वं सहिताः सर्वे मम वाक्यं सहेतुकम् ।

2 ᵃ) K (except K0.1) Dn1 D1 सम्मानो. — ᵇ) Dn2 D2.3.4.5 T G2.6 M1–3 °पमसंशयः; Ñ D1.6 Dn1.n2 °यं न संशयः; G1 धर्मसंश्रयः.

3 ᵃ) G2.3 अपि धर्मान्. K0.2.4 न भः; K3 मम Ñ1 स्म वः; D1 अयं; T2 G (except G1) च वः (for न वः).

4 G1 (hapl.) om. 4–5. M1–3 read 4ᵃ–5ᵇ after 1. 212. 31; — ᵃ) T1 एव; G1 M इव (for अपि). — ᵇ) K2.3 Ñ1.3 V1 B D G1 °मन्यते; T2 G2–4 M1–4 °मंस्यति. Ñ1 पशुवच्च तु मन्यते. — ᵉ) G2.6 तथापि ...

विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ४
एतान्दोषांश्च कौन्तेयो दृष्टवानिति मे मतिः ।
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ ५
उचितश्चैव संबन्धः सुभद्रा च यशस्विनी ।
एष चापीदृशः पार्थः प्रसह्य हृतवानिति ॥ ६
भरतस्यान्वये जातं शंतनोश्च महात्मनः ।
कुन्तिभोजात्मजापुत्रं को बुभूषेत नार्जुनम् ॥ ७
[न च] पश्यामि यः पार्थं विक्रमेण पराजयेत् ।
[अ]पि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ८
[स] च नाम रथस्तादृङ्मदीयास्ते च वाजिनः ।
[य]ोद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ॥९
[त]मनुद्रुत्य सान्त्वेन परमेण धनंजयम् ।
निवर्तयध्वं संहृष्टा ममैषा परमा मतिः ॥ १०
यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरम् ।
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ॥ ११
तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप ।
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवांस्ततः ॥ १२
उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः ।
पुष्करेषु ततः शिष्टं कालं वर्तितवान्प्रभुः ।
पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमाविशत् ॥ १३
अभिगम्य स राजानं विनयेन समाहितः ।
अभ्यर्च्य ब्राह्मणान्पार्थो द्रौपदीमभिजग्मिवान् ॥१४
तं द्रौपदी प्रत्युवाच प्रणयात्कुरुनन्दनम् ।
तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा ।     C. 1. 7978 B. 1. 221. 17

5 G1 om. 5 (cf. v. l. 4). — ᵃ) Ñ1 Da हृतवान्; D5 हरणं; T2 G3.4 बलवान्.

6 Ś1 K1 om. 6. — ᵃ) T2 G (except G1) अपि (for एव). — ᵇ) Ñ3 B6 D5 सुभद्रां and °स्विनीं. M6.8 om. and M7 has lacuna for च यशस्विनी. — ᶜ) K0 B1 D1 एष वा; K4 एषा वा. T2 G (except G1) M5 एतस्याः (M6 एषोऽपि) सदृशः पार्थः. — ᵈ) K0.4 B5 T1 हृतः; T2 G M अतः (for इति).

7 ᵃ) K2 B5 T G2-4 जातः. — ᵇ) Ñ V1 B Da Dn शांतनोश्च. Ñ3 Dn D4 यशस्विनः. T1 G1 M शंतनोः पौत्रमद्य वै; T2 G2-4 शत्रुघात(G2.3 °स)मकुत्सया; G5.6 शत्रुघातममद्य वै. — ᵈ) K2 T2 G (except G1) M5 क्व (for को). T1 बुभूषेच. Ś1 K1 को नु दूषितवानमुं. G1 corrupt.

8 ᵃ) K4 G1 तं (for न). T1 M (except M5) तं (for यः). — ᵇ) K2.3 Ñ2.3 B D (except D1.2.5) M5 विजयेत रणे बलात्; M6-8 °ण तु यो जयेत्. — After 8ᵃᵇ, Ñ1 2 B3 Dn D5 ins.:

2065* वर्जयित्वा विरूपाक्षं भगनेत्रहरं हरम् ।

— ᶜ) K1.3 लोके सर्वे (by transp.). — ᵈ) Ś1 K1 सेंद्ररुद्रवसुष्वपि; K4 सेंद्रैरपि च मा°; Ñ2 सेंद्ररूपेण मानवः; D1.2 सेंद्रैरपि सुरासुरैः; T2 G (except G1) सदेवमनुजेषु च (G5.6 °जेष्वपि).

9 ᵃ) M6-8 स च मानी. T2 G2-4 रथस्तावत्. — After 9ᵃᵇ, D4 (marg. sec. m.) S ins.:

2066* मम शास्त्राण्यशेषेण तूणी चाक्षयसायकौ ।

— ᵈ) T2 G (except G1) स (for च). — ᵈ) Ś1 K (except K1) D2.5 T1 कोऽर्जुनेन (D5 °नस्य); G2 कोऽन्यस्तेन.

10 ᵃ) B1 G5 तद् (for तम्). K2.3 Ñ2.3 B D T2 G4 अभिद्रुत्य (B5 अतिक्रम्य). — ᵇ) K3 Ñ2.3 V1 P Dn1.n2 D4 नि(Ñ2.3 Dn1.n2 न्य)वर्तयत. [illegible] हृष्टाः सर्वे निवर्तध्वं. — ᵈ) G1-3.4 (before corr.) °मा गतिः.

11 ᵃ) Ś1 K1 मः पार्थो. — ᵇ) K0.3.4 D5 पुरीं गच्छेद्; G1 पुराद्व°. D6 T2 G2-4 स्वयं पुरं. — ᶜ) T1 नः; G2 नो (for वो). K4 यशः सर्वे. — ᵈ) K2 वः; D1 च (for तु). — After 11, S ins.:

2067* पितृष्वसायाः पुत्रो मे संबन्धं नार्हति द्विपान् ।

12 Before 12, K2.3 T2 G (except G1) ins. वैशं°; D6 वैशं° उ°. — ᵇ) [illegible] तथा कर्तुं. Ś1 K1.4 Ñ1 V1 D2.5 G1 M5 6 नराधिप (D2.5 °पाः); K0 B6 Da M5 जनाधिपाः. — After 12ᵃᵇ, K4 (marg. sec. m.) D4 (suppl. fol. sec. m.) S (which latter om. 12ᶜ-16ᵈ) ins. a passage given in App. I (No. 115). — ᵈ) K2 Ñ2.3 V1 B D (except D1.2.5) कृतवान्प्रभुः.

13 S om. 13 (cf. v. l. 12). — ᵃ) Ś1 K1 उषितस्तत्र. — After 13ᵃᵇ, N (except Ś1 K1) ins.:

2068* विहृत्य च यथाकामं पूजितो वृष्णिनन्दनैः ।

— ᶜ) K2 Ñ2.3 B6 Dn पुष्करे तु. K3 Ñ2 B D ततः शेषं. — ᵉ) Ś1 पूर्णे द्वादशवर्षे तु. — ᶠ) K2 Ñ1.2 V1 B D (except D1.2.5) °प्रस्थमागतः.

17 सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते ॥ १५
तथा बहुविधं कृष्णां विलपन्तीं धनंजयः ।
सान्त्वयामास भूयश्च क्षमयामास चासकृत् ॥ १६
सुभद्रां त्वरमाणश्च रक्तकौशेयवाससम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः ॥ १७
साधिकं तेन रूपेण शोभमाना यशस्विनी ।
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना ।

ववन्दे पृथुताम्राक्षी पृथां भद्रा यशस्विनी ॥ १८
ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ।
ववन्दे द्रौपदीं भद्रा प्रेष्याहमिति चाब्रवीत् ॥ १९
प्रत्युत्थाय च तां कृष्णा स्वसारं माधवस्य ताम् ।
सस्वजे चावदत्प्रीता निःसपत्नोऽस्तु ते पतिः ।
तथैव मुदिता भद्रा तामुवाचैवमस्त्विति ॥ २०
ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।

---

14 Ś1 S om. 14 (cf. v. l. 12). — a) Ñ3 B6 Dn D4 च (for स). — b) Ñ3 B6 Dn1.n3 D4 नियमेन. B6 समन्वितः. — d) K1 N1 उपजज्ञिवान्.

15 S om. 15 (cf. v. l. 12). — a) Ś1 K1 D5.6 विनयात्. Ś1 पांडुनंदनं. — Ś1 K1 om. 15cd. — c) Ñ1 स्वबंधस्यापि. N1.3 V1 भावस्य. — f) K4 Ñ1 Dn3 D5.6 पूर्वो बंधः.

16 S om. 16 (cf. v. l. 12). — d) Ś1 K3 क्षामयामास; V1 कामया°; D1.3 शमया°.

17 a) T2 G3–6 त्वरमाणां. D4 S तु (for च). D1.2 सुभद्रां चानयामास. — b) Ś1 K1–3 Ñ1 पीत-; D3 क्षौम- (for रक्त-). K0.3 D2 M3 (inf. lin. as in text). 4–6 वाससीं; K3.4 Ñ V1 B Da Dn D3 T2 G3–6 -वासिनीं° (for -वाससम्). — c) Ñ3 कृत- (for कृत्वा). K2 D4 T2 G गो(G1 गौ)पालिकं वपुः.

18 b) D4 T G4 वनी कृष्णसहोदरा. — After 18ab, S ins.:

2069* गोपालिकामध्यगता प्रययौ प्रजिनं पुरम् ।
तत: पुरवरश्रेष्ठमिन्द्रप्रस्थं यशस्विनी ।
त्वरिता खाण्डवप्रस्थमाससाद विवेश च ।

G1 om. 18cd. — c) D4 T1 सा गृहद्वार°; T2 G3–6 सा पुरश्रेष्ठ°; G3.6 M6–8 सा गृहश्रेष्ठ°. — d) Ñ3 नवांगना; D4 S (G1 om.) यशस्विनी. — e) Ñ1 पृथिवी साक्षात् (for पृथु°). — f) D4 T G4 पांडवमातरं; G1–3.5.6 M भद्रा पितृष्वसां. — After 18, K4 Ñ2.3 V1 B D (except D1) ins.:

2070* तां कुन्ती चारुसर्वाङ्गीमुपाजिघ्रत मूर्धनि ।
प्रीत्या परमया युक्ता आशीर्भिर्युञ्जतातुलाम् ।
[ (L. 2) K4 °र्युंजती सदा; Ñ3 V1 आशिषोयुंक्त चातुला. ]

19 b) K2 D4 T1 G (except G1.4) °सानना.

20 a) K2 N2.3 B Da Dn D5 सदा; K2 ततः; D4 G3–6 M तु तां (for च तां). D4 T2 G3–6 M देवी (G3 M1.2.3 °वी) (for कृष्णा). T1 गृहीत्वोत्थाप्य तां हस्ते; G1 प्रत्युपस्थाय तां देवी. — b) Ś1 Ñ1 D1.4 [illegible] K0.1.4 Ñ3 V1 Dn D6 च (for ताम्). D4 [illegible] कृष्णा कृष्णसहोदरीं (T1 G3.6 M °रीं). — c) V1 आलिंग्य. D1 चाब्रवीत्; D4 सावदत्; T2 G (except G1) चाभवत्. Ñ3 B Da Ds D5.6 परिष्वज्यावदत् (Da °ज्याब्रवीत्); D3 परिष्वज्य तदा; M2.3 सस्वजानावदत्. K2 Ñ2.3 V1 B Da Dn D4.5 M प्रीत्या; D2 कृष्णा (for प्रीता). — After 20cd, T2 G (except G1) ins.:

2071* वीरसूर्भव भद्रे त्वं भव भर्तृप्रिया तथा ।

T2 G3–6 cont.: D4 (marg. sec. m.) T1 G1 M ins. after 20cd:

2072* ओजसा निर्मृता वह्नीत्वाच परमाशिषः ।
[ D4 T1 M निर्जिता; G1 निर्मिता (for निर्मृता). ]

— f) D4 S तथा (for एवम्). — After 20, D4 (suppl. fol. sec. m.) S ins. a passage given in App. (No. 116).

21 D4 orig. reads 21 as in text, suppl. fol. sec. m. as in S. — b) D4 (suppl. fol.) पोडवाश्च महा°. — For 21cd, D4 (suppl. fol.) S subst.:

2073* युधिष्ठिरमुखाः प्रीता बभूवुर्जनमेजय ।
कुन्ती च परमप्रीता कृष्णा च सततं तथा ।,

followed by a colophon (adhy. no.: D4 suppl. fol. 235; T1 230; T2 G3–6 M 185; G1 184; G2 183; G4 186). — D4 (suppl. fol. sec. m.) cont.:

वैशंपायनः ।
2074* अथ शुश्राव निर्वृत्ते वृष्णीनां परमोत्सवे ।
अर्जुनेन हृतां भद्रां शङ्खचक्रगदाधरः ।
पुरस्तादेव पौराणां संशयः समजायत ।
जानता वासुदेवेन चालितो भरतर्षभः ।
लोकस्य विदितं ह्यत्र पूर्वं विरचुना यथा ।
साम्यवित्याभ्यनुज्ञातो भद्रया सह संगतः ।
दित्सता सोदरां तस्मै पत्रप्रियरकेतुना ।
अर्हते पुरुषेन्द्राय पार्थायायतलोचनाम् ।

[illegible]न्ती च परमप्रीता बभूव जनमेजय ॥ २१
श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम् ।
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा ॥ २२
आजगाम विशुद्धात्मा सह रामेण केशवः ।
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ॥ २३
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ।
सैन्येन महता शौरिरभिगुप्तः परंतपः ॥ २४
तत्र दानपतिर्धीमानाजगाम महायशाः ।
अक्रूरो वृष्णिवीराणां सेनापतिररिंदमः ॥ २५
अनाधृष्टिर्महातेजा उद्धवश्च महायशाः ।
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महायशाः ॥ २६
सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः ।
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च ॥ २७
चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च ।
सारणश्च महाबाहुर्गदश्च विदुषां वरः ॥ २८
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ।
आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु ॥ २९
ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम् ।
प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ॥ ३०
ताभ्यां प्रतिगृहीतं तद्वृष्णिचक्रं समृद्धिमत् । C. 1. 7995 B. 1. 221. 2 K. 1. 247. [illegible]

सत्कृत्य पाण्डवश्रेष्ठं प्रेषयामास चार्जुनम् ।
भद्रया सह बीभत्सुः प्रापितो मजिणः पुरम् ।

22 D4 reads 22 orig. as in text; the readings of the suppl. fol. are shown below. — a) Ś1 K (except K2) Ñ1 Dn2 D1.2.4 ज्ञात्वा तु; D4 (suppl. fol.) ततस्तु; T1 ततः स. — b) K0.4 Ñ2.3 B2.3 Dn1.n3 D2.3 स्वं; K1 सु- (for स्व-). N1 V1 समासं पुरुषोत्तमं; D4 (suppl. fol.) संप्रतस्थे पुरोत्तमं; T1 संप्रतीयात्पुरो°. — c) D4 T1 पुरुषश्रेष्ठं. — d) G (except G1.4) तथा. — After 22, D4 (suppl. fol. sec. m.) S ins.:

2075* प्रियार्थं खाण्डवप्रस्थमागच्छत केशवः ।
पूर्वं सत्कृत्य राजानमाहुकं मधुसूदनः ।
राजा विपृथुरक्रूरः संकर्षणविदूरथौ ।
पित्रा च पुरुषेन्द्रेण पुरस्तादभिमानितः ।
संप्रीतः प्रीयमाणेन वृष्णिराज्ञा जनार्दनः । [5]
अभिमन्त्र्याभ्यनुज्ञातो योजयामास वाहिनीम् ।
ततस्तु यानान्यासाद्य दाशार्हपुरवासिनाम् ।
सिंहनादः प्रहृष्टानां क्षणेन समपद्यत ।
योजयन्तः सदश्वांश्च यानयुग्यं रथांस्तथा ।
राजांश्च परमप्रीताः समपद्यन्त वृष्णयः । [10]

[(L. 3) M (except M1) तथा (for राजा). D4 T1 संकर्षणभयेन ते; G3 M1 °गदोद्धवाः; M2.6–8 °भये सखौ. — (L. 4) D4 T1 G6 M पिता च (M6 पितेव). T2 G2–4 °दनुमोदितः; G5.6 °दनमानितः. — (L. 5) T2 G2–4 स प्रीतः. G1.5.6 वृष्णिराजा. — (L. 6) G1 ततस्तु यादवैः सार्धं.]

23 [illegible] om. 23ab. — b) K2 D5 रामेण सह (by transp.) — c) Ś1 K2.4 D1 G1 °सहामात्यैः; K0 D2.4.5 G2 °महामात्यैः; K3 °महाश्वैः. — d) K2 B6 D5 महावीरै(K2 °यैं)र्; T2 स हि वीरैर्; G2–4 सिंहवीरैर्.

24 b) Ñ3 B6 Dn D1.6 बहुभिर्वृतः; D2 सहशौरे वृ°.

25 a) G5.6 दानपरः. T1 G (except G5.6) M6 धीमान्. Ñ1 सर्वोदारमतिर्धीमान्. — b) T1 G1 M जगाम स (T1 G1 M7 सु-) महा°.

26 a) Ś1 K (except K0) D1 अनाधृष्टिर्; T1 °धृतिर्; T2 G3–4 °धृष्यो; G5.6 °वृष्णिर्. — K3 (hapl.) om. 26cd. — d) K2 Da2 महात्मनः; K4 Ñ B Da1 Dn D2.4 T1 G2 M महामनाः.

27 ab) T2 G (except G1) सात्यकिश्च महाबाहुः कृतवर्मा महारथः. — c) K4 B (except B5) Dn1.n2 D1 शांबश्च. — d) Ś1 K1 निषधः; T2 [illegible] (except G1) निः(G2.3 नि)शंकुः (cf. v. l. 1. 211. 10c).

28 K3 (hapl.) om. 28ab. — a) Ś1 K1 हल्ली; K0 B6 T G झल्ली; Ñ2 जल्लिर्; V1 भंवी; D1 पृथुर्; D4 शिनिर् (for झिल्ली). K4 च पृथुरे°. M6 पदसल्ली पृथुरे° (sic). — c) G2.5.6 महातेजाः.

29 b) D1 भोजवृष्ण्यंधकास्; D2 वृष्णयश्चांधकास्. K3 B6 D5 D2 तदा. — d) D2 भरणं प्रति; D4 द्रविणं बहु. Cd cites हरणं. — After 29, D4 (marg. sec. m.) [illegible] ins.:

2076* अभ्याहारं समादाय नृपा वृष्णिपुरोगमाः ।
प्रययुः सिंहनादेन सुभद्रामवलोककाः ।
ते त्वदीर्घेण कालेन कृष्णेन सह यादवाः ।
पुरमासाद्य पार्थानां परां प्रीतिमवाप्नुवन् ।

[(L. 1) D4 T2 G2–4 उपहारं. — (L. 2) T2 G2–4 अवलोकितुं. — (L. 3) T1 अदीर्घेणैव कालेन.]

30 ab) K0 D5 श्रुत्वा राजा (by transp.). — d) Ś1 K1 यानं (for यमौ). Ś1 K2–4 D5 D1 T1 [illegible] (except G2.4) M6–8 प्रस्थापयत्. T2 G (except G1) गृहार्थं.

31 a) K3 Ñ2.3 V1 B D T2 G [illegible] (G1 तं) (for तद्).

## 15

After विनता of 1. 24. 6, M1.2 (which om. उवाच) ins.:

मेखलाजिनदण्डेन ब्रह्मचारीति लक्षयेत् ।
शुक्लवस्त्रः शुचिर्दान्तो रुक्मकुण्डलमण्डितः ।
वैणवीं धारयन्यष्टिमुपवीतं कमण्डलुम् ।
एतैस्तु लक्षणैर्युक्तं गृहस्थमिति लक्षयेत् ।
नखरोमाचितं विप्रं चीराजिनजटाधरम् ।
वनवासरतं नित्यं वनवासीति लक्षयेत् ।
मुण्डी त्रिदण्डी काषायी कमण्डलुधरो यतिः ।
एतैस्तु लक्षणैः पुत्र विद्धि तान्ब्राह्मणानृजून् ।

## 16

K4 ins. after 1. 25. 2:

कथं च त्वमिहायातो निषादानां महालयम् ।
अस्पृश्यता याजिनां नित्यं सत्यं च वद मे द्विज ।;

after 3ab:

ब्राह्मण उवाच ।
मध्यदेशात्समायातो धनार्थी मेदिनीं भ्रमन् ।
ततो निषादान्संप्राप्तो रतिं चाप्यत्र लब्धवान् ।
गां हिरण्यं धनं धान्यं घटांश्च कटकांस्तथा ।
निषादा मे प्रयच्छन्ति सततं प्रियकारिणः ।
निषादी शोभना चात्र भार्या जाता खगोत्तम ।
तया सह वसन्नित्यं रतिमभ्यासमवाप्तवान् ।;

and after 3cd:

ततोऽहं निर्गमिष्यामि न निर्गच्छेयमन्यथा ।

## 17

After 1. 30. 22, K0.4 ins. a *phalaśruti*:

न चाग्निजं चोरनृपाश्रयं वा
क्षुद्रसर्पवेतालपिशाचजं वा ।
भयं भवेद्यत्र गृहे गरुत्मतो
विशिष्टकथेयं लिखितापि पुस्तके ॥
यः संस्मरेन्नित्यमतन्द्रितो नरो
गरुत्मतो मूर्तिमथार्चयेद्गृहे ।
ॐ पक्षिराजेति जपंश्च सर्वदा
तस्यास्तु सर्पा वशगा भवन्ति ॥

## 18

*After 1. 33. 1, K0.4 Da1 ins.:*

कश्च तेषां भवेन्मन्त्रः सर्पाणां सूतनन्दन ।
किं वा कार्यमकुर्वन्त शापजं भुजगोत्तमाः ।
वासुकिश्चापि नागेन्द्रो महाप्राज्ञः किमाचरत् ।

## 19

After 1. 33. 4, K0.4 Da1 ins.:

आराध्य तु जगन्नाथं ब्रह्माणं पन्नगोत्तमाः ।
मातृशापविमोक्षार्थं न शेषो लब्धवान्वरम् ।

## 20

*After* पितामह उ° *of 1. 35. 8, K2.4 ins.:*

मातृशापो मान्यथार्थं कर्तुं शक्यो मया श्रुतः ।
यस्मान्माता गुरुतरी सर्वेषामेव देहिनाम् ।

## 21

*After 1. 37. 20, K0.4 ins.:*

कामं क्रोधं तथा लोभं यस्तपस्वी न शत्रुवत् ।
विजेतुमकृतप्रज्ञः स याति नरकं ध्रुवम् ।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ।
यः प्रव्रज्यां गृहीत्वा तु न भवेद्विजितेन्द्रियः ।
सर्वहोतिसहस्राणि स याति नरकं ध्रुवम् ।

---

मथ्यमानं (for मस°). B1 Dn D5 T2 सहते वै; G1.2.4.5 सह लोपैर्. — (L. 19) Ñ1.3 V1 Dn D2-4.6.7 T1 °विनाशार्थं. G1.2.4.5 व्यवतिष्ठे. — After line 20, B3 (om. line 1).4 Dn D1-4 T1 ins.:

तस्माल्लोकविनाशाय संतापयत भास्करः ।
ततो देवानुपागम्य प्रोचुरेवं महर्षयः ।

— (L. 21) Ñ1 Dn D1-4.6 T1 अपार्धरात्र°; B1 Da D1 अपररात्र°; B3 अपूर्वो रात्र°; G1.2.4.5 अह° प्रारंभ°. — (L. 22) G1.2.4.5 उत्तरत्यति महाबाहुः. — After 23, B1 ins.:

क्रतुरुद्रिमनन्ताः सर्वलोकविनाशनम् ।;

while D1.6 ins.:

क्रतुविसयमाश्रिताः मन्त्राः सर्वतो भुवम् ।

— Ñ1.3 Da Dn D1.3 T1 G1.2.4.5 om. देवा क°. — (L. 24) Ñ1.3 Dn D1.3 T1 अनुवक्तिक्रोशात. G1.2.4.5 मधुरम् शिशिरं देव भव मानुषं मयम्. — (L. 25) V1 Dn D2-4 T1 दुर्धर्षं प्रतिभाति च. — (L. 28) V1 D1.2.4 दृश्यते. D1.4.5 दृश्यते च हि; G1.2 दृश्यते वहि. Ñ B Da Dn G1.2 °दृश्°. — (L. 30) Dn D1.3 T1 दीनान् (for दिन°). — (L. 33) Ñ3 Dn D1.3 T1 ताहि वेदं (for हन्ति°). G1.2.4.5 द्° (for प्रगति°). — (L. 34) Ñ3 G1.2.4.5 °ब्ध्वा. — (L. 35) Ñ V1 B (except B3) Da Dn D1-4.6.7 T1 द्ध्वा°; Ñ1.3 V1 Dn D1.3 T1 सम्यग्; G1.2.4.5 तत्र द्व°. — (L. 37–38) G1.2.4.5 तत्र वतर (for स्वेन°), and वदन् (for वद्). — Colophon om. in T1 G1.2.4.5.

### 22

After 1. 37. 27, $K_{0.4}$ ins.:

क्रोधात् शापमुत्सृजता तपोहानिरनुत्तमा ।
कृतात्मनस्त्वया तात विप्रेणेव प्रतिग्रहात् ।
अतोऽहं त्वां प्रब्रवीमि शापोऽस्य न भवेद्यथा ।
परिक्षितो महाभाग तथा कुरु यतव्रत ।

### 23

After 1. 38. 8, $K_{0.4}$ ins.:

तेऽत्र धन्याः शुभधियो ये धर्मे सततं रताः ।
नराः शुक्लकल्याणा आत्मनः प्रियकाङ्क्षिणः ।

After 11, $K_4$ ins.:

ततो गौरमुखं शिष्यं शीलवन्तं गुणान्वितम् ।
आहूय याहि राजानं वृत्तान्तमिदमुच्यताम् ।
[With line 1, cf. 1. 36. 14^cd.]

### 24

After 1. 39. 17, $K_{0.4}$ ins.:

तद्धनं तस्य वो राजा न ग्रहीष्यति किंचन ।
इमे नागा वहिष्यन्ति दत्तं हेम मया बहु ।

### 25

After 1. 39. 19^cd, $D_5$ ins.:

दशको मह्यं मे देहि धनं पन्नगसत्तम ।
न राजानं गमिष्यामि किं तेन नृपसूनुना ।
इत्युक्तस्तक्षकस्तेन विंशत्कोटीर्धनं ददौ ।
स जगाम ततो विप्रो धनं लब्ध्वा यथासुखम् ।

### 26

After 1. 41. 21^cd, $B_4$ ins.:

न तथा क्रतुपोदानैः प्राप्यते फलमुत्तमम् ।
यथा क्रुदारसंतानप्राप्तौ संप्राप्यतेऽमितम् ।
क्षालनस्तात जायते सर्व एव हि मानवाः ।
पितृदेवर्षिमनुजा भर्तव्या आर्यवर्णजैः ।
अयान्यथा वर्तमाना वार्याः स्युस्त्रिदिवौकसाम् ।
एवं तात सम्यग्जानीहि धर्मज्ञः सन्न वेत्सि किम् ।

### 27

After 1. 42. 3, $K_{0.4}$ $Da_1$ ins.:

धर्मार्थकामैस्तु सुखप्रहीणा
भिक्षाटनाः कर्पटबद्धगात्राः ।
क्षुत्क्षामकण्ठा वसुधां भ्रमन्ति
दारान्परित्यज्य गता नरा ये ॥
न ते क्रतुशतैर्लोकाः प्राप्यन्ते दिवि मानद ।
तपोभिर्विविधैर्वापि याँल्लोकान्पुत्रिणो गताः ।

### 28

After 1. 42. 20, $B_3$ ins.:

रुरुरुवाच ।
किमर्थं सा तु नागेन्द्रो द्विजेन्द्राय कृतात्मने ।
अविज्ञाताय वै दत्ता स्वसा राजीवलोचना ।
प्रमतिरुवाच ।

Then follows a *repetition* (with slight variation) of 1. 13. 35–36.

### 29

$D_5$ (marg. *sec. m.*) ins. after 1. 50. 1: $D_6$ $T_2$ $G_6$, after 1. 50. 5:

दिलीपराज्ञो नहुषस्य राज्ञो
नलस्य राज्ञः शशबिन्दोश्च राज्ञः ।

Then follows the refrain तथा यज्ञोऽयं etc.

### 30

After 1. 50. 6, $D_2$ ins.:

नहुषस्य यज्ञः सगरस्य यज्ञः
धुन्धोस्तथा रन्तिदेवस्य चैव ।

Then the refrain तथा यज्ञोऽयं etc.

### 31

After 1. 55. 3, $K_4$ ins.:

शौनक उवाच ।
जनमेजयेन राज्ञा वै किमर्थं सूतनन्दन ।
सर्पसत्रान्तरे पृष्टो व्यासशिष्यो महातपाः ।
पूर्वजानां कथां मां वै ततो वद महामते ।
सर्वज्ञः सर्वदर्शी च न ते ह्यविदितं क्वचित् ।
सूत उवाच ।
सर्पसत्रे च संपूर्णे ऋत्विजश्चागतश्रमाः ।
धूमसंभ्रान्तनेत्रास्तु दशाष्टौ सुषुपुस्तदा ।
तेषु सुप्तेषु सर्वेषु राजा पारिक्षितस्तदा ।
यज्ञान्ते ऋषिभिर्नैव निद्रा कार्या कथंचन ।
इति स्मृत्युक्तवचनं स्मृत्वा तानृषिसत्तमान् ।
अभिमन्त्रितेनोदकेन ऋषिभिश्चाभिचारकैः ।
प्रोक्षयामास तेषां वै निद्रान्तं तु चिकीर्षवान् ।
एतस्मिन्नन्तरे तत्र मूर्छामापुः सुदीर्घिकाम् ।
अचेतनांश्च मुनयस्तान्दृष्ट्वा दुःखितोऽभवत् ।
तदा सभासदो विप्राः प्रोचुश्च जनमेजयम् ।
धिग्धिक्ते चेष्टितं राजन्ब्राह्मणान्हतवानसि ।
ब्रह्महत्याष्टादश वै कृतास्त्वया नराधिप ।
चर तीर्थान्यनेकानि पश्चाच्छुद्धिमवाप्स्यसि ।

एतस्मिन्नन्तरे तत्र वागुवाचाशरीरिणी ।
दुःखितं चिन्तयाक्रान्तं राजानं जीवयन्निव ।
ब्रह्महत्याविमोक्षार्थं कृत्वा चीरं निलीयुतम् ।
अष्टादशारत्निकं च तद्वासः परिधाय च ।
पाण्डवानां कथा ह्यत्र अष्टादशकपर्वकम् ।
शृणु त्वं भारतं च ततः शुद्धिमवाप्स्यसि ।
इति तद्वचनं श्रुत्वा ऋषिभिश्चानुमोदितः ।
वासस्तदुक्तं वासित्वा व्यासं सत्यवतीसुतम् ।
प्रश्रयावनतो राजा पप्रच्छ पूर्वजां कथाम् ।
तामहं वर्णयिष्यामि शृणुध्वं भो मुनीश्वराः ।

Colophon.

### 32

For 1. 56. 29–32, $D_5$ subst.:

यस्तु राजा शृणोतीदमखिलामश्नुते महीम् ।
प्रसूते गर्भिणी पुत्रं कन्या चाशु प्रदीयते ।
वणिजः सिद्धयात्राः स्युर्वीरा विजयमाप्नुयुः ।
आस्तिकाञ्श्रावयेन्नित्यं ब्राह्मणाननसूयकान् ।
वेदविद्याव्रतस्नातान्क्षत्रियाश्रयमास्थितान् ।
स्वधर्मनिरतान्वैश्यांश्च श्रावयेत्क्षत्रसंश्रितान् ।
एष धर्मः पुरा दृष्टः सर्ववर्णेषु भारत ।
ब्राह्मणाच्छूद्रवर्णे राजन्विशेषेण विधीयते ।
भूयो भूयः पठेन्नित्यं गच्छेत्स परमां गतिम् ।
श्लोकं वाप्यनुगृह्णीत तथार्धं श्लोकमेव वा ।
अपि पादं पठेन्नित्यं न च निर्भारतो भवेत् ।
इह नैकाश्रयं जन्म राजर्षीणां महात्मनाम् ।
इह मन्त्रपदं युक्तं धर्मं चानेकदर्शनम् ।
इह युद्धानि चित्राणि राज्ञां वृद्धिरिहैव च ।
ऋषीणां च कथास्तात इह गन्धर्वरक्षसाम् ।
इह तत्तत्समासाद्य विहितो वाक्यविस्तरः ।
तीर्थानां नाम पुण्यानां दर्शनं चैव कीर्तितम् ।
वनानां पर्वतानां च नदीनां सागरस्य च ।
देशानां चैव दिव्यानां पुराणां चैव कीर्तनम् ।
उपचारस्तथैवाग्र्यो वीर्यमप्रतिमानुपम् ।
इह सत्कारयोगश्च भारते परमर्षिणा ।
रथाश्ववारणेन्द्राणां कल्पना युद्धकौशलम् ।
वाक्यजातिरनेका च सर्वमस्मिन्समर्पितम् ।
यथा समुद्रोऽतिमहान्यथा च हिमवान्गिरिः ।
ख्यातौ रत्नाकरौ तद्वन्महाभारतमुच्यते ।
नाभीतिरुपपद्येत यथा प्राप्य त्रिविष्टपम् ।
पुण्यं तथेदमाख्यानं श्रुत्वा प्रीतिर्भवत्युत ।
स्त्रियश्च शूद्राः शृणुयुः पुरस्कृत्य द्विजोत्तमान् ।
प्राप्नुवन्ति यथोक्तानि फलान्यविकलानि च ।
कुलस्य वृद्धये राजन्नायुषे विजयाय च ।
शृणु कीर्तयतः कृत्स्नमितिहासं पुरातनम् ।
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नपानं तत्पितॄंस्तस्योपतिष्ठति ।
य इदं श्रावयेद्विद्वान्यश्चेदं शृणुयान्नरः ।
स ब्रह्मणः स्थानमेत्य प्राप्नुयाद्देवतुल्यताम् ।
भारतं यदेनः कुरुते इन्द्रियैर्मांसलश्चरन् ।
महाभारतमाख्याय पश्चात्संध्यां प्रमुच्यते ।
रात्र्यां यदेनः कुरुते इन्द्रियैर्बांधणश्चरन् ।
महाभारतमाख्याय पूर्वां संध्यां प्रमुच्यते ।
भारतानां महज्जन्म महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनोऽब्रवीत् ।
नित्योत्थितः सदा योगी महाभारतमादितः ।

### 33

*After* 1. 56. 31, N ($Ś_1$ *missing; for* $K_{0-4}$ *see footnotes) ins.:*

भरतानां यतश्चायमितिहासो महाद्भुतः ।
महतो ह्येनसो मर्त्यान्मोचयेदनुकीर्तितः ।
त्रिभिर्वर्षैर्लब्धकामः कृष्णद्वैपायनो मुनिः ।
नित्योत्थितः शुचिः शक्तो महाभारतमादितः ।
तपो नियममास्थाय कृतमेतन्महर्षिणा ।
तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ।
कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथाम् ।
श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः ।
सर्वथा वर्तमाना वै न ते शोच्याः कृताकृतैः ।

32

$G_{1.3}$ read line 3 after line 6; M, after 11. — (L. 6) $D_5$ T $G_{1.3.4}$ शूद्राश्च द्विजसंश्रितान्. — (L. 9) $D_5$ $T_3$ $G_{4-6}$ भूयो वा यः. Some MSS. transp. गच्छेत् and स. Lines 12, 17–18, 22–23 occur (with v. l.) in passage No. 1 of this App. — (L. 13) $D_5$ $T_1$ इदं मंत्रं पठेत् श्रात्वा; $T_2$ $G_{1.3.5}$ इमं मंत्रमपि श्रात्वा; M इदं मंत्रं वरं वेदं ($M_3$ इमं मंत्रं परं श्रात्वा). — (L. 17) $G_{3-6}$ देशानां (for दर्शनं). $D_5$ $T_1$ $G_{2.6}$ कीर्तनं. — (L. 19) $G_{1.3.6}$ पुण्यानां (for दिव्यानां). — (L. 20) $D_5$ $G_{3-6}$ °मप्रतिमा°. — (L. 22) $T_2$ $G_{3-6}$ रथाश्वेभनरेंद्राणां; $G_2$ रथाश्वानां नरेंद्राणां. $T_1$ $G_1$ रथानां युद्ध°. — With lines 24–25, 31–32, 40–41, 42–43 cf. I. 56. 27, 29, 31–32. — $T_1$ $G_2$ M om. lines 28–29. — Lines 36–39 = (var.) 190*.

नरेण धर्मकामेन सर्वः श्रोतव्य इत्यपि ।
निखिलेनेतिहासोऽयं ततः सिद्धिमवाप्नुयात् ।
न तां स्वर्गगतिं प्राप्य तुष्टिं प्राप्नोति मानवः ।
यां श्रुत्वैव महापुण्यमितिहासमुपाश्नुते ।
शृण्वञ्श्राद्धः पुण्यशीलः श्रावयंश्चेदमद्भुतम् ।
नरः फलमवाप्नोति राजसूयाश्वमेधयोः ।
यथा समुद्रो भगवान्यथा मेरुर्महागिरिः ।
उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते ।
इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्रव्यं श्रुतिसुखं चैव पावनं शीलवर्धनम् ।
पारिक्षित कथां दिव्यां पुण्याय विजयाय च ।
कथ्यमानां मया कृत्स्नां शृणु हर्षकरीमिमाम् ।

34

After 1. 56. 33, $K_4$ ins.:

दातुं भोक्तुं तथा श्रोतुं प्रहर्तुमरिभिः सह ।
स किं जानाति पुरुषो भारतं येन न श्रुतम् ।
य इदं भारतं राजन्वाचकाय प्रयच्छति ।
तेन सर्वा मही दत्ता भवेत्सागरमेखला ।
पर्वाण्यष्टादशेमानि व्यासेन कथितानि वै ।
यद्येकमपि यो दद्यात्तेन सर्वं कृतं भवेत् ।

35

After 1. 57. 57, $D_{5.6}$ (suppl. fol, *sec. m.*) T G ins.:

संभवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः ।
क कर्णधारो नौर्येन नीयते ब्रूहि भामिनि ।

मत्स्यगन्धा ।

अनपत्यस्य दाशस्य सुता तत्प्रियकाम्यया ।
सहस्रजनसंपूर्णा नौर्मया वाह्यते द्विज ।

पराशरः ।

शोभनं वासवि शुभे किं चिरायसि वाह्यताम् ।
कलशं भविता भद्रे सहस्रार्धेन संमितम् ।
अहं दोषो भविष्यामि नीयतामचिरेण नौः ।

वैशंपायनः ।

मत्स्यगन्धा तथेत्युक्त्वा नावं वाहयती जले ।
वीक्षमाणं मुनिं दृष्ट्वा प्रोवाचेदं वचस्तदा ।

मत्स्यगन्धा ।

मत्स्यगन्धेति मामाहुर्दाशराजसुतां जनाः ।
जन्म शोकाभितप्तायाः कथं ज्ञास्यसि कथ्यताम् ।

पराशरः ।

दिव्यज्ञानेन दृष्टं हि दृष्टमात्रेण ते वपुः ।
अनपग्रहणार्थाय वक्ष्ये वासवि तच्छृणु ।
बर्हिषद इति ख्याताः पितरः सोमपास्तु ते ।
तेषां त्वं मानसी कन्या अच्छोदा नाम विश्रुता ।
अच्छोदं नाम तद्दिव्यं सरो यस्मात्समुत्थितम् ।
त्वया न दृष्टपूर्वास्तु पितरस्ते कदाचन ।
संभूता मनसा तेषां पितॄन्स्वान्नाभिजानती ।
सा त्वन्यं पितरं वव्रे स्वानतिक्रम्य तान्पितॄन् ।
नाम्ना वसुरिति ख्यातं मनुपुत्रं महीश्वरम् ।
अद्रिकाप्सरसा युक्तं विमाने दिवि विष्ठितम् ।
सा तेन व्यभिचारेण मनसा कामचारिणी ।
पितरं प्रार्थयित्वान्यं योगाद्भ्रष्टा पपात सा ।
अपश्यत्पतमाना सा विमानत्रयमन्तिकात् ।
त्रसरेणुप्रमाणांस्तांस्तत्रापश्यत्स्वकान्पितॄन् ।
सुसूक्ष्मानपरिव्यक्तानङ्गैरङ्गेष्विवाहितान् ।
त्रातेति तानुवाचार्ता पतन्ती सा ह्यधोमुखी ।
तैरुक्ता सा तु मा भैषीस्तेन सा संस्थिता दिवि ।
ततः प्रसादयामास स्वान्पितॄन्दीनया गिरा ।
तामूचुः पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् ।

---

33

$K_{0-4}$ have a variant version, differing from the above mainly as regards sequence, which in these MSS. is as follows: 1. 56. 31; lines 3–11 of the passage under reference; then 1. 56. 27, $25^{cd}$, $26^{ab}$ (both latter repetitions with v. l.); then 491*, and 1. 56. 28–30, 31 (repetition); and finally lines 1–2, 12–15, 18–21 of the passage under reference. The variant readings, being unimportant, may be ignored. — Ñ$_1$ om. lines 3–11; Ñ$_3$ $V_1$ B Da $D_{4.5}$ om. 3–4 (cf. 1. 56. 32). — With lines 16–18, cf. 1. 56. 27, $15^{ab}$. — Dn ins. after line 19: $D_{1.2.4}$, after 1. 56. 33: $K_4$, after line 2 of passage No. 34 below:

य इदं भारतं राजन्वाचकाय प्रयच्छति ।
तेन सर्वा मही दत्ता भवेत्सागरमेखला ।

35

*N. B.* The passage occurs in $T_1$ also, which was ignored, through oversight, in the footnotes. — After line 16, $G_{1.2.4.5}$ repeat (with v. l.) 1. 57. 21. — (L. 42) $D_4$ $G_{1.2.4.5}$ महाराज्याभिषिक्तस्य (for the prior half). — (L. 43) $D_4$ $G_{4.5}$ चित्रवीर्यं यवीयसं. — (L. 53) $T_2$ $G_{4-6}$ विस्मयादृष्ट°.

भ्रष्टैश्वर्या स्वदोषेण पतसि त्वं शुचिस्मिते ।
यैरारभन्ते कर्माणि शरीरैरिह देवताः ।
तैरेव तत्कर्मफलं प्राप्नुवन्ति स्म देवताः ।
मनुष्यास्त्वन्यदेहेन शुभाशुभमिति स्थितिः ।
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ।
तस्मात्त्वं पतसे पुत्रि प्रेत्य त्वं प्राप्स्यसे फलम् ।
पितृहीना [redacted] कन्या त्वं वसोर्हि त्वं समागता ।
मत्स्ययोनौ समुत्पन्ना सुता राज्ञो भविष्यसि ।
अद्रिका मत्स्यरूपाभूद्गङ्गायमुनसंगमे ।
पराशरस्य दायादं त्वं पुत्रं जनयिष्यसि ।
यो वेदमेकं ब्रह्मर्षिश्चतुर्धा विभजिष्यति ।
महाभिषक्सुतस्यैव शंतनोः कीर्तिवर्धनम् ।
ज्येष्ठं चित्राङ्गदं वीरं चित्रवीर्यं च विश्रुतम् ।
एतानुत्पाद्य पुत्रांस्त्वं पुनरेवागमिष्यसि ।
व्यतिक्रमात्पितॄणां च प्राप्स्यसे जन्म कुत्सितम् ।
अस्यैव राज्ञस्त्वं कन्या ह्यद्रिकायां भविष्यसि ।
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।
एवमुक्ता पुरा पैस्त्वं जाता सत्यवती शुभा ।
अद्रिकेत्यभिविख्याता ब्रह्मशापाद्वराप्सराः ।
मीनभावमनुप्राप्ता त्वां जनित्वा गता दिवम् ।
तस्यां जातासि सा कन्या राज्ञो वीर्येण चैव हि ।
तस्माद्वासवि भद्रं ते याचे वंशकरं सुतम् ।

वैशंपायनः ।

विस्मयाविष्टसर्वाङ्गी जातिस्मरणतां गता ।

36

After 1. 57. 68[ab], D3 T3 G (except G6) ins :

ततो रम्ये वनोद्देशे दिव्यास्तरणसंवृतम् ।
वीरासनमुपास्थाय योगी ध्यानपरोऽभवत् ।
श्वेतपट्टगृहे रम्ये पर्यङ्के सोत्तरच्छदे ।
तूष्णींभूता तदा कन्या ज्वलन्ती योगतेजसा ।
दृष्ट्वा तां तु समाधाय विचार्य च पुनः पुनः ।
स चिन्तयामास मुनिः किं कृतं सुकृतं भवेत् ।
शिष्टानां [redacted] समाचारः शिष्टाचार इति स्मृतः ।
श्रुतिस्मृतिविदो विप्रा धर्मज्ञा ज्ञानिनः स्मृताः ।
धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विधा द्विजे ।
दानाग्निहोत्रमिज्या च श्रौतस्यैतद्धि लक्षणम् ।
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।
धर्मे तु धारणे धातुर्महत्त्वे चापि पठ्यते ।
तत्रेष्टफलभाग्धर्म आचार्यैरुपदिश्यते ।
अनिष्टफलभाक्चेति तैरधर्मो भविष्यति ।
तस्मादिष्टफलार्थाय धर्ममेव समाचरेत् ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यश्च धार्मिकः ।
विवाहा ब्राह्मणानां तु गान्धर्वो नैव धार्मिकः ।
त्रिवर्णेतरजातीनां गान्धर्वासुरराक्षसाः ।
पैशाचो नैव कर्तव्यः पिशाचश्चाष्टमोऽधमः ।
सामर्षां व्यङ्गितां कन्यां मातुः स्वकुलजां तथा ।
वृद्धां प्रव्राजितां वन्ध्यां पतितां च रजस्वलाम् ।
अपस्मारकुले जातां पिङ्गलां कुष्ठिनीं व्रणीम् ।
न चाज्ञातां स्त्रियं गच्छेदिति धर्मानुशासनम् ।
पिता पितामहो भ्राता माता मातुल एव च ।
उपाध्यायार्त्विजश्चैव कन्यादाने प्रभूत्तमाः ।
एतैर्दत्तां निषेवेत नादत्तामाददीत च ।
इत्येव ऋषयः प्राहुर्विवाहे धर्मवित्तमाः ।
अस्या नास्ति पिता भ्राता माता मातुल एव च ।
गान्धर्वेण विवाहेन न स्पृशामि यदृच्छया ।
क्रियाहीनं तु गान्धर्वं न कर्तव्यमनापदि ।
यत्रास्यां जायते पुत्रो वेदव्यासो भवेदृषिः ।
क्रियाहीनः कथं विप्रो भवेदपि विदांवरः ।
एवं चिन्तयतो भावं महर्षेर्भावितात्मनः ।
ज्ञात्वा चैवाभ्यवर्तन्त पितरो बर्हिषत्तदा ।
तस्मिन्क्षणे ब्रह्मपुत्रो वसिष्ठोऽपि समेयिवान् ।
एवं स्वागतमित्युक्त्वा वसिष्ठः प्रत्यभाषत ।

पितृगणाः ।

अस्माकं मानसीं कन्यामच्छोदामिति विश्रुताम् ।
यदि चेच्छसि पुत्रार्थं कन्यां गृह्णीष्व भाषितम् ।

वैशंपायनः ।

पितॄणां वचनं श्रुत्वा वसिष्ठः प्राह[illegible] ह ।
महर्षीणां च सत्यं पुराणेऽपि मया श्रुतम् ।
पराशरो ब्रह्मचारी अभार्यो मम वत्सर ।
एवं संभाषमाणे तु वसिष्ठे पितृभिः सह ।
[illegible]ऽभ्यागमंस्तत्र नैमिषारण्यवासिनः ।
विवाहं द्रष्टुमिच्छन्त शक्तिपुत्रस्य धीमतः ।
अरुन्धती महाभागा अभ्यगच्छत् [illegible] ।

36

(L. 2) T3 G1.2.4.5 [illegible] (for योगी) — (L. 6) G1 °[illegible] [illegible] — (L. 8) G1 °[illegible] [illegible]. — (L. 20) G1.4.5 [illegible] (for [illegible]) — (L. 21) [illegible]). — (L. 36) MSS [illegible] (for °[illegible]°) — (L. 61) G3 [redacted] [illegible]; G6 [illegible]; G4.5 [illegible] (for [illegible]). — (L. 63) G1.2.4.5 [illegible]. — (L. 73) G1 [illegible] — (L. 79) G1.4.5 [illegible] G6 [illegible] (for [illegible]). — MSS. wrongly ins [illegible] after line 88 instead of inserting it before the line (as in text).

विश्वकर्मकृतां दिव्यां पर्णशालां प्रविश्य सा ।
वैवाहिकांस्तु संभारान्संकल्प्य च यथाक्रमम् ।
अरुन्धती सत्यवतीं वधूं संगृह्य पाणिना ।
भद्रासने प्रतिष्ठाप्य इन्द्राणीं समकारयत् ।
आपूर्यमाणपक्षे तु वैशाख्यां सोमदैवते ।
शुभग्रहे त्रयोदश्यां मुहूर्ते मैत्र आगते ।
विवाहकाल इत्युक्त्वा वसिष्ठो मुनिभिः सह ।
यमुनाद्वीपमासाद्य शिष्यैश्च मुनिपत्निभिः ।
स्थण्डिलं चतुरश्रं च गोमयेनोपलिप्य च ।
अक्षतैः फलपुष्पैश्च स्वस्तिकैरार्द्रपल्लवैः ।
जलपूर्णघटैश्चैव सर्वतः परिशोभितम् ।
तस्य मध्ये प्रतिष्ठाप्य वृसीं मुनिवरं तदा ।
सिद्धार्थयवकल्कैश्च स्नातं सर्वौषधैरपि ।
कृत्वार्जुनानि वस्त्राणि परिधाप्य महामुनिम् ।
वाचयित्वा तु पुण्याहमक्षतैस्तु समर्चितः ।
गन्धानुलिप्तः स्रग्वी च सप्रतोदो वधूगृहे ।
अपदातिस्ततो गत्वा वधूज्ञातिभिरर्चितः ।
क्षौमाम्बरसंवीतां गन्धलिप्तां स्वगुणवल्लाम् ।
वधूं मङ्गलसंयुक्तामिषुहस्तां समीक्ष्य च ।
उवाच वचनं काले कालज्ञः सर्वधर्मवित् ।
प्रतिग्रहो दातृवशः श्रुतमेवं मया पुरा ।
यथा वक्ष्यन्ति पितरस्तत्करिष्यामहे वयम् ।
वैशंपायनः ।
तद्धर्मिष्ठं यशस्यं च वचनं सत्यवादिनः ।
श्रुत्वा तु पितरः सर्वे निःसङ्गा निष्परिग्रहाः ।
वसुं परमधर्मिष्ठमाहूयेदं वचोऽब्रुवन् ।
मत्स्ययोनौ समुत्पन्ना तव पुत्री विशेषतः ।
पराशराय मुनये दातुमर्हसि धर्मतः ।
वसुः ।
सत्यं मम सुता सा हि दाशराजेन धीमता ।
अहं प्रभुः प्रदाने तु प्रजापालः प्रजार्थिनाम् ।
पितरः ।
निराशिषो वयं सर्वे निःसङ्गा निष्परिग्रहाः ।
कन्यादानेन संबन्धो दक्षिणाबन्ध उच्यते ।
कर्मभूमिस्तु मानुष्यं भोगभूमिस्त्रिविष्टपम् ।
इह पुण्यकृतो यान्ति स्वर्गलोकं न संशयः ।
इह लोके दुष्कृतिनो नरकं यान्ति निर्घृणाः ।
दक्षिणाबन्ध इत्युक्ते उभे सुकृतदुष्कृते ।
दक्षिणाबन्धसंयुक्ता योगिनः प्रपतन्ति ते ।
तस्मान्नो मानसीं कन्यां योगारूढां विशां पते ।
सुतात्वं तव संप्राप्तां सतीं भिक्षां ददस्व वै ।
वैशंपायनः ।
इत्युक्त्वा पितरः सर्वे क्षणादन्तर्हितास्तदा ।
याज्ञवल्क्यं समाहूय विवाहाचार्यमित्युत ।
वसुं चापि समाहूय वसिष्ठो मुनिभिः सह ।
विवाहं कारयामास श्रुतिदृष्टेन कर्मणा ।
वसुः ।
पराशर महाप्राज्ञ तव दास्याम्यहं सुताम् ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।
वैशंपायनः ।
वसोस्तु वचनं श्रुत्वा याज्ञवल्क्यमते स्थितः ।
कृतकौतुकमङ्गल्यः पाणिना पाणिमस्पृशत् ।
प्रभूताज्येन हविषा हुत्वा मन्त्रैर्हुताशनम् ।
त्रिरग्निं तु परिक्रम्य समभ्यर्च्य हुताशनम् ।
महर्षीन्याज्ञवल्क्यादीन्दक्षिणाभिः प्रतर्प्य च ।
कन्यानुज्ञोऽभिवाद्याशु प्रदक्षिणमथाकरोत् ।
पराशरे कृतोद्वाहे देवाः सर्षिगणास्तदा ।
हृष्टा जग्मुः क्षणादेव वेदव्यासो भवत्विति ।

## 37

After 1. 57. 69, D₆ T (T₁ contains only line 1) ins.:

जातमात्रः स ववृधे सप्तवर्षोऽभवत्तदा ।
ज्ञात्वाभिवाद्य पितरं तस्थौ व्यासः समाहितः ।
स्वस्तीति वचनं चोक्त्वा ददौ कलशमुत्तमम् ।
गृहीत्वा कलशं पार्श्वे तस्थौ व्यासः समाहितः ।
ततो दाशभयात्पत्नी ज्ञात्वा कन्या बभूव सा ।
अभिवाद्य मुनेः पादौ पुत्रं जग्राह पाणिना ।
स्पृष्टमात्रे तु निर्भर्त्स्य मातरं वाक्यमब्रवीत् ।
मम पित्रा तु संस्पर्शान्मातस्त्वमभवः शुचिः ।
अद्य दाशसुता कन्या न स्पृशेर्मामनिन्दिते ।
वैशंपायनः ।
व्यासस्य वचनं श्रुत्वा बाष्पपूर्णमुखी तदा ।
मनुष्यभावात्सा योषित्पतिता मुनिपादयोः ।
महाप्रसादो भगवान्पुत्रं प्रोवाच धर्मवित् ।
मा त्वमेवंविधं कार्षीर्नैतद्धर्म्यं मतं हि नः ।
न दूष्यौ मातापितरौ तथा पूर्वोपकारिणौ ।
धारणाद्दुःखसहनात्तयोर्माता गरीयसी ।
बीजक्षेत्रसमायोगे सस्यं जायेत लौकिकम् ।
जायते च सुतस्तद्वत्पुरुषस्त्रीसमागमे ।
मृगीणां पक्षिणां चैव अप्सराणां तथैव च ।
शूद्रयोन्यां च जायन्ते मुनयो वेदपारगाः ।
ऋष्यशृङ्गो मृगीपुत्रः कण्वो बर्हिसुतस्तथा ।
अगस्त्यश्च वसिष्ठश्च उर्वश्यां जनितावुभौ ।
सोमश्रवास्तु सर्प्यां तु अश्विनावश्विसंभवौ ।
स्कन्दः स्कन्नेन शुक्रेन जातः शरवणे पुरा ।
एवमेव च देवानामृषीणां चैव संभवः ।
लोकवादप्रवृत्तिर्हि न मीमांसा बुधैः सदा ।

वेदव्यास इति प्रोक्तः पुराणे च स्वयंभुवा ।
धर्मनेता महर्षीणां मनुष्याणां त्वमेव च ।
तस्मात्पुत्र न दूष्येत वासवी योगचारिणी ।
मत्प्रीत्यर्थं महाप्राज्ञ सस्नेहं वक्तुमर्हसि ।
प्रजाहितार्थं संभूतो विष्णोर्भागो महानृषिः ।
तस्मात्स्वमातरं स्नेहात्प्रब्रवीहि तपोधन ।

वैशंपायनः ।

गुरोर्वचनमाज्ञाय व्यासः प्रीतोऽभवत्तदा ।
चिन्तयित्वा लोकवृत्तं मातुरङ्कमथाविशत् ।
पुत्रस्पर्शात्तु लोकेषु नान्यत्सुखमतीव हि ।
व्यासं कमलपत्राक्षं परिष्वज्याश्रुवर्तयत् ।
स्तन्यासारैः क्लिद्यमाना पुत्रमाघ्राय मूर्धनि ।

वासवी ।

पुत्रलाभात्परं लोके नास्तीह प्रसवार्थिनाम् ।
दुर्लभं चेति मन्येऽहं मया प्राप्तं महत्तपः ।
महता तपसा तात महायोगबलेन च ।
मया त्वं हि महाप्राज्ञ लब्धोऽमृतमिवामरैः ।
तस्मात्त्वं मातृषेः पुत्र त्यक्तुं नार्हसि सांप्रतम् ।

वैशंपायनः ।

एवमुक्तस्ततः स्नेहाद्व्यासो मातरमब्रवीत् ।
त्वया स्पृष्टः परिष्वक्तो मूर्ध्नि चाघ्रापितो मुहुः ।
एतावन्मात्रया प्रीता भविष्येथा नृपात्मजे ।

*38*

After 1. 57. 70, $D_5$ $T_2$ G ins.:

ततः कन्यामनुज्ञाप्य पुनः कन्या भविष्यति ।
पराशरोऽपि भगवान्पुत्रेण सहितो ययौ ।
गत्वाश्रमपदं पुण्यमदृश्यन्त्याः पराशरः ।
जातकर्मादिसंस्कारं कारयामास धर्मतः ।
कृतोपनयनो व्यासो याज्ञवल्क्येन भारत ।
वेदानधिजगे साङ्गानोंकारेण त्रिमात्रया ।
गुरवे दक्षिणां दत्त्वा तपः कर्तुं प्रचक्रमे ।

39

After 1. 57. 75, $D_5$ $T_2$ G ins.:

ततः सत्यवती हृष्टा जगाम स्वं निवेशनम् ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ।
दाशराजस्तु तद्गन्धमाजिघ्रन्प्रीतिमावहन् ।

दाशराजः ।

त्वामाहुर्मत्स्यगन्धेति कथं बाले सुगन्धता ।
अपास्य मत्स्यगन्धत्वं केन दत्ता सुगन्धता ।

सत्यवती ।

शक्तेः पुत्रो महाप्राज्ञः पराशर इति श्रुतः ।
नावं वाहयमानाया मम दृष्ट्वा सुगर्हितम् ।
अपास्य मत्स्यगन्धत्वं योजनाद्गन्धतां ददौ ।
ऋषेः प्रसादं दृष्ट्वा तु जनाः प्रीतिमुपागमन् ।
एवं लब्धो मया गन्धो न रोषं कर्तुमर्हसि ।

वैशंपायनः ।

दाशराजस्तु तद्वाक्यं प्रशशंस ननन्द च ।
एतत्पवित्रं पुण्यं च व्याससंभवमुत्तमम् ।
इतिहासमिमं श्रुत्वा प्रज्ञावन्तो भवन्ति च ।

*Here follows a colophon in all the above mentioned MSS. except* $G_{4.6}$.

*40*

After 1. 58. $8^{ab}$, $K_{0.4}$ ins.:

प्रनष्टमुद्धृतं राजन्यया प्रोक्तं स्वयंभुवा ।
सर्वेषामेव वर्णानां प्रनष्टानां महीपते ।
ब्राह्मणा एव कुर्वन्ति नित्यमेव युगे युगे ।

41

After 1. 61. 83, $K_{3.4}$ $Ñ_{1.3}$ $V_1$ *B D* (*except* $D_5$) ins.:

वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ।

जनमेजय उवाच ।

ज्येष्ठानुज्येष्ठतां चैव नामधेयानि वा विभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ।

वैशंपायन उवाच ।

दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव दुर्मुखश्च तथापरः ।
विविंशतिर्विकर्णश्च जलसंधः सुलोचनः ।
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ।
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ।
दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ।
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विरोचनः ।
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ ।
भीमवेगो भीमबलो बलाकी बलवर्धनः ।
उग्रायुधो भीमरथः कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ।
जरासंधो दृढसंधः सत्यसंधः सहस्रवाक् ।
उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः ।
अपराजितः पण्डितको विशालाक्षो दुराधरः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ।

आदित्यकेतुर्बह्वाशी नागदन्तोऽग्रयायिनौ ।
कवची निषङ्गी पाशी दण्डधारो धनुर्ग्रहः ।
उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथश्च यः ।
अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः ।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकध्वजः ।
कुण्डाशी विरजाश्चैव दुःशला च शताधिका ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ।
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता ।
नामधेयानुपूर्व्यां च ज्येष्ठानुज्येष्ठतां विदुः ।
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ।
सर्वे वेदविदश्चैव राजशास्त्रे च पारगाः ।
सर्वे संसर्गविद्यासु विद्याभिजनशोभिनः ।
सर्वेषामनुरूपाश्च कृता दारा महीपते ।
दुःशलां चैव समये सिन्धुराजाय कौरवः ।
जयद्रथाय प्रददौ सौबलानुमते तदा ।

☞ This passage is an anticipation of adhy. 108 (q. v.)

42

After 1. 61. 86, K2.4 Ñ V1 B D (except D5) ins.:

यस्यावतरणे राजन्सुरान्सोमोऽब्रवीदिदम् ।
नाहं दद्यां प्रियं पुत्रं प्रेयासमपि जीवितात् ।
समयः क्रियतामेष न शक्यमतिवर्तितुम् ।
सुरकार्यं हि नः कार्यमसुराणां क्षितौ वधः ।
तत्र यास्यत्ययं वर्चा न च स्थास्यति मे चिरम् ।
ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा ।
सोऽर्जुनेत्यभिविख्यातः पाण्डोः पुत्रः प्रतापवान् ।
तस्यायं भविता पुत्रो बालो भुवि महारथः ।
तत्र षोडश वर्षाणि स्थास्यत्यमरसत्तमाः ।
अस्य षोडशवर्षस्य स संग्रामो भविष्यति ।
यत्रांशा वः करिष्यन्ति कर्म दानवसूदनम् ।
नरनारायणाभ्यां तु स संग्रामो विनाकृतः ।
चक्रव्यूहं समास्थाय योधयिष्यन्ति चासुराः ।
विमुखाञ्शात्रवान्सर्वान्कारयिष्यति मे सुतः ।
बालः प्रविश्य तं व्यूहमभेद्यं विचरिष्यति ।
महारथानां वीराणां कदनं च करिष्यति ।
सर्वेषां चैव शत्रूणां चतुर्थांशं नयिष्यति ।
दिनार्धेन महाबाहुः प्रेतराजपुरं प्रति ।
ततो महारथैर्वीरैः समेत्य बहुशो रणे ।
दिनक्षये महाबाहुर्मया भूयः समेष्यति ।
एकं वंशकरं वीरं पुत्रं वै जनयिष्यति ।
प्रनष्टं भारतं वंशं स भूयो धारयिष्यति ।
एतत्सोमवचः श्रुत्वा तथास्त्विति दिवौकसः ।
प्रत्यूचुः सहिताः सर्वे तारापतिमपूजयन् ।
एवं ते कथितं राजंस्तव जन्म पितुः पितुः ।

43

After 1. 61. 88, K4 N V1 B D (except D5) ins.:

प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिस्तथापरः ।
नाकुलिश्च शतानीकः श्रुतसेनश्च वीर्यवान् ।
शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् ।

41

N3 D2.3 om. line 1; after line 1, B1 reads (for the first time) line 30 (v. l. चैव शताधिका for चैका प्र°). K3 om. lines 2–31. — (L. 2) V1 तेषां, Dn D1 एषां (for चैव). — (L. 9) K4 [illegible] Da2 D1–4 चित्रोपचित्रश्च. — (L. 11) Dn D1.3.4 पद्मनाभ° (for सुना°). — (L. 13) N3 V1 B4m Dn D1.4 दुर्विरोचन. — (L. 15) Da बलमर्दन, Dn D1.4 भीमविक्रम. — (L. 17) Ñ1 B (except B5) दृढधन्वा (for °वर्मा). Ñ2 Dn D1 अनूदर, Ñ3 V1 जयोदर. — (L. 19) Ñ2.3 V1 Dn D1.4 क्षेमम्(Ñ2.3 V1 °धू)र्तिस्तथैव च (for the posterior half). — (L. 20) Ñ2 दुरासद; B4 °युध, Dn D1 °धन. — (L. 22) K4 नागदत्तश्च याजिनौ, B5 Da °प्रगामिनौ, Dn D1.4 नागदत्तानुयायिनौ. — (L. 23) Dn D1.4 दण्डी (for पाशी). — (L. 27) Da Dn D1.3.4 व्यूढोर. N1 Da कनकस्तथा, Dn D1.4 कनकांगद, D3 कनकस्तर. — (L. 28) Ñ3 V1 B1 Da Dn D1.3.4 कुण्डजश्चित्रकश्चैव. — L. [illegible] = L. 1. — (L. 34) K4 समग्र°; V1 संसक्त°, Dn D1.4 संग्राम° (for संसर्ग°). K3 V1 विद्याभिज्ञानयो°, K4 विद्याविज्ञान°, Ñ3 °जनसंमता. — (L. 36) K4 Ñ3 V1 Dn D1.4 °ला समये राजन्.

42

(L. 1) Dn D1.3.4 इदं (for वच). — (L. 2) K2.4 Ñ1.3 V1 B3m Da Dn D1.3.4 मम प्राणैर्गरीयसं. — (L. 5) B श्रे (as in text), the rest वै. — (L. 9) K3 B Dn2 D3 तत (for तत्र). K2.4 N1.3 V1 B3m वत्स्यते (for स्थास्यति). — (L. 11) K3 तत्राहत, K4 D3 यत्राश्चर्यं, Ñ V1 B3 यत्र शक्रा (for यत्रांशा व). Ñ3 V1 B1.3 Dn D1.3.4 वीरनिषूदन (for दानव°). — (L. 13) K4 ये सुरा, B3 दे सु°; Dn D1 व सु°. — (L. 14) K3.4 Ñ1.3 B3 Da D1.3 वा(or धा)रयि°. — (L. 19) K3.4 Ñ2 V1 Dn D1.3.4 बहुशो रणे. — (L. 21) K4 N1.3 V1 Dn D1.3.4 transp. वीरं and पुत्र.

तस्य कन्या पृथा नाम रूपेणासदृशी भुवि ।
पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान् ।
अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा ।
अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया ।
अददत्कुन्तिभोजाय स तां दुहितरं तदा ।
सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ।
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं शंसितात्मानं सर्वयत्नैरतोषयत् ।
तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि ।
उवाच चैनां भगवान्प्रीतोऽस्मि सुभगे तव ।
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रसादात्त्वं देवि पुत्राञ्जनिष्यसि ।
एवमुक्ता च सा बाला तदा कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ।
प्रकाशकर्मा तपनस्तस्यां गर्भं दधौ तदा ।
अजीजनत्सुतं चास्यां सर्वशस्त्रभृतां वरम् ।
सकुण्डलं सकवचं देवगर्भं श्रियान्वितम् ।
दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषणम् ।
निगूहमाना जातं वै बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम् ।
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा ।
चक्रतुर्नामधेयं च तस्य बालस्य तावुभौ ।
दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम् ।
स वर्धमानो बलवान्सर्वास्त्रेषूत्तमोऽभवत् ।
आ पृष्ठतापात्स तदा जजाप जपतां वरः ।
यस्मिन्काले जपन्नास्ते धीमान्सत्यपराक्रमः ।
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः ।
तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः ।
ययाचे कुण्डले वीरं कवचं च सहाङ्गजम् ।
उत्कृत्य कर्णो ह्यददत्कुण्डले कवचं च तत् ।
शक्तिं शक्रोऽददत्तस्मै विस्मितश्चेदमब्रवीत् ।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
यस्मिन्क्षेप्स्यसि दुर्धर्ष स एको न भविष्यति ।
पुरा नाम तु तस्यासीद्वसुषेणेति विश्रुतम् ।
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् ।

☞ This passage (from line 3 onwards) is an anticipation of adhy. 104 (*q. v.*).

44

After 1. 67. 14[ab], D5 ins.:

त्वयैवं का समा नारी न गन्धर्वी तथाप्सराः ।
न मिश्रकेशी रम्भा वा न घृताची न मेनका ।
चार्वङ्गी चारुकेशी च यथा त्वं मत्तकाशिनि ।
कम्बुग्रीवा च सुश्रोणी मृगाक्षी सुस्तनीति च ।
निगूढगुल्फा रक्तोष्ठी सुरक्तनखपङ्क्तिः ।
ईप्सेय गद्गदां वाचं रम्भोरु त्वं शुचिस्मिते ।
यौ तौ जातौ सुसंश्लिष्टौ मध्ये हारविलम्बितौ ।
अनर्हं धारयस्यत्र वल्कं वा चीरवल्कलम् ।
इदं शैलकुशाकीर्णं पल्लवैरुपसेवितम् ।
सिंहशार्दूलसंयुक्तं मृगपक्षिसमाकुलम् ।
वनं कण्टकितं घोरं निर्मनुष्यमभूतवत् ।
अर्हसे हर्म्यप्रासादान्सौवर्णान्मणिकुट्टिमान् ।
रत्नाकीर्णतलप्रमुदिताम्ब्रकान्तं स्वरविभूषितान् ।
इदं नार्हसि कल्याणि कृपणार्त वरानने ।
मुमूर्षुं मदनाविष्टं त्राहि मां शुभचारिणम् ।
न स्मृतिं चाभिजानामि न दिशं गजगामिनि ।
अर्धनालीकनाराचवत्कितोमरमुद्गराः ।
पतन्ति मम शरीरे मे पादमूर्धशिरांसि च ।
पुनः प्ररोहते देवि वनं परशुना हतम् ।
कामाग्निना सुसंदीप्त तपस्येव ममाग्रकम् ।
हृदि मीढे सुतीक्ष्णाग्रे मध्ये भैषज्यमीदृशम् ।
प्रेम्णा समापन्न स्पर्श स्मृतिर्हिर्ह्रिः कृपामयि ।
विनाश्योपधकामिन्यः प्रजापतिरथाब्रवीत् ।
एवमेतन्महाभागे शुचिके स्मितभाषिणि ।

45

*B ins. after 1. 67. 23:*

चाङ्क्रितेव च विमर्दिनुरुवाच सा शनैः ।
ततोऽस्य भारं जग्राह आसनं चाप्यकल्पयत् ।

43

(L. 1) K4 Ñ1.2 V1 Da1.2 सुतवर्मा; D1.2.5 कुशलोभः (for पृथशोमः). — (L. 16) K6 Ñ2 B D1.2 मसादात्तस्य तस्यैव D5 मसादात्तं देवपुत्राण्. K6 Ñ2 B D1.2.5 पुत्रं त्वं (D5 पुत्रान्हि) जनयिष्यसि. — (L. 22) Ñ1.2 V1 Da D1.2 भूतिर्भि (for भूषणम्). — (L. 23) V1 Bem Da D1.2 निगूहन्ती. — (L. 30) V1 Da D1.2 वैराजनि च एर्णिः Da D5 आ पृष्ठसंतापात्. — (L. 34) Ñ2 V1 Da ददर्श (for सह°). — (L. 35) Ñ1.2 V1 Da D1.2 कवचं पुनः तत् (for the posterior half). — (L. 36) Ñ V1 D5 Da D1.2 ते° (for शक्र). — (L. 39) Ñ2 V1 Da D1.2 तेन तौ दि°.

45

With lines 2-3, 11-12, and 15-19, cf. 1. 67. 33-34.

प्रक्षालयच्च सा पादौ काश्यपस्य महात्मनः ।
न चैनं लज्जयाशक्नोदक्षिभ्यामभिवीक्षितुम् ।
शकुन्तला च सव्रीडा तमृषिं नाभ्यभाषत ।
तस्मात्स्वधर्मात्स्खलिता भीता सा भरतर्षभ ।
अभवद्दोषदर्शित्वाद्ब्रह्मचारिण्यवञ्चिता ।
स तदा वीडितां दृष्ट्वा ऋषिस्तां प्रत्यभाषत ।

कण्वः ।

सव्रीडेव च दीर्घायुः पुरेव भविता न च ।
वृत्तं कथय रम्भोरु मा त्रासं च प्रकल्पय ।

वैशंपायनः ।

ततः प्रक्षाल्य पादौ स विश्रान्तं पुनरब्रवीत् ।
निधाय भारं सत्यर्षेः कन्दानि च फलानि च ।
ततः संवाह्य पादौ सा विश्रान्तं वेदिमध्यमा ।
शकुन्तला पौरवाणी दुःषन्ते जग्मुषी पतिम् ।
ततः कृच्छ्रादतिशुभा सव्रीडा श्रीमती तदा ।
सगद्गदमुवाचेदं काश्यपं सा शुचिस्मिता ।

शकुन्तला ।

राजा ताताजगामेह दुःषन्त इलिलात्मजः ।
मया पतिर्वृतो योऽसौ दैवयोगादिहागतः ।
तस्य तात प्रसीद त्वं भर्ता मे सुमहायशाः ।
अतः सर्वं तु यद्वृत्तं दिव्यज्ञानेन पश्यसि ।
अभयं क्षत्रियकुले प्रसादं कर्तुमर्हसि ।

☞ The above passage is ins. in *all* S MSS. after 1. 67. 23. The reservation in the footnotes to 1. 67. 23–24 that $T_2$ $G_{3-5}$ ins. it after 24 is unnecessary and should be *deleted*.

## 46

After 1. 68. 9, $D_4$ (suppl. fol.; *sec. m.*) S ins.:

शकुन्तलां समाहूय कण्वो वचनमब्रवीत् ।

कण्वः ।

शृणु भद्रे मम सुते मम वाक्यं शुचिस्मिते ।
पतिव्रतानां नारीणां विशिष्टमिति चोच्यते ।
पतिशुश्रूषणं पूर्वं मनोवाक्कायचेष्टितैः ।
अनुज्ञाता मया पूर्वं पूजयैतद्व्रतं तव ।
एतेनैव च वृत्तेन पुण्याँल्लोकानवाप्स्य च ।
तस्मान्ते मानुषे लोके विशिष्टां लप्स्यसे श्रियम् ।
तस्माद्भद्रेऽद्य यातव्यं समीपं पौरवस्य ह ।
स्वयं नायाति मत्वा ते गतं कालं शुचिस्मिते ।
गत्वाराधय राजानं दुःषन्तं हितकाम्यया ।
दौःषन्तिं यौवराज्यस्थं दृष्ट्वा प्रीतिमवाप्स्यसि ।
देवतानां गुरूणां च क्षत्रियाणां च भामिनि ।
भर्तॄणां च विशेषेण हितं संगमनं सताम् ।
तस्मात्पुत्रि कुमारेण गन्तव्यं मत्प्रियेप्सया ।
प्रतिवाक्यं न दद्यास्त्वं शापिता मम पादयोः ।

वैशंपायनः ।

एवमुक्त्वा सुतां तत्र पौत्रं कण्वोऽभ्यभाषत ।
परिष्वज्य च बाहुभ्यां मूर्ध्न्युपाघ्राय पौरवम् ।
सोमवंशोद्भवो राजा दुःषन्त इति विश्रुतः ।
तस्याग्रमहिषी चैषा तव माता शुचिस्मिता ।
गन्तुकामा भर्तृपार्श्वं त्वया सह सुमध्यमा ।
गत्वाभिवाद्य राजानं यौवराज्यमवाप्स्यसि ।
स पिता तव राजेन्द्रस्तस्य त्वं वशगो भव ।
पितृपैतामहं राज्यमातिष्ठस्व स्वभावतः ।
तस्मिन्काले स्वराज्यस्थो मामनुस्मर पौरव ।

वैशंपायनः ।

अभिवाद्य मुनेः पादौ पौरवो वाक्यमब्रवीत् ।
त्वं पिता मम विप्रर्षे त्वं माता त्वं गतिश्च मे ।
न चान्यं पितरं मन्ये त्वामृते तु महातपः ।
तव शुश्रूषणं पुण्यमिह लोके परत्र च ।
शकुन्तला भर्तृकामा स्वयं यातु यथेष्टतः ।
अहं शुश्रूषणपरः पादमूले वसामि वः ।
क्रीडां व्यालमृगैः सार्धं करिष्ये न पुरा यथा ।
स्वच्छासनपरो नित्यं स्वाध्यायं च करोम्यहम् ।

वैशंपायनः ।

एवमुक्त्वा तु संश्लिष्य पादौ कण्वस्य तिष्ठति ।
तस्य तद्वचनं श्रुत्वा प्ररुरोद शकुन्तला ।
स्नेहात्पितुश्च पुत्रस्य हर्षशोकसमन्विता ।
निशाम्य रुदतीमार्तां दौःषन्तिर्वाक्यमब्रवीत् ।
श्रुत्वा भगवतो वाक्यं किं रोदिषि शकुन्तले ।
गन्तव्यं मातरुत्थाय भर्तृप्रीतिस्तवास्ति चेत् ।

शकुन्तला ।

एकस्तु कुरुते पापं फलं भुङ्क्ते महाजनः ।
भोक्तारस्तत्र मुच्यन्ते कर्ता दोषेण लिप्यते ।
मया निवारितो नित्यं न करोषि वचो मम ।
निःसत्त्वान्कुञ्जरान्नित्यं बाहुभ्यां संभ्रमय्य वै ।
वनं च लोडयन्नित्यं सिंहव्याघ्रगणैर्युतम् ।
एवंविधानि चान्यानि कृत्वा वै कुरुनन्दन ।

---

46

(L. 18) $T_1$ $G_1$ M नाम (for इति). $T_2$ $G_1$ ते पिता (for विश्रुतः). — (L. 23) $T_1$ $G_{1,2}$ M अनुतिष्ठ (for आतिष्ठस्व). — (L. 30) Noteworthy is the expression पादमूले! Cf. line 35 of passage No. 68. — (L. 36) M तां [illegible] (for आर्तां). — $T_2$ $M_2$ om. line 40 (which appears to be redundant!). — (L. 51) M तथ्यं (for पथ्यं).

हर्षितो भगवांस्तात तस्मादावां विवासितौ ।
अहं न गच्छे दुःखन्वं नास्मि पुत्रहितैषिणी ।
पादमूले वसिष्यामि महर्षेर्भावितात्मनः ।

वैशंपायन ।

एवमुक्त्वा तु रुदती पपात मुनिपादयोः ।
एवं विलपतीं कण्वश्चानुनीय च हेतुभिः ।
पुनः प्रोवाच भगवानानृशंस्याद्धितं वचः ।

कण्वः ।

शकुन्तले शृणुष्वेदं हितं पथ्यं च भामिनि ।
पतिव्रताभावगुणान्हित्वा साध्यं न किंचन ।
पतिव्रतानां देवा वै तुष्टाः सर्ववरप्रदाः ।
प्रसादं च करिष्यन्ति आपदर्थे च भामिनि ।
पतिप्रसादात्पुण्यगतिं प्राप्नुवन्ति न चाशुभम् ।
तस्मात्त्वा तु राजानमाराधय शुचिस्मिते ।

वैशंपायन ।

शकुन्तलां तथोक्त्वा वै शाकुन्तलमथाब्रवीत् ।
दौहित्रो मम पौत्रस्त्वमिलिलस्य महात्मनः ।
शृणुष्व वचनं सत्यं प्रब्रवीमि तवानघ ।
मनसा भर्तृकामा वै धार्मिकत्वात्प्रपन्नविघम् ।
गन्तुं नेच्छति कल्याणी तस्मात्तात वहस्व वै ।
शक्तस्त्वं प्रतिगन्तुं च मुनिभिः सह पौरव ।

47

After 1. 68. 11, D4 (suppl. fol.; sec. m.) S (except G2) ins.:

वैशंपायनः ।

धर्माभिपूजितं पुत्रं काश्यपेन निशाम्य तु ।
काश्यपात्प्राप्य चानुज्ञां मुमुदे च शकुन्तला ।
कण्वस्य वचनं श्रुत्वा प्रतिगच्छेति चासकृत् ।
तथेत्युक्त्वा तु कण्वं च मातरं पौरवोऽब्रवीत् ।
किं चिरायसि मातस्त्वं गमिष्यामो नृपालयम् ।
एवमुक्त्वा तु तां देवीं दुष्यन्तस्य महात्मनः ।
अभिवाद्य मुनेः पादौ गन्तुमैच्छत्स पौरवः ।
शकुन्तला च पितरमभिवाद्य कृताञ्जलिः ।
प्रदक्षिणीकृत्य तदा पितरं वाक्यमब्रवीत् ।
अज्ञानान्मे पिता चेति दुरुक्तं वापि चानृतम् ।
अकार्यं वाप्यनिष्टं वा क्षन्तुमर्हति तद्भवान् ।
एवमुक्तो नतशिरा मुनिर्नोवाच किंचन ।
मनुष्यभावात्कण्वोऽपि मुनिरश्रूण्यवर्तयत् ।
अब्भक्षान्वायुभक्षांश्च शीर्णपर्णाशनान्मुनीन् ।
फलमूलाशिनो दान्तान्कृशान्धमनिसंततान् ।
व्रतिनो जटिलान्मुण्डान्वल्कलाजिनसंवृतान् ।
समाहूय मुनिः कण्वः कारुण्यादिदमब्रवीत् ।
मया तु लालिता नित्यं मम पुत्री यशस्विनी ।
वने जाता विवृद्धा च न च जानाति किंचन ।
आश्रमेण पथा सर्वैर्नीयतां क्षत्रियालयम् ।
द्वितीययोजने विप्राः प्रतिष्ठानं प्रतिष्ठितम् ।
प्रतिष्ठाने पुरे राजा शाकुन्तलपितामहः ।
अध्युवास चिरं कालमुर्वश्या सहितः पुरा ।
अनूपजाङ्गलयुतं धनधान्यसमाकुलम् ।
प्रतिष्ठितं पुरवरं गङ्गायमुनसंगमे ।
तत्र संगममासाद्य स्नात्वा हुतहुताशनाः ।
शाकमूलफलाहारा नियतौ च महातपाः ।
अन्यथा तु भवेद्विघ्नो गमने मम ।

48

After 1. 68. 13, D4 (suppl. fol.; sec. m.) S ins.:

शकुन्तलां समादाय मुनयो धर्मवत्सलाः ।
ते वनानि नदीः शैलान्गिरिप्रस्रवणानि च ।
कन्दराणि निवासांश्च शालानि नगराणि च ।

47

(L. 5 and 11) T1 G1 M भद्रे (for मात°), and [illegible] (for तद्भवान्). — (L. 20) T2 G3 M2 [illegible]

48

G3 om. lines 1–14. — (L. 5) M [illegible]. — (L. 8) T1 M2 °[illegible], M3–5 °[illegible]. — (L. 15) T1 M2 (sec. lin.) [illegible]; M2 [illegible]; M3–5 [illegible]. M (except M2) [illegible]. — (L. 18) T1 [illegible]; M2 [illegible]; M3–5 [illegible]. — (L. 19) M1, 3–5 [illegible] (M2 °[illegible]). — (L. 20) M (except M2) [illegible] (for [illegible]). — (L. 21) M [illegible] (for the posterior half). — (L. 25) M °[illegible]. — (L. 26) M (except M2) [illegible] (for the first [illegible]). — (L. 28) T1 G1, 3 [illegible], M [illegible]. — (L. 29) T1 [illegible]; M2 [illegible]; M3 (sec. lin.), 3–5 [illegible]. — (L. 30) M [illegible] ([illegible]). — After line 30, M (except M2) ins.:

[illegible]

— (L. 32) M (except M2) [illegible] (for [illegible]). — (L. [illegible]) M (except M2) [illegible] (for the posterior half). — (L. 46) M (except M2) [illegible]. — (L. 53) M (except M2) [illegible] (for [illegible]). — (L. 60) M (except M2) [illegible]. — Colophon. [illegible] T1 [illegible]; T2 [illegible] G1, 3 M 3°. — [illegible] T1 G1, 3 M (except M2) [illegible] line 6°. — (L. 88) T1 G1, 3 M2 [illegible] (for [illegible]).

आश्रमाणि च पुण्यानि गत्वा चैव गतश्रमाः ।
शनैर्मध्याह्नवेलायां प्रतिष्ठानं समाययुः ।
तां पुरीं पुरुहूतेन ऐलस्यार्थे विनिर्मिताम् ।
परिघाट्टालकैर्मुख्यैरुपतल्पशतैरपि ।
शतघ्नीशतयन्त्रैश्च गुप्तामन्यैर्दुरासदाम् ।
हर्म्यप्रासादसंबाधां नानापण्यविभूषिताम् ।
मण्टपैः ससभै रम्यैः प्रपाभिश्च समावृताम् ।
राजमार्गेण महता सुविभक्तेन शोभिताम् ।
कैलासशिखराकारैर्गोपुरैः समलंकृताम् ।
द्वारतोरणनिर्यूहैर्मङ्गलैरुपशोभिताम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ।
सर्वपुष्करिणीभिश्च उद्यानैश्च समावृताम् ।
*वर्णाश्रमैः स्वधर्मस्थैर्नित्योत्सवसमाहितैः ।*
धनधान्यसमृद्धैश्च संतुष्टै रत्नपूजितैः ।
क्रतुयुक्तैश्च विद्वद्भिरग्निहोत्रपरैः सदा ।
वर्जिताकार्यकरणैर्दानशीलैर्दयापरैः ।
अधर्मभीरुभिः सर्वैः स्वर्गलोकजिगीषुभिः ।
एवंविधजनोपेतमिन्द्रलोकमिवापरम् ।
तस्मिन्नगरमध्ये तु राजवेश्म प्रतिष्ठितम् ।
इन्द्रसद्मप्रतीकाशं संपूर्णं वित्तसंचयैः ।
तस्य मध्ये सभा दिव्या नानारत्नविचित्रिता ।
तस्यां सभायां राजर्षिः सर्वालंकारभूषितः ।
ब्राह्मणैः क्षत्रियैश्चापि मन्त्रिभिश्चापि संवृतः ।
संस्तूयमानो राजेन्द्रः सूतमागधवन्दिभिः ।
कार्यार्थिभिः समभ्येत्य कृत्वा कार्यं गतेषु सः ।
सुखासीनोऽभवद्राजा तस्मिन्काले महर्षयः ।
शाकुन्तलां स्वनं श्रुत्वा निमित्तज्ञास्त्वलक्षयन् ।

ऋषयः ।

शाकुन्तले निमित्तानि शोभनानि भवन्ति नः ।
कार्यसिद्धिं वदन्त्येते ध्रुवं राज्ञी भविष्यसि ।
अस्मिंस्तु दिवसे पुत्रो युवराजो भविष्यति ।

वैशंपायनः ।

वर्धमानपुरद्वारं तूर्यघोषनिनादितम् ।
शाकुन्तलां पुरस्कृत्य विविशुस्ते महर्षयः ।
प्रविशन्तं नृपसुतं प्रशशंसुश्च प्रेक्षकाः ।
वर्धमानपुरद्वारं प्रविशन्नेव पौरवः ।
इन्द्रलोकस्थमात्मानं मेने हर्षसमन्वितः ।
ततो वै नागराः सर्वे समाहूय परस्परम् ।
द्रष्टुकामा नृपसुतं समपद्यन्त भारत ।

नागराः ।

देवतेव जनस्याग्रे भ्राजते श्रीरिवागता ।
जयन्तेनेव पौलोमी इन्द्रलोकादिहागता ।

वैशंपायनः ।

इति ब्रुवन्तस्ते सर्वे महर्षीनिदमब्रुवन् ।
अभिवादयन्तः सहिता महर्षीन्देववर्चसः ।
अद्य नः सफलं जन्म कृतार्थाश्च ततो वयम् ।
एवं ये स्म प्रपश्यामो महर्षीन्सूर्यवर्चसः ।
इत्युक्त्वा सहिताः केचिदन्वगच्छन्त पौरवम् ।
हैमवत्याः सुतमिव कुमारं पुष्करेक्षणम् ।
ये केचिद्ब्रुवन्मूढाः शाकुन्तलदिदृक्षवः ।
कृष्णाजिनेन संछन्नान्द्रष्टुं नेच्छन्ति तापसान् ।
पिशाचा इव दृश्यन्ते नागराणां विरूपिणः ।
विना संध्यां पिशाचास्ते प्रविशन्ति पुरोत्तमम् ।
क्षुत्पिपासार्दितान्दीनान्वल्कलाजिनवाससः ।
त्वगस्थिभूतान्निर्मांसान्धमनीसंततानपि ।
पिङ्गलाक्षान्पिङ्गजटान्दीर्घदन्तान्निरूदरान् ।
विशीर्णकान्नूर्ध्वहस्तान्दृष्ट्वा हसन्ति नागराः ।
एवमुक्तवतां तेषां गिरं श्रुत्वा महर्षयः ।
अन्योन्यं ते समाहूय इदं वचनमब्रुवन् ।
उक्तं भगवता वाक्यं न कृतं सत्यवादिना ।
पुरप्रवेशनं नात्र कर्तव्यमिति शासनम् ।
किं कारणं प्रवेक्ष्यामो नगरं दुर्जनैर्वृतम् ।
त्यक्तसंगस्य च मुनेर्नगरे किं प्रयोजनम् ।
तस्माद्गमिष्याम वयं गङ्गायामुनसंगमम् ।
एवमुक्त्वा मुनिगणाः प्रतिजग्मुर्यथागतम् ।

Colophon.

वैशंपायनः ।

गतान्मुनिगणान्दृष्ट्वा पुत्रं संगृह्य पाणिना ।
मातापितृभ्यां विरहाद्यथा शोचन्ति दारकाः ।
तथा शोकपरीताङ्गी धृतिमालम्ब्य दुःखिता ।
गतेषु तेषु विप्रेषु राजमार्गेण भामिनी ।
पुत्रेणैव सहायेन सा जगाम शनैः शनैः ।
अदृष्टपूर्वां पश्यन्वै राजमार्गेण पौरवः ।
हर्म्यप्रासादचैत्यांश्च सभा दिव्या विचित्रिताः ।
कौतूहलसमाविष्टो दृष्ट्वा विस्मयमागतः ।
सर्वे ब्रुवन्ति तां दृष्ट्वा पद्महीनामिव श्रियम् ।
गतेन हंसीसदृशीं कोकिलेन स्वरे समाम् ।
मुखेन चन्द्रसदृशीं श्रिया पद्मालयासमाम् ।
स्मितेन कुन्दसदृशीं पद्मगर्भसमत्वचम् ।
पद्मपत्रविशालाक्षीं तप्तजाम्बूनदप्रभाम् ।
कराग्रसंमितमध्यां तां सुकेशीं संहतस्तनीम् ।
जघनं सुविशालं वै ऊरू करिकरोपमौ ।
रक्ततुङ्गनखौ पादौ धरण्यां सुप्रतिष्ठितौ ।
एवंरूपसमायुक्ता स्वर्गलोकादिहागता ।
इति स्म सर्वेऽमन्यन्त दुःषन्तनगरे जनाः ।
पुनः पुनरवोचंस्ते शाकुन्तलगुणानपि ।
सिंहेक्षणः सिंहदंष्ट्रः सिंहस्कन्धो महाभुजः ।
सिंहोरस्कः सिंहबलः सिंहविक्रान्तगाम्ययम् ।

पृथ्वंसः पृथुवक्षाश्च छत्राकारशिरा महान् ।
पाणिपादतले रक्तो रक्तास्यो दुन्दुभिस्वनः ।
राजलक्षणयुक्तश्च राजश्रीश्चास्य दृश्यते ।
आकारेण च रूपेण शरीरेणापि तेजसा ।
दुःषन्तेन समो ह्येष कस्य पुत्रो भविष्यति ।
एवं ब्रुवन्तस्ते सर्वे प्रशशंसुः सहस्रशः ।
सुस्निग्धवादानघोषन्त सर्वाः प्राणभृतः स्त्रियः ।
बान्धवा इव सस्नेहा अनुजग्मुः शकुन्तलाम् ।
पौराणां तद्वचः श्रुत्वा तूष्णींभूता शकुन्तला ।
वेश्मद्वारं समासाद्य विह्वलन्ती नृपात्मजा ।
*चिन्तयामास सहसा कार्यगौरवकारणात् ।*
लज्जया च परीताङ्गी राजन्राजसमक्षतः ।
अघृणा किं नु वक्ष्यामि दुःषन्तं मम कारणात् ।
एवमुक्त्वा तु कृपणा चिन्तयन्ती शकुन्तला ।

## 49

After 1. 68. 51, $Da_1$ ins.:

ब्रह्मा सुरासुरगुरुः सोऽपि शक्तिं पुराकरोत् ।
प्रकृतिं स्वां प्रविश्याशु ब्रह्माण्डमभवत्ततः ।
भर्तव्या रक्षणीया च भार्या हि पतिना सदा ।
धर्मार्थकामसंसिद्धौ भार्या भर्तुः सहायिनी ।
यदा भर्ता च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः ।
कथं भार्यामृते धर्मः कथं वा पुरुषः प्रभो ।
प्राप्नोति काममर्थं वा तस्यां त्रितयमाहितम् ।
तथैव भर्तारमृते भार्या धर्मादिसाधने ।
न समर्था त्रिवर्गोऽयं दंपत्योः समुपाश्रितः ।
*देवतापितृभृत्यानामतिथीनां च पूजनम् ।*
न पुंभिः शक्यते कर्तुमृते *भार्यां कथंचन ।*
प्राप्तोऽपि चार्थो मनुजैरानीतोऽपि निजं गृहम् ।
नाशमेति विना भार्यां कुभार्यासंग्रहेण वा ।
कामस्तु नैव तस्यास्ति प्रत्यक्षेणोपपद्यते ।

## 50

After 1. 68. 57[ab], $Da_1$ ins.:

अपुत्रस्य जगच्छून्यमपुत्रस्य गृहेण किम् ।
पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी ।
नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ।
नास्ति पुत्रसमा प्रीतिः नास्ति पुत्रसमा गतिः ।
अनृतं वक्ति लोकोऽयं चन्दनं किल शीतलम् ।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ।

## 51

After 1. 68. 69, S ins.:

पक्षिणः पुण्यवन्तस्ते सहिता धर्मतस्तदा ।
पक्षैस्तैरभिगुप्ता च तस्मादस्मि शकुन्तला ।
ततोऽहमृषिणा दृष्टा काश्यपेन महात्मना ।
जलार्थमग्निहोत्रस्य गतं दृष्ट्वा तु पक्षिणः ।
*न्यासभूतामिव मुनेः प्रददुर्मां दयावतः ।*
कण्वस्त्वालोक्य मां प्रीतो हसन्तीति हविर्भुजः ।
स मारणिमिवादाय स्वमाश्रममुपागमत् ।
सा वै संभाविता राजन्ननुक्रोशान्महर्षिणा ।
तेनैव स्वसुतेवाहं राजन्वै वरवर्णिनी ।
विश्वामित्रसुता चाहं वर्धिता मुनिना नृप ।
यौवने वर्तमानां च दृष्टवानसि मां नृप ।
आश्रमे पर्णशालायां कुमारीं विजने वने ।
धात्रा प्रचोदितां शून्ये पित्रा विरहितां मिथः ।
वाग्भिस्त्वं सूनृताभिर्मामपत्यार्थमचूचुदः ।
अकार्षीस्त्वाश्रमे वासं धर्मकामार्थनिश्चितम् ।
गान्धर्वेण विवाहेन विधिना पाणिमग्रहीः ।
साहं कुलं च शीलं च सत्यवादित्वमात्मनः ।
स्वधर्मं च पुरस्कृत्य त्वामद्य शरणं गता ।
तस्मान्नार्हसि संश्रुत्य तथेति वितथं वचः ।
स्वधर्मं पृष्ठतः कृत्वा परित्यक्तुमुपस्थिताम् ।
*स्वनाथा लोकनाथस्त्वं नार्हसि त्वमनागसम् ।*

## 52

After 1. 88. 12, $D_4$ (suppl. fol., *sec. m.*) S ins.:

वैशंपायनः ।
अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ।
हयस्य यानि चाङ्गानि संनिकृत्य यथाक्रमम् ।
होताध्वर्युरथोद्गाता ब्रह्मणा सह भारत ।
अग्नौ प्रास्यन्ति विधिवत्समस्ताः षोडशर्त्विजः ।
धूमगन्धं च पापिष्ठा ये जिघ्रन्ति नरा भुवि ।

---

### 51

(L. 1) $G_4$ धर्मवत्सलाः; M (*except* $M_8$) धर्मतत्पराः. — (L. 2) $T_1$ $G_{1.4}$ M (*except* $M_8$) तैर् (for तैर्). — $T_2$ $G_{3-6}$ $M_{6-8}$ om. line 6. — (L. 9) M (*except* $M_8$) दयया (for राजन्वै). $T_1$ $G_{1.3}$ M (*except* $M_8$) परमर्षिणा (for वर°). — (L. 12) $T_1$ $G_{3-6}$ $M_8$ तदा (for वने). — (L. 15) M (*except* $M_8$) अवोचः (for अकार्षीः). S (except $G_{2.6}$ $M_8$) वाचः (for वासं). $T_1$ $G_3$ M (*except* $M_8$) °मिश्रिताः; $T_2$ $G_6$ °निश्चिता; $G_1$ °संमिताः. — (L. 21) $T_1$ $G_{1-6}$ अनापदि; $M_8$ अपोदितुं (for अनागसम्).

विमुक्तपापाः पूतास्ते तत्क्षणेनाभवन्नराः ।
एतस्मिन्नन्तरे चैव माधवी सा तपोधना ।
मृगचर्मपरीताङ्गी परिधाय मृगत्वचम् ।
मृगैः परिचरन्ती सा मृगाहारविचेष्टिता ।
यज्ञवाटं मृगगणैः प्रविश्य स्मृतविस्मिता ।
आघ्रायन्ती धूमगन्धं मृगैरेव चचार सा ।
यज्ञवाटमटन्ती सा पुत्रांस्तानपराजितान् ।
पश्यन्ती यज्ञमाहात्म्यं मुदं लेभे च माधवी ।
असंस्पृशन्तं वसुधां ययातिं नाहुषं तदा ।
दिविष्ठं प्राप्तमाज्ञाय ववन्दे पितरं तदा ।
तदा वसुमनापृच्छन्मातरं वै तपस्विनीम् ।
वसुमनाः ।
भवत्या यत्कृतमिदं वन्दनं पादयोरिह ।
कोऽयं देवोपमो राजा याभिवन्दसि मे वद ।
माधवी ।
शृणुध्वं सहिताः पुत्रा नाहुषोऽयं पिता मम ।
ययातिर्मम पुत्राणां मातामह इति स्मृतः ।
पूरुं मे भ्रातरं राज्ये समावेश्य दिवं गतः ।
केन वा कारणेनैवमिह प्राप्तो महायशाः ।
वैशंपायनः ।
तस्यास्तद्वचनं श्रुत्वा स्वर्गाद्भ्रष्टेति चाब्रवीत् ।
सा पुत्रस्य वचः श्रुत्वा संभ्रमाविष्टचेतना ।
माधवी पितरं प्राह दौहित्रपरिवारितम् ।
माधवी ।
तपसा निर्जिताँल्लोकान्प्रतिगृह्णीष्व मामकान् ।
पुत्राणामिव पौत्राणां धर्मादधिगतं धनम् ।
स्वार्थमेव वदन्तीह ऋषयो धर्मपाठकाः ।
तस्माद्दानेन तपसा चास्माकं त्रिवमाव्रज ।
ययातिः ।
यदि धर्मफलं ह्येतच्छोभनं भविता तव ।
दुहित्रा चैव दौहित्रैस्तारितोऽहं महात्मभिः ।
तस्मात्पवित्रं दौहित्रमद्य प्रभृति पैतृके ।
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ।
भोक्तारः परिवेष्टारः श्रावितारः पवित्रकाः ।
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ।
तिलाः पिशाचाद्रक्षन्ति दर्भा रक्षन्ति राक्षसात् ।
रक्षन्ति श्रोत्रिया पङ्क्तिं यतिभिर्भुक्तमक्षयम् ।
लब्ध्वा पात्रं तु विद्वांसं श्रोत्रियं सुव्रतं शुचिम् ।
स कालः कालतो दत्तं नान्यथा काल इष्यते ।
वैशंपायनः ।
एवमुक्त्वा ययातिस्तु पुनः प्रोवाच बुद्धिमान् ।
सर्वे ह्यवभृथस्नातास्त्वरध्वं कार्यगौरवात् ।

53

After 1. 92. 24ab, D5 (suppl. fol. *sec. m.*) S ins.:

बभूव सर्वलोकस्य सत्यवागिति संमतः ।
पीनस्कन्धो महाबाहुर्मत्तवारणविक्रमः ।
अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ।
अमात्यसंपदोपेतः क्षत्रधर्मविशेषवित् ।
वशे चक्रे महीमेको विजित्य वसुधाधिपान् ।
वेदानागमयत्कृत्स्नान्राजधर्मांश्च सर्वशः ।
ईजे च बहुभिः सत्रैः क्रतुभिर्भूरिदक्षिणैः ।
तर्पयामास विप्रांश्च वेदाध्ययनकोविदान् ।
रत्नैरुच्चावचैर्गोभिर्ग्रामैरश्वैर्धनैरपि ।
वयोरूपेण संपन्नः पौरुषेण बलेन च ।
ऐश्वर्येण प्रतापेन विक्रमेण धनेन च ।
वर्तमानं च सत्येन सर्वधर्मविशारदम् ।
तं महीपं महीपाला राजराजमकुर्वत ।
वीतशोकभयाबाधाः सुखस्वप्नप्रबोधनाः ।
श्रिया भरतशार्दूल समपद्यन्त भूमिपाः ।
शंतनुप्रमुखैर्गुप्तं राष्ट्राधिपतिभिर्जगत् ।
नियमैः सर्ववर्णानां ब्रह्मोत्तरमवर्तत ।
ब्राह्मणाभिमुखं क्षत्रं क्षत्रियाभिमुखा विशः ।
ब्रह्मक्षत्रानुलोमाश्च शूद्राः पर्यचरन्विशः ।
एवं पशुवराहाणां तथैव मृगपक्षिणाम् ।
शंतनावथ राज्यस्थे नावर्तत वृथा वधः ।
असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा सर्वेषां भूतानामभवत्पिता ।
स हस्तिनाह्वे धर्मात्मा विहरन्कुरुनन्दनः ।
तेजसा सूर्यकल्पोऽभूद्वायुना च समो बले ।
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ।
बभूव राजा सुमतिः प्रजानां सत्यविक्रमः ।
स वनेषु च रम्येषु शैलप्रस्रवणेषु च ।

☞ This passage is an anticipation of 1. 94. 1–17 (*q. v.*)

52

(L. 5) T2 G4–6 वपायास्तु (for च पापिष्ठा), and नराधिपाः. — (L. 23) G6 subst. for the posterior half:

मानाकृष्टो नृपोत्तमः ।
अयमित्यब्रुवन्पुत्रा माधवीं मातरं तदा ।

— (L. 24) G6 पुत्राणां (for पुत्रस्य). — (L. 28) T2 G4–6 वेदपारगाः (for धर्मपा°). — After line 32, T2 G3–6 ins.:

भविष्यति न संदेहः पितॄणां प्रीतिवर्धनम् ।

53

(L. 1) T G1.2.6 सत्तमः; M2 विश्रुत° (for संमतः). — (L. 7) M चान° (for भूरि°).

## 54

After I. 94. 64, S (which om. 65–66) ins.:

अपत्यफलसंयुक्तमेतच्छ्रुत्वा पितुर्वचः ।
सूतं भूयोऽपि संतस आह्वयामास वै पितुः ।
सूतस्तु कुरुमुख्यस्य उपयातस्तदाज्ञया ।
तमुवाच महाप्राज्ञो भीष्मो वै सारथिं पितुः ।
त्वं सारथे पितुर्मह्यं सखासि रथधूर्गतः ।
अभिजानासि यदि वै कस्यां भावो नृपस्य तु ।
एतदाचक्ष्व मे पृष्टः करिष्ये न तदन्यथा ।

सूतः ।

दाशकन्या नरश्रेष्ठ तत्र भावः पितुर्गतः ।
वृतः स नरदेवेन तदा वचनमब्रवीत् ।
योऽस्यां पुमान्भवेद्गर्भः स राजा त्वदनन्तरम् ।
नाकामयत तं दातुं पिता तव वरं तदा ।
स चापि निश्चयस्तस्य न च दद्यामतोऽन्यथा ।
एवं ते कथितं वीर कुरुष्व यदनन्तरम् ।

वैशंपायनः ।

ततः स पितुराज्ञाय मतं सम्यगवेक्ष्य च ।
ज्ञात्वा विमनसं पुत्रः प्रययौ यमुनां प्रति ।

☞ The passage is followed by I. 94. 67 (*q. v.*).

## 55

After I. 96. 53ᵉ, K4 (suppl. fol.) *D4* (suppl. *fol. sec. m.*) S ins.:

नैनामेवं कथंचन ।
अन्यामन्यस्य कामयन्तीमब्रवीत्कुरुसत्तमाम् ।

विचित्रवीर्यः ।

प्रत्यक्षफल एवैष कामोऽसाधुर्निरर्थकः ।
परसक्तोपभोगे मामार्ये नायोक्तुमर्हसि ।

भीष्मः ।

प्रतिष्ठितः शंतनोर्यं तात वंशस्त्वमव्ययः ।
अकामवृत्तो धर्मात्मन्साधु मन्ये मतं तव ।
इत्युक्त्वाम्बां समालोक्य विचित्रवाक्यमब्रवीत् ।
विसृष्टा ह्यसि गच्छ त्वं यथाकाममनिन्दिते ।
नानियोज्ये समर्थोऽहं नियोक्तुं भ्रातरं प्रियम् ।
अन्यभावगतां चापि को नारीं वासयेद्गृहे ।
अतस्त्वां न नियोक्ष्यामि अन्यकामासि गम्यताम् ।
अहमप्यूर्ध्वरेता वै निवृत्तो दारकर्मणि ।
न संबन्धस्तु दाराभ्यां भविता वै कथंचन ।

वैशंपायनः ।

इत्युक्ता सा गता तत्र सखीभिः परिवारिता ।
निर्दिष्टा हि शनै राजन्साल्वराजपुरं प्रति ।
अथाम्बा साल्वमागम्य साब्रवीन्मनसा वृता ।
पुरा निर्दिष्टभावा त्वामागतास्मि वरानन ।
देवव्रतं समुत्सृज्य सानुजं भरतर्षभम् ।
प्रतिगृह्णीष्व भद्रं ते विधिवन्मां समुद्यताम् ।
तथैवमुक्तः साल्वोऽपि प्रहसन्निदमब्रवीत् ।
निर्जितासीह भीष्मेण मां विनिर्जित्य राजसु ।
अन्येन निर्जितां भद्रे विसृष्टां तेन चाल्पात् ।
न गृह्णामि वरारोहे तत्र चैव तु गम्यताम् ।
इत्युक्ता सा समागम्य भीष्मं पुनरथाब्रवीत् ।
अम्बाब्रवीत्ततो भीष्मं त्वयाहं सहसा हृता ।
क्षत्रधर्ममवेक्षस्व त्वं भर्ता मम धर्मतः ।
यां यः स्वयंवरे कन्यां निर्जयेच्छौर्यसंपदा ।
राज्ञः सर्वान्विनिर्जित्य स तामुद्वाहयेद्ध्रुवम् ।
अतस्त्वमेव भर्ता मे त्वयाहं निर्जिता यतः ।
तस्मादुद्वहस्व मां भीष्म निर्जितां संसदि त्वया ।
ऊर्ध्वरेता ह्यहमिति प्रत्युवाच पुनः पुनः ।
भीष्मं सा चाब्रवीदम्बा यथाजैषीस्तथा कुरु ।
एवमन्वगमद्भीष्मं षट् समाः पुष्करेक्षणा ।
ऊर्ध्वरेतास्त्वहं भद्रे विवाहविमुखोऽभवम् ।
तमेव साल्वं गच्छ त्वं यः पुरा मनसा वृतः ।
अन्यसक्तं किमर्थं त्वमात्मानमवदः पुरा ।
अन्यसक्तां वधूं कन्यां वासयेत्स्वगृहे न हि ।
नाहमुद्वाहयिष्ये त्वां मम भ्राते यवीयसे ।
विचित्रवीर्याय शुभे यथेष्टं गम्यतामिति ।
भूयः साल्वं समभ्येत्य राजन्गृह्णीष्व मामिति ।
नाहं गृह्णाम्यन्यजितामिति साल्वनिराकृता ।
ऊर्ध्वरेतास्त्वहमिति भीष्मेण च निराकृता ।
अम्बा भीष्मं पुनः साल्वं भीष्मं साल्वं पुनः पुनः ।
गमनागमनैरेवमनैषीत्षट् समा नृप ।
अश्रुभिर्भूमिमुक्षन्ती शोचन्ती सा मनस्विनी ।
पीनोन्नतकुचद्वन्द्वा विशालजघनेक्षणा ।
श्रोणीभरालसगमा शरच्चन्द्रनिभानना ।
वर्षेकाद्विगुणीभूतं स्फुरन्ती चपलेव सा ।
सा ततो द्वादश समा बाहुदाममितो नदीम् ।
पार्श्वे हिमवतो रम्ये तपो घोरं समाददे ।
संक्षिप्तकरणा तत्र तप आस्थाय सुव्रता ।
पादाङ्गुष्ठेन तानिष्ट्वान्नमग्र ततः सुराः ।

---

54

(L. 5) G2 रथमार्गतः; G1.3 सतधूर्गतः; G6 रथधुर्यतः. — (L. 6) T2 G1–4 अपि (for अभि). — (L. 8) T1 G1–4 M दाशकन्या. G1.3 M5 तत्र (for तत्र).

तस्मात्तु तपो दृष्ट्वा सुराणां क्षोभकारकम् ।
विस्मितश्चैव हृष्टश्च तस्यास्तु महद्बुद्धिमान् ।
अनन्तसेनो भगवान्कुमारो वरदः प्रभुः ।
मानयन्राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् ।
एषा पुष्करिणी दिव्या यथावत्समुपस्थिता ।
अम्बे त्वच्छोकशमनी माला भुवि भविष्यति ।
एतां चैव मया दत्तां मालां यो धारयिष्यति ।
सोऽस्य भीष्मस्य निधने कारणं वै भविष्यति ।

Colophon.

अम्बा ।

अन्यपूर्वेति मां साल्वो नाभिनन्दति बालिशः ।
साहं धर्माच्च कामाच्च विहीना शोकधारिणी ।
अपतिः क्षत्रियान्सर्वानाक्रन्दामि समन्ततः ।
इयं वः क्षत्रिया माला या भीष्मं निहनिष्यति ।
अहं च भार्या तस्य स्यां यो भीष्मं घातयिष्यति ।

वैशंपायनः ।

तस्याश्चाक्रन्दमानायाः समाः पञ्च गताः पराः ।
नाभवच्छरणं कश्चित्क्षत्रियो भीष्मजाद्भयात् ।
अगच्छत्सोमकं साम्बा पाञ्चालेषु यशस्विनम् ।
सत्यसंधं महेष्वासं सत्यधर्मपरायणम् ।
सा समाद्वारमागम्य पाञ्चालैरभिरक्षितम् ।
पाञ्चालराजमाक्रन्दत्प्रगृह्य सुभुजा भुजौ ।

अम्बा ।

भीष्मेण हन्यमानां मां मज्जन्तीमिव च ह्रदे ।
यज्ञसेनाभिधावेह पाणिमालम्ब्य चेश्वर ।
तेन मे सर्वधर्माश्च रतिभोगाश्च केवलाः ।
उभौ च लोकौ कीर्तिश्च समूलौ सफलौ हृतौ ।
क्रोशाम्येवं न विन्दामि राजन्यं शरणं क्वचित् ।
किं नु निःक्षत्रियो लोको यत्रानाथोऽवसीदति ।
समागम्य तु राजानो मयोक्ता राजसत्तमाः ।
इक्ष्वाकूणां तु ये वृद्धाः पाञ्चालानां च ये वराः ।
त्वत्प्रसादाद्विवाहेऽस्मिन्मा धर्मो मा पराजयेत् ।
प्रसीद यज्ञसेनेह गतिर्मे भव सोमक ।

यज्ञसेनः ।

जानामि त्वां बोधयामि राजपुत्रि विशेषतः ।
यथाशक्ति यथाधर्मं बलं संधारयाम्यहम् ।
अन्यस्मात्पार्थिवाद्यत्ते भयं स्यात्पार्थिवात्मजे ।
तस्यापनयने हेतुं संविधातुमहं प्रभुः ।
न हि शांतनवस्याहं महास्त्रस्य प्रहारिणः ।
ईश्वरः क्षत्रियाणां हि बलं धर्मोऽनुवर्तते ।
सा साधु व्रज कल्याणि न मां भीष्मो दहेद्बलात् ।
न हि भीष्मादहं धर्मं शक्तो दातुं कथंचन ।

वैशंपायनः ।

इत्युक्ता स्रजमासज्य द्वारि राज्ञो व्यपाद्रवत् ।
न्युदस्तां सर्वलोकेषु तपसा संशितमताम् ।
तामन्वगच्छद्द्रुपदः सान्त्वं जल्पन्पुनः पुनः ।
स्रजं गृहाण कल्याणि न मे वैरं प्रसञ्जय ।

अम्बा ।

एवमेव त्वया कार्यमिति स प्रतिकाङ्क्षते ।
न तु तस्यान्यथा भावो दैवमेतदमानुषम् ।
यश्चैनां स्रजमादाय स्वयं वै प्रतिमोक्ष्यते ।
स भीष्मं समरे हन्ता मम धर्मप्रणाशनम् ।

वैशंपायनः ।

तां स्रजं द्रुपदो राजा कंचित्कालं ररक्ष सः ।
ततो विस्रम्भमास्थाय तूष्णीमेवाभ्युपैक्षत ।
तां शिखण्डिन्यवबध्नात्तु बाला पितुरवज्ञया ।
तां पिता त्वत्यजच्छीघ्रं त्रस्तो भीष्मस्य किल्बिषात् ।
इषीकं ब्राह्मणं भीता साभ्यगच्छत्तपस्विनम् ।
गङ्गाद्वारि तपस्यन्तं तुष्टिहेतोस्तपस्विनी ।
उपचाराभितुष्टस्तामब्रवीदृषिसत्तमः ।
गङ्गाद्वारे विभजन्तं भविता नचिरादिव ।
तत्र गन्धर्वराजानं तुम्बुरुं प्रियदर्शनम् ।
आराधयितुमीहस्व सम्यक्परिचरस्व तम् ।
अहमप्यत्र सांनिध्यं कर्तास्मि तव शोभने ।
तं तदाचर भद्रं ते स ते श्रेयो विधास्यति ।

---

55

Through oversight $K_4$ was omitted from the list of MSS. containing this passage, given in the footnotes to 1. 96. 53. — (L. 1) M अंतां (for एनां). — (L. 3) $K_4$ $D_4$ $M_6$ पापस्य फलम्; $M_8$ फलस्य°; $M_{6-8}$ असार° (for प्रलय°). — (L. 5) $D_4$ M प्रातिष्ठच्छांतनोर्वंशः. — (L. 16) $K_4$ $D_4$ M प्रतिपूज्य तम् (for मनसा वृता). — (L. 18) $T_1$ $G_{1,2,6}$ $M_8$ पुरुषर्षभ (for भरत°). — After line 25, $G_1$ ins.:

स्वयंवरे राजमध्ये त्वयाहं प्रथमं वृता ।

— $K_4$ $T_1$ M (except $M_5$) om. lines 27-30; $T_2$ om. 27-31; $G_6$ om. 27-33. — (L. 31) M (except $M_5$) पूर्वमेवोक्तवांस्तत्र (for the posterior half). — $K_4$ $T_2$ $M_8$ om. lines 34-44; $T_2$ om. 34-48. $K_4$ $D_4$ $T_1$ M (except $M_5$) om. lines 46-48. — (L. 57) $K_4$ $D_4$ $G_{1,2,4}$ $M_8$ समुपासिता. — Colophon. *Adhy. no.*: $T_1$ 97; $T_2$ 47; G M 48. $D_4$ $G_{2,4}$ $M_{6-8}$ om. line 78. — (L. 88) $K_4$ $T_2$ $M_8$ अभिपजेत्; $T_1$ $G_6$ अभिभवेत्; $G_{1,2}$ अभिद्रवेत् (for भीष्मो दहेत्). — After line 88, $G_{2,4,5}$ $M_5$ ins.:

न प्रत्यगृह्णंस्ते सर्वे किमिवेव न वेद्म्यहम् ।

ततो विभजनं तत्र गन्धर्वाणामवर्तत ।
तत्र द्वाववशिष्येतां गन्धर्वावमितौजसौ ।
तयोरेकः समीक्ष्यैनां स्त्रीबुभूषुरुवाच ह ।
इदं गृह्णीष्व पुंलिङ्गं वृणे स्त्रीलिङ्गमेव ते ।
नियमं चक्रतुस्तत्र स्त्री पुमांश्चैव तावुभौ ।
ततः पुमान्समभवच्छिखण्डी परवीरहा ।
स्त्री भूत्वा ह्यपचक्राम स गन्धर्वो मुदान्वितः ।
लब्ध्वा तु महतीं प्रीतिं याज्ञसेनिर्महायशाः ।
ततो बुद्बुदकं गत्वा पुनरस्त्राणि सोऽकरोत् ।
तत्र चास्त्राणि दिव्यानि कृत्वा स सुमहाद्युतिः ।
स्वदेशमभिसंपेदे पाञ्चालं कुरुनन्दन ।
सोऽभिवाद्य पितुः पादौ महेष्वासः कृताञ्जलिः ।
उवाच भवता भीष्मान्न भेतव्यं कथंचन ।

Colophon.

वैशंपायनः ।

अम्बायां निर्गतायां तु भीष्मः शांतनवस्तदा ।
न्यायेन कारयामास राज्ञो वैवाहिकीं क्रियाम् ।
अम्बिकाम्बालिके चैव परिणीयाभिसंनिधौ ।

☞ This passage (55), which is followed by a *repetition* (with v. l.) of 1. 96. 53[ab], is a version (much abbreviated and in many respects discrepant) of the Ambopākhyāna (in the Udyoga). The repetition of 1. 96. 53[ab], is an unmistakable sign that the passage is an interpolation here.

56

S ins. after 1. 98. 17: Dn, after 1038*: D4 (suppl. fol. *sec. m.*), after line 1 of 1038*:

पुत्रलाभाच्च सा पत्नी न तुतोष पतिं तदा ।
प्रद्विषन्तीं पतिर्भार्यां किं मां द्वेक्षीति चाब्रवीत् ।
पत्नी ।
पतिर्भार्यानुभरणाद्भर्ता चेति प्रकीर्त्यते ।
अहं त्वां भरणं कृत्वा जात्यन्धं ससुता सदा ।
नित्यकालं श्रमेणार्ता न भरेयं महातपः ।

भीष्मः ।

तस्यास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः ।
प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा ।
नीयतां क्षत्रियकुले धनार्थी त्वं भविष्यसि ।

पत्नी ।

त्वया दत्तं धनं विप्र नेच्छेयं दुःखकारकम् ।
यथेष्टं कुरु विप्रेन्द्र न भरेयं यथा पुरा ।

दीर्घतमाः ।

अद्य प्रभृति मर्यादा मया लोके प्रतिष्ठिता ।
एक एव पतिर्नार्या यावज्जीवं परायणम् ।
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम् ।
अभिगम्य परं नारी पतिष्यति न संशयः ।
अपतीनां तु नारीणामद्य प्रभृति पातकम् ।
यद्यस्ति चेद्धनं सर्वं वृथाभोगा भवन्तु ताः ।
अकीर्तिः परिवादश्च नित्यकालं भवन्तु वै ।

भीष्मः ।

तस्य तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता ।
गङ्गायामानीयतामेष पुत्रा इत्येवमब्रवीत् ।

☞ It should be noted that here the text of the vulgate contains an injudicious juxtaposition of two interpolations from two separate and unconnected sources, so inharmonious that the first half of 1. 104. 29 of the Bombay ed. remains hanging in the air! Cf. Winternitz, *JRAS.* 1897. 723 f. (with footnote).

57

After वैशंपायनः of 1. 99. 3, S (which om उवाच) ins.:

भीष्मस्य तु वचः श्रुत्वा धर्म्यं हेत्वर्थसंहितम् ।
माता सत्यवती भीष्मं पुनरेवाभ्यभाषत ।

— G6 (hapl.) om. from the posterior half of line 88 to the prior half of 93 (inclusive). — (L. 100 and 107) K4 T1 G Ms अजानती (for अवज्ञया), and परिचरैर्विभु-. — (L. 114) K4 D4 M स्त्रीत्वे पुरुत्वे च तावुभौ. — Colophon. *Adhy. no.:* T1 98; T2 48; G M 49.

56

(L. 1) Dn °लाभा च. — (L. 2) Dn G4 मां द्वेक्षीति. — (L. 3) Dn T1 M भार्याया भरणाद्भर्ता पालनाच पतिः स्मृत°. — (L. 4) Dn D4 T1 G3 ससुतां. — (L. 9) Dn D4 M6-8 — (L. 10) Dn T2 G2.6 transp. यथा and दुःखकारणम्. — (L. 12) G (except G2.6) यथा (for नदा). पुरा. — (L. 13) T2 G (except G2.6) तस्मिन्न परं. — (L. 17) — (L. 15) T2 G (except G2.6) तस्मिन्न पर. Dn D4 G6 M6-8 नित्य Dn T2 M (except M8) °वाराम. Dn D4 G6 M6-8 नित्यं तासां (for नित्यकालं). — (L. 18) Dn M8 इति (for तस्य). — (L. 19) Dn D4 गंगायां नं च°.

सत्यवती ।

औचथ्यमधिकृत्येदमङ्गं च यदुदाहृतम् ।
पौराणी श्रुतिरित्येषा प्राप्तकालमिदं कुरु ।
त्वं हि पुत्र कुलस्यास्य ज्येष्ठः श्रेष्ठश्च भारत ।
यथा च ते पितुर्वाक्यं मम कार्यं तवानघ ।
मम पुत्रस्तव भ्राता यवीयान्सुप्रियश्च ते ।
बाल एव गतः स्वर्गं भारतो भरतर्षभ ।
इमे महिष्यौ तस्येह काशिराजसुते उभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ।
धर्ममेतत्परं ज्ञात्वा संतानाय कुलस्य च ।
आभ्यां मम नियोगात्तु धर्मं चरितुमर्हसि ।

भीष्मः ।

असंशयं परो धर्मस्त्वया मातः प्रकीर्तितः ।
त्वमप्येतां प्रतिज्ञां तु वेत्थ या परमा मयि ।
जानीषे यत्तदा वृत्तं शुल्कहेतोस्त्वदन्तरे ।
तत्सत्यवति सत्यं वै पुनरेव ब्रवीमि ते ।
तच्च जात्वन्यथा कार्यं लोकानामपि संक्षये ।
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाप्यधिकमेताभ्यां न तु सत्यं परित्यजे ।
त्यजेच्च पृथिवी गन्धमापश्च रसमुत्तमम् ।
ज्योतिश्च परमं रूपं वायुः स्पर्शगुणं त्यजेत् ।
त्यजेच्च घोषमाकाशः सोमः शीतत्वमुत्सृजेत् ।
प्रभां समुत्सृजेदर्को धूमकेतुरथोष्णताम् ।
वृत्रहा विक्रमं जह्याद्धर्मं जह्याच्च धर्मराट् ।
अमरत्वस्य वा हेतोस्त्रैलोक्यसदनस्य वा ।
उत्सृजेयमहं प्राणान्न तु सत्यं कथंचन ।

सत्यवती ।

जानामि त्वयि धर्मज्ञ सत्यं सत्यवतां वर ।
इच्छंस्त्वमिह लोकांस्त्रीन्सृजेरन्यानरिंदम ।
यथा तु वः कुलं चैव धर्मश्च न पराभवेत् ।
सुहृदश्च सुहृष्टाः स्युस्तथा त्वं कर्तुमर्हसि ।

भीष्मः ।

त्वमेव कुलवृद्धासि गौरवं तु परं त्वयि ।
सोपायं कुलसंताने वक्तुमर्हसि नः परम् ।
स्त्रियो हि परमं गुह्यं धारयन्ति कुले कुले ।
गुह्यांश्चापि मायाभिर्बह्वीभिरुपगूहते ।
सा सत्यवति संपश्य धर्मं सत्यपरायणे ।
यथा न जह्यां सत्यं च न सीदेच्च कुलं हि नः ।

वैशंपायनः ।

☞ Lines 7–30 above are a *repetition* (with v.l.) of 1. 97. 8–10, 13–18, 20 and 22.

## 58

After 1. 104. 9, N ins.:

तां समासाद्य देवस्तु विवस्वानिदमब्रवीत् ।
अयमस्म्यसितापाङ्गे ब्रूहि किं करवाणि ते ।

कुन्त्युवाच ।

कश्चिन्मे ब्रह्मवित्प्रादाद्वरं विद्यां च शत्रुहन् ।
यद्विजिज्ञासयाह्वानं कृतवत्यस्मि ते विभो ।
तदस्मिन्नपराधे त्वां शिरसाभिप्रसादये ।
योषितो हि सदा रक्ष्याः स्वपराद्धापि नित्यदा ।

सूर्य उवाच ।

वेदाहं सर्वमेवैतद्यद्दुर्वासा ददौ तव ।
संत्यज्योभे मानभये क्रियतां संगमो मया ।
अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे ।

---

57

(L. 1) T $G_{4-6}$ वचनं (for तु वचः). — (L. 6) $T_1$ तदा कुरु; $G_{1.2.6}$ तथानघ (for तवा°). — (L. 14) $T_2$ $G_{4.5}$ मयि मतेर्वे (for परमा मयि). — (L. 17) $T_2$ $G_{3-5}$ कुर्यां (for कार्यं). — (L. 27) $T_2$ $G_{4-6}$ सत्य सत्यपराक्रम; $G_3$ धर्म सत्यं परंतप. — (L. 33) $T_1$ $G_{4.5}$ सदा (for the first कुले).

58

(L. 2) $K_5$ $N_{1.2}$ $V_1$ B D (except $D_5$) °सितापाङ्गि. — (L. 3) Ko महर्षि.; $\tilde{N}_2$ $V_1$ $B_{1.6}$ D (except $D_2$) ब्राह्मणः (for ब्रह्मवित्). — (L. 4) $K_{0.4}$ $\tilde{N}_{2.3}$ $V_1$ B D तद् (for यद्). — (L. 5) $K_{0.4}$ $\tilde{N}_2$ $V_1$ B D एतस्मिन् (for तदस्मिन्). $\tilde{N}_2$ $V_1$ Dn $D_1$ अहं (for अभि-). — (L. 6) $Ś_1$ $K_1$ स्वा($K_1$ स)पराधे; $K_{0.3.4}$ $D_2$ सापराधा; $\tilde{N}$ $V_1$ $B_6$ $D_{n2}$ $D_1$ स्वाप°. Several MSS. नित्यशः. $K_2$ $D_4$ सापराधा अपि प्रभो. — (L. 7) B $D_{2.4}$ transp. यद् and दुर्वासा. $K_{0.4}$ $\tilde{N}_2$ $V_1$ D (except $D_5$) वर ददौ (for ददौ तव). — (L. 8) $\tilde{N}_1$ संभेद्य ज्ञातमात्रेन; $V_1$ $D_{a1}$ Dn $D_1$ संत्यज्य भयमेवेह; $\tilde{N}_3$ त्यज्यतां भयमेवेह; $D_2$ सत्य तेभिक्षित भद्रे. $\tilde{N}_3$ $V_1$ *D* (except $D_{2.4.5}$) मम (for मया). — (L. 10) $\tilde{N}_{1.3}$ प्रतज्ज्याह्वानि; $\tilde{N}_2$ $V_1$ $B_6$ D (except $D_{2.4.5}$) °ह्वानेपि. $\tilde{N}_{1.3}$ दोषोपि स्यादनिच्छत°; $\tilde{N}_2$ $V_1$ D (except $D_{2.4.5}$) दोषः स्यान्नात्र संशय°. — (L. 11) $K_{0.3.4}$ $\tilde{N}_{2.3}$ $V_1$ B D om. सा. $K_{0.1.4}$ $\tilde{N}_{2.3}$ $V_1$ B D सांत्वपूर्वं (for सान्त्वं क्रूर). — (L. 12) $K_3$ भास्कर; $V_1$ Dn $D_{1.5}$ भारत (for पार्थिव). — (L. 13) $K_{0.4}$ $\tilde{N}$ $V_1$ B (except $B_6$) D (except $D_5$) यशस्विनी (for तप°). — After line 15, $D_4$ marg. *sec. m.* reads passage No. 59 given below. — (L. 16) $K_{0.4}$ $V_1$ D (except $D_{2.4}$) स (for तु). $K_{2.3}$ $\tilde{N}_{1.3}$ $V_1$ $B_5$ D (except $D_{2.4}$) °राज° (for °भोज°).

वृथाह्वानाद्धि ते भीरु दोषो हि स्यादसंशयम् ।
वैशंपायन उवाच ।
सैवमुक्ता बहुविधं सान्त्वं सूर्ये विवस्वता ।
सा तु नैच्छद्वरारोहा कन्याहमिति पार्थिव ।
बन्धुपक्षभयाद्भीता लज्जया च तपस्विनी ।
तामर्कः पुनरेवेदमब्रवीद्भरतर्षभ ।
मत्प्रसादान्न ते राज्ञि भविता दोष इत्युत ।
एवमुक्त्वा तु भगवान्कुन्तिभोजसुतां तदा ।

## 59

S ins. after 1. 104. 9: $D_4$ (marg. *sec. m.*), after line 15 of passage No. 58 above:

साब्रवीद्भगवन्कस्त्वं प्रादुर्भूतो ममाग्रतः ।
सूर्यः ।
आहूतोपस्थितं भद्रे ऋषिमन्त्रेण चोदितम् ।
विद्धि मां पुत्रलाभाय देवमर्कं शुचिस्मिते ।
पुत्रस्ते निर्मितः सुभ्रु शृणु चारुशुभानने ।
आदित्ये कुण्डले बिभ्रत्कवचं चैव मामकम् ।
शस्त्राणामप्यभेद्यं च भविष्यति शुचिस्मिते ।
नास्य किंचिददेयं च ब्राह्मणेभ्यो भविष्यति ।
चोद्यमानो मया चापि न क्षमं चिन्तयिष्यति ।
दास्यते स हि विप्रेभ्यो मानी चैव भविष्यति ।
वैशंपायनः ।
एवमुक्ता ततः कुन्ती गोपतिं प्रत्युवाच ह ।
कन्या पितृवशा चाहं पुत्रार्थो न चैव मे ।
सूर्यः ।
यद्येवं मन्यसे भीरु किमाह्वयसि भास्करम् ।
यदि मामवजानासि ऋषिः स न भविष्यति ।
मन्त्रदानेन यस्य त्वमवलेपेन दर्पिता ।
कुलं च तेऽद्य धक्ष्यामि क्रोधदीप्तेन चक्षुषा ।
कुन्ती ।
प्रसीद भगवन्मह्यमवलेपो हि नास्ति मे ।
ममैव परिहार्यं स्यात्कन्याभावस्य दूषणम् ।
सूर्यः ।
व्यपयातु भयं तेऽद्य कुमारं प्रसमीक्ष्यसे ।
मया त्वं चाप्यनुज्ञाता पुनः कन्या भविष्यसि ।
वैशंपायनः ।
एवमुक्ता ततः कुन्ती संप्रहृष्टतनूरुहा ।
संगता च ततः शुभ्रादित्येन महात्मना ।

## 60

After 1. 104. 17, $D_4$ (marg. *sec. m.*). S ins.:

ततः काले तु कस्मिंश्चित्स्वप्नान्ते कर्णमब्रवीत् ।
आदित्यो ब्राह्मणो भूत्वा शृणु वीर वचो मम ।
प्रभातायां रजन्यां त्वामागमिष्यति वासवः ।
न तस्य भिक्षा दातव्या विप्ररूपी भविष्यति ।
निश्चयोऽस्यापहर्तुं ते कवचं कुण्डले तथा ।
अतस्त्वां बोधयाम्येष सत्यांसि वचनं मम ।
कर्णः ।
शक्रो मां विप्ररूपेण यदि वै याचते द्विज ।
कथं तस्मै न दास्यामि यथा चास्म्यवबोधितः ।
विप्राः पूज्यास्तु देवानां सततं प्रियमिच्छताम् ।
तं देवदेवं जानन्वै न शक्तोऽस्म्यवमन्त्रणे ।
सूर्यः ।
यद्येवं शृणु मे वीर वरं ते सोऽपि दास्यति ।
शक्तिं त्वमपि याचेथाः सर्वशत्रुविघातिनीम् ।
वैशंपायनः ।
एवमुक्त्वा द्विजः स्वप्ने तत्रैवान्तरधीयत ।
कर्णः प्रबुद्धस्तं स्वप्नं चिन्तयानोऽभवत्तदा ।

## 61

For 1. 105. 4–7, $K_4$ N B D subst.:

कुन्त्याः पाण्डोश्च राजेन्द्र कुन्तिभोजो महीपतिः ।
कृत्वोद्वाहं तदा तं तु नानावसुभिरर्चितम् ।
स्वपुरं प्रेषयामास स राजा कुरुसत्तमम् ।
ततो बलेन महता नानाध्वजपताकिना ।
स्तूयमानः स चाशीर्भिर्ब्राह्मणैश्च महर्षिभिः ।
संप्राप्य नगरं राजा पाण्डुः कौरवनन्दनः ।
न्यवेशयत तां भार्यां कुन्तीं स्वभवने प्रभुः ।

Colophon.

वैशंपायन उवाच ।
ततः शांतनवो भीष्मो राज्ञः पाण्डोर्यशस्विनः ।
विवाहस्यापरस्यार्थे चकार मतिमान्मतिम् ।

---

59

(L. 9) $D_4$ $T_2$ $G_{2,4-6}$ दास्यत्येव हि विप्रे°. — (L. 18) $T_1$ $G_1$ $M_{2,3}$ प्रसविष्यसे; $G_3$ प्राप्स्यसे शुभे.

60

(L. 9) $D_4$ $G_6$ $M_{6-8}$ प्रियं मे ($M_{6-8}$ प्रियम्) इति ब्राह्मणाः. — (L. 13) $D_4$ $G_{2,6}$ $M_6$ °शत्रुविघातिनीं; $D_5$ °शत्रुनिपातिनीं.

61

*D5* om. line 1. — For details of colophon *see* footnotes on p. 471. — (L. 37) $D_n$ $D_{1,3}$ कन्यार्थं (*for* यत°). — (L. 30) $Ñ_1$ *Dn D1* सनाथिनः (*for* सना°). — (L. 41) $K_4$ $B_{1,6}$ *Dn* $D_{2,4}$ पुरीं (*for* पुरं). $K_4$ Ñ $B_{3,4,6}$ Dn $D_{3}$ $D_{2,4}$ महतो. — (L. 49) $K_4$ Ñ *B1* $D_{n1,2}$

सोऽमात्यैः स्थविरैः सार्धं ब्राह्मणैश्च महर्षिभिः ।
बलेन चतुरङ्गेन ययौ मद्रपतेः पुरम् ।
समागतमभिश्रुत्य भीष्मं बाह्लीकपुंगवः ।
प्रत्युद्गम्यार्चयित्वा च पुरं प्रावेशयन्नृपः ।
दत्त्वा तस्यासनं शुभ्रं पाद्यमर्घ्यं तथैव च ।
मधुपर्कं च मद्रेशः पप्रच्छागमनेऽर्थिताम् ।
तं भीष्मः प्रत्युवाचेदं मद्रराजं कुरूद्वहः ।
आगतं मां विजानीहि वरार्थिनमरिंदम ।
श्रूयते भवतः साध्वी स्वसा माद्री यशस्विनी ।
तामहं वरयिष्यामि पाण्डोरर्थे यशस्विनीम् ।
युक्तरूपो हि संबन्धे त्वं नो राजन्वयं तव ।
एतत्संचिन्त्य मद्रेश गृहाणास्मान्यथाविधि ।
तमेवंवादिनं भीष्मं प्रत्यभाषत मद्रपः ।
न हि मेऽन्यो वरस्त्वत्तः श्रेयानिति मतिर्मम ।
पूर्वैः प्रवर्तितं किंचित्कुलेऽस्मिन्नृपसत्तमैः ।
साधु वा यदि वासाधु तन्नातिक्रान्तुमुत्सहे ।
व्यक्तं तद्भवतश्चापि विदितं नात्र संशयः ।
न च युक्तं तथा वक्तुं भवान्देहीति सत्तम ।
कुलधर्मः स नो वीर प्रमाणं परमं च तत् ।
तेन त्वां न ब्रवीम्येतदसंदिग्धं वचोऽरिहन् ।
तं भीष्मः प्रत्युवाचेदं मद्रराजं महामतिः ।
धर्म एष परो राजन्स्वयमुक्तः स्वयंभुवा ।
नात्र कश्चन दोषोऽस्ति पूर्वैर्विधिरयं कृतः ।
विदितेयं च ते शल्य मर्यादा साधुसंमता ।
इत्युक्त्वा स महातेजाः शातकुम्भं कृताकृतम् ।
रत्नानि च विचित्राणि शल्यायादात्सहस्रशः ।
गजानश्वान्रथांश्चैव वासांस्याभरणानि च ।
मणिमुक्ताप्रवालं च गाङ्गेयो व्यसृजच्छुभम् ।
तत्प्रगृह्य धनं सर्वं शल्यः संप्रीतमानसः ।
ददौ तां समलंकृत्य स्वसारं कौरवर्षभे ।
स तां माद्रीमुपादाय भीष्मः सागरगासुतः ।
आजगाम पुरं धीमान्प्रविष्टो गजसाह्वयम् ।
तत इष्टेऽहनि प्राप्ते मुहूर्ते साधुसंमते ।
जग्राह विधिवत्पाणिं माद्र्याः पाण्डुर्नराधिपः ।
ततो विवाहे निर्वृत्ते स राजा कुरुनन्दनः ।
स्थापयामास तां भार्यां शुभे वेश्मनि भाविनीम् ।
स ताभ्यां व्यचरत्सार्धं भार्याभ्यां राजसत्तमः ।
कुन्त्या माद्र्या च राजेन्द्रो यथाकामं यथासुखम् ।
ततः स कौरवो राजा विहृत्य त्रिदशा निशाः ।
जिगीषया महीं पाण्डुर्निश्चक्राम पुरात्प्रभो ।
स भीष्मप्रमुखान्वृद्धानभिवाद्य प्रणम्य च ।
धृतराष्ट्रं च कौरव्यं तथान्यान्कुरुसत्तमान् ।
आमन्त्र्य प्रययौ राजा तैश्चैवाभ्यनुमोदितः ।
मङ्गलाचारयुक्ताभिराशीर्भिश्चाभिनन्दितः ।
गजवाजिरथौघेन बलेन महतागमत् ।
स राजा देवराजाभो विजिगीषुर्वसुंधराम् ।
हृष्टपुष्टबलः प्रायात्पाण्डुः शत्रूननेकशः ।

62

This passage, which in the footnotes to the constituted text is said to be ins. in $G_2$ after 1. 107. 24, is not an insertion peculiar to $G_2$, but occurs, as a matter of fact, in all S MSS. and is nothing more than the S version of the account of the birth of Bhīma. An irregularity in the collation of the S MSS. was responsible for the misleading remark in the footnotes mentioned above.

63

After adhy. 107, all MSS. except $Ś_1$ $K_{0-3}$ ($V_1$ missing) ins. the foll. addl. adhy.:

जनमेजय उवाच ।
धृतराष्ट्रस्य पुत्राणामादितः कथितं त्वया ।
ऋषेः प्रसादात्तु शतं न च कन्या प्रकीर्तिता ।
वैश्यापुत्रो युयुत्सुश्च कन्या चैका शताधिका ।
गान्धारराजदुहिता शतपुत्रेति चानघ ।
उक्ता महर्षिणा तेन व्यासेनामिततेजसा ।
कथं त्विदानीं भगवन्कन्यां जातां ब्रवीषि मे ।
यदि भागशतं पेशी कृता तेन महर्षिणा ।
न प्रजास्यति चेद्भूयः सौबलेयी कथंचन ।
कथं तु संभवस्तस्या दुःशलाया वदस्व मे ।
यथार्हमिह विप्रर्षे परं मेऽत्र कुतूहलम् ।
वैशंपायन उवाच ।
साध्वयं प्रश्न उद्दिष्टः पाण्डवेय ब्रवीमि ते ।
तां मांसपेशीं भगवान्स्वयमेव महातपाः ।
शीताभिरद्भिरासिच्य भागं भागमकल्पयत् ।

$D_{1.3}$ निर(or रा)क्रामत्. — (L. 53) $B_3$ D (except $D_{2.5}$) om. च. — After line 53, $Ñ_1$ ins. (with v. l.) 1. 105. 6. — (L. 55) Dn $D_1$ देवगर्भाभो. — (L. 56) Dn $D_{1.3}$ °पुष्टबलैः.

63

(L. 2) S ऋषेर्मेतात्पुत्रशतं. [illegible] तु (for च). $T_3$ $G_{1.2}$ $M_{1.3}$ अत्र (for प्र-). — (L. 3) $K_4$ $B_3$ $T_3$ G वेश्या°. [illegible] एतदेकशतं द्विज (for the posterior half). — S om. line 4. — (L. 5)

यो यथा कल्पितो भागस्तं तं धात्र्या तदा नृप ।
घृतपूर्णेषु कुण्डेषु एकैकं प्राक्षिपत्तदा ।
एतस्मिन्नन्तरे साध्वी गान्धारी सुदृढव्रता ।
दुहितृस्नेहसंयोगमनुध्याय वराङ्गना ।
मनसाचिन्तयद्देवी एतत्पुत्रशतं मम ।
भविष्यति न संदेहो न ब्रवीत्यन्यथा मुनिः ।
ममेयं परमा तुष्टिर्दुहिता मे भवेद्यदि ।
एका शताधिका बाला भविष्यति कनीयसी ।
ततो दौहित्रजाल्लोकादबाह्योऽसौ पतिर्मम ।
अधिका किल नारीणां प्रीतिर्जामातृजा भवेत् ।
यदि नाम ममापि स्याद्दुहितैका शताधिका ।
कृतकृत्या भवेयं वै पुत्रदौहित्रसंवृता ।
यदि सत्यं तपस्तप्तं दत्तं वाप्यथवा हुतम् ।
गुरवस्तोषिता वापि तथास्तु दुहिता मम ।
एतस्मिन्नेव काले तु कृष्णद्वैपायनः स्वयम् ।
विभज्य तां तदा पेशीं भगवानृषिसत्तमः ।
गणयित्वा शतं पूर्णमंशानामाह सौबलीम् ।

व्यास उवाच ।

पूर्णं पुत्रशतं त्वेतन्न मिथ्या वागुदाहृता ।
दैवयोगादयं भाग एकः शिष्टः शतात्परः ।
एषा ते सुभगे कन्या भविष्यति यथेप्सिता ।

वैशंपायन उवाच ।

ततोऽन्यं घृतकुम्भं तु समानाय्य महातपाः ।
तं चापि प्राक्षिपत्तत्र कन्याभागं तपोधनः ।
एतत्ते कथितं राजन्दुःशलाजन्म भारत ।
ब्रूहि राजेन्द्र किं भूयो वर्तयिष्यामि तेऽनघ ।

Colophon.

64

After 1. 113. 10, D1 (*marg. sec. m.*) S ins.:

श्वेतकेतोः पिता देवि तप उग्रं समास्थितः ।
ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वाकाशगोऽभवत् ।
शिशिरे सलिलस्थायी सह पत्न्या महातपाः ।
उद्दालकं तपस्यन्तं नियमेन समाहितम् ।
तस्य पुत्रः श्वेतकेतुः परिचर्यां चकार ह ।
अभ्यागच्छद्द्विजः कश्चिद्वलीपलितसंततः ।
तं दृष्ट्वैव मुनिः प्रीतः पूजयामास शास्त्रतः ।
स्वागतेन च पाद्येन मृदुवाक्यैश्च भारत ।
शाकमूलफलाद्यैश्च वन्यैरन्यैरपूजयत् ।
क्षुत्पिपासाश्रमैरार्तः पूजितस्तु महर्षिणा ।
विश्रान्तो मुनिमासाद्य पर्यपृच्छद्द्विजस्तदा ।
उद्दालक महर्षे त्वं सत्यं मे ब्रूहि मानृतम् ।

---

S जन्मापि धृत[? read धार्त]राष्ट्रस्य उक्तमेतन्महर्षिणा. — S om. lines 6-8. — (L. 6) Ñ1.3 B4 त्वं प्र-; Ñ2 Da2 Dn D1 त्वं तु (for जातां). — (L. 9) S हि (for तु), and मनीहि (for यदस्त). — (L. 10) Om. in S. Ñ2 D (except D2.4.5) यथावदिह. — (L. 12) S तु तदा (for भगवान्), and महामुनिः (for °तपाः). — (L. 13) T G सिंचन्ती; M संसिचन् (for आसिच्य). T G अधारयत् (for अवस्पयत्). — (L. 14) S कल्प्यते भागः. T G तं तु धात्र्यस्य वै पृथक्; M तं तु धात्री पृथक्पृथक्. — (L. 15) B4 D2.4.5 M कुम्भेषु; T1 G1.4.5 चैकैकं (for कुण्डेषु). — (L. 16) Ñ1.3 सुमहामना; S सुमहायशाः. — After line 16, S ins.:

नाभ्यधीच ऋषिं किंचिद्गौरवाच्च यशस्विनी ।

— (L. 17) Om. in S. Ñ B1 Dn दुहितुः स्नेह°. — After line 17, B3 ins.:

महर्षिमब्रवीत्किंचिद्गौरवात्सा तपस्विनी ।

— (L. 19) S न चर्षिर्मापतेन्यथा (M °ते मृषा). — (L. 20) T G M3 वै (for इयं). M3.6-8 मनेन्मम परा तुष्टिः. — (L. 21) S शतस्यापि (for भविष्यति). — (L. 22) S °ब्रजाल्लोकानवाप्तः स्यात्पतिर्मम. — After line 22, S reads line 25; while D1 ins.:

अक्षुत्वं कृतमेवैनद्दुहित्रा सह संगताः ।

— (L. 23) S अधिकं, and जामातुभिः. — After line 23, D1 S (which latter om. line 24 and transp. 25) ins.:

अपत्यं युवती चापि दृष्ट्वा प्रीतिमवाप्नुयाम् ।

— (L. 25) S अहं च कृतकृत्या स्यां दुहित्रा सह संगता. — (L. 26) S वा मे (for तप) and गुरवस्तोषिता यदि. — (L. 27) S सुकृतं चेह लोकेस्ति (G1.4 M6-8 °केस्मिन्) तथा°. — (L. 29) K4 Ñ1 B4 व्यभज्यत; Ñ1.3 Da Dn D1 व्यभजत्स; D4.5 व्यभजत्तां (for विभज्य तां). S व्यभजत्सहमना विमलां पेशीं गर्भसंभवां. — (L. 30) S गण्यमानेषु कुंडेषु शते पूर्णे महात्मना. — After line 30, S ins.:

अभवच्चापरं खण्डं वामहस्ते तदा किल ।

— (L. 31) T1 कुंभं; T2 G शेषं; M शेषश्च (for होतत्). S वागुदीरिता. — (L. 32) K4 Da Dn D1.5 दौहित्रयोगाय भाग; B3 दौहित्रयोगाद्भागोयं. Ñ2 D4 परिशिष्टः; S एको दृष्टः. — (L. 33) Several MSS. सुभगा. — (L. 34) S अन्यद्. D4 S घृतकुंडं. S आनाय्य सुमहा°. — (L. 35) S प्राक्षिपत्तं तदा राजन्कन्याभागं परंतप. — After line 35, D1 (*marg. sec. m.*) S ins.:

संभूता चैव कालेन सर्वेषां च यवीयसी ।

— (L. 36) S वीर (for राजन्). Ñ1.3 चैव हि; S चैव तु (for भारत). — (L. 37) S कथये पांडुनंदन (for the posterior half). — For details of colophon see footnotes on p. 480.

ऋषिपुत्रः कुमारोऽयं दर्शनीयो विशेषतः।
तव पुत्रमिमं मन्ये कृतकृत्योऽसि तद्वद ।

उद्दालकः।

मम पत्नी महाप्राज्ञ कुशिकस्य सुता मता ।
मामेवानुगता पत्नी मम नित्यमनुव्रता ।
अरुन्धतीव पत्नीनां तपसा कर्शितस्तनी ।
तस्यां जातः श्वेतकेतुर्मम पुत्रो महातपाः ।
वेदवेदाङ्गविद्विप्र मच्छासनपरायणः ।
लोकज्ञः सर्वलोकेषु विश्रुतः सत्यवागघृणी ।

ब्राह्मणः ।

अपूर्वी भार्यया चार्थी वृद्धोऽहं मन्दचाक्षुषः ।
पित्र्यादृणाद्विनिर्मुक्तः पूर्वमेवाकृतक्रियः ।
प्रजारणी [illegible] पत्नी ते कुलशीलसमाधिनी ।
सत्वी मम गोत्रेण वहाम्येनां क्षमस्व वै ।

पाण्डुः ।

इत्युक्त्वा मृगशावाक्षीं चीरकृष्णाजिनाम्बराम् ।
पथ्याधारः समागम्य मन्दचक्षुरबुद्धिमान् ।
स्वव्यापारामक्षमां तामचिन्तामात्मनि द्विजः ।

## 65

After 1. 118. 12, Ds S ins.:

तपसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे ।
संगृह्य मातरं हस्ते श्वेतकेतुरभाषत ।
दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम् ।
अयं पिता मे ब्रह्मर्षिः क्षमावान्ब्रह्मवित्तमः ।
शापानुग्रहयोः शक्तस्तूष्णींभूतो महामतः ।
तस्य पत्नी दमोपेता मम माता विशेषतः ।
पतिव्रतां तपोवृद्धां साध्वाचारैरलंकृताम् ।
अमत्यानेन ते ब्रह्मन्मातृभूतां विमुञ्च मे ।
एवमुक्त्वा तु याचन्तं विमुञ्चेति मुहुर्मुहुः ।
प्रत्युवाच द्विजो राजन्मर्गल्भमिदं वचः ।
अपत्यार्थी श्वेतकेतो वृद्धोऽहं मन्दचाक्षुषः ।
पिता ते ऋणनिर्मुक्तस्त्वया पुत्रेण काश्यप ।
ऋणादहमनिर्मुक्तो वृद्धोऽहं विगतस्पृहः ।
मम को दास्यति सुतां कन्यां संप्राप्तयौवनाम् ।
प्रजारणीमिमां पत्नीं विमुञ्च त्वं महातपः ।
एकया प्रजया पित्रोर्मातरं ते ददाम्यहम् ।
एवमुक्तः श्वेतकेतुर्लज्जया क्रोधमेयिवान् ।

## 66

After 1. 113. 40[ab], Ds (*suppl. fol. sec. m.*) ins.:

यथासौ नीयते दण्डः सततं पापकारिषु ।
दण्डस्य नयनात्सा हि दण्डनीतिरिहोच्यते ।
भूयं स भगवान्ध्यात्वा चिरं शूलधरः प्रभुः ।
असृजत्सर्वशास्त्राणि महादेवो महेश्वरः ।
दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः ।
विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पना ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति निश्चयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ।
दश चाष्टौ च विख्यातास्ता एता धर्मस्य संहिताः ।
एतासामेव विद्यानां व्यासमाह महेश्वरः ।
शतानि त्रीणि शास्त्राणामाह तन्त्राणि सप्ततिः ।
व्यास एव तु विद्यानां महादेवेन कीर्तितः ।
तत्रं पाशुपतं नाम पाञ्चरात्रं च विश्रुतम् ।
योगशास्त्रं च सांख्यं च तन्त्रं लोकायतं तथा ।
तत्रं महालुब्धा नाम तर्कविद्या विशोकताम् ।
सुखदुःखार्थजिज्ञासाकारकश्चेति विश्रुतम् ।
तर्कविद्यास्तथा चाष्टौ सश्लोको नव विस्तरः ।
दश चाष्टौ च विज्ञेयाः पौराणी यत्र संहिताः ।
पुराणस्य प्रणीताश्च वायदेवेह संहिताः ।
धर्मशास्त्राणि तद्वाचः एकार्था नीति नान्यथा ।
एकार्थानि पुराणानि वेदाश्चैकार्थसंहिताः ।
नानार्थानि च सर्वाणि ततः शास्त्राणि शंकरः ।
प्रोवाच भगवान्देव कालज्ञानानि यानि च ।
चतुःषष्टिप्रमाणानामायुर्वेदं च सोत्तरम् ।
अष्टादशविकल्पान्तां दण्डनीतिं च शाश्वतीम् ।
गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ।
इत्येताः शांकरप्रोक्ता विद्याः शब्दार्थसंहिताः ।
पुनर्भेदसहस्रं च तासामेव [illegible] विस्तरः ।
ऋषिभिर्देवगन्धर्वैः सविकल्पः सविस्तरः ।
शश्वदभ्यस्यते लोके वेद एव च सर्वशः ।
विद्याश्चतस्रः संक्षिप्ताः वेदवादाश्च ते स्मृताः ।
एतासां पारगो यश्च स चोक्तो वेदपारगः ।
विद्यानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः ।
शक्रः स्वायंभुवश्चैव मनुः परमधर्मवित् ।

---

**64**

After line 6, Ds reads 1189*. — After line 24, ins.:

पुत्रमेकं समुत्पाद्य पितॄणामृणमोचकम् ।
प्रदास्यामि पुनस्तेऽहं पुत्रारणिमिमां [illegible] ते ।

**65**

(L. 8) T2 G1-6 M6-8 प्राणदानेन.

ब्रह्मा च परमो देवः सदा सर्वैः सुरासुरैः ।
सर्वेसानुग्रहश्चैव व्यासो वै वेदपारगः ।

भीष्म उवाच ।

अहं शांतनवो भीष्मः प्रसादान्माधवस्य च ।
शंकरस्य प्रसादाच्च ब्रह्मणश्च कुरूद्वह ।
वेदपारग इत्युक्तो याज्ञवल्क्यश्च सर्वशः ।
कल्पे कल्पे महाभागैर्ऋषिभिस्तत्त्वदर्शिभिः ।
ऋषिपुत्रैर्ऋषिगणैर्भिद्यतेऽश्रमिकैरपि ।
शिवेन ब्रह्मणा चैव विष्णुना च विकल्पिताः ।
आदिकल्पे पुनश्चैव भिद्यन्ते साधुभिः पुनः ।
इदानीमपि विद्वद्भिः भिद्यन्ते च विकल्पकैः ।
पूर्वजन्मानुसारेण बहुधेयं सरस्वती ।

## 67

After 1. 115. 28, $D_5$(suppl. fol. *sec. m.*).$_6$ (partly; and at a different place) S ins.:

जातमात्रानुपादाय शतशृङ्गनिवासिनः ।
पाण्डोः पुत्रानमन्यन्त तापसाः स्वानिवात्मजान् ।
ततस्तु वृष्णयः सर्वे वसुदेवपुरोगमाः ।
पाण्डुः शापभयाद्भीतः शतशृङ्गमुपेयिवान् ।
तत्रैव मुनिभिः सार्धं तापसोऽभूत्तपश्चरन् ।
शाकमूलफलाहारस्तपस्वी नियतेन्द्रियः ।
योगध्यानपरो राजा बभूवेति च वादकाः ।
अब्रुवन्ति स्म बहवस्तच्छ्रुत्वा शोककर्शिताः ।
पाण्डोः प्रीतिसमायुक्ताः कदा श्रोष्याम सत्कथाः ।
इत्येवं कथयन्तस्ते वृष्णयः सह बान्धवैः ।
पाण्डोः पुत्रागमं श्रुत्वा सर्वे हर्षसमन्विताः ।
सभाजयन्तस्तेऽन्योन्यं वसुदेवं वचोऽब्रुवन् ।
न भवेरन्क्रियाहीनाः पाण्डोः पुत्रा महाबलाः ।
पाण्डोः प्रियहितान्वेषी प्रेषय त्वं पुरोहितम् ।
वसुदेवस्तथेत्युक्त्वा विससर्ज पुरोहितम् ।
युक्तानि च कुमाराणां पारिबर्हाण्यनेकशः ।
कुन्तीं माद्रीं च संदिश्य दासदासीपरिच्छदम् ।
गावो हिरण्यं रूप्यं च प्रेषयामास भारत ।
तानि सर्वाणि संगृह्य प्रययौ स पुरोहितः ।
तमागतं द्विजश्रेष्ठं काश्यपं वै पुरोहितम् ।
पूजयामास विधिवत्पाण्डुः परपुरंजयः ।
पृथा माद्री च संहृष्टे वसुदेवं प्रशंसताम् ।
ततः पाण्डुः क्रियाः सर्वाः पाण्डवानामकारयत् ।
गर्भाधानादिकृत्यानि चौलोपनयनानि च ।
काश्यपः कृतवान्सर्वमुपाकर्म च भारत ।
चौलोपनयनादूर्ध्वं वृषभाक्षा यशस्विनः ।
वैदिकाध्ययने सर्वे समपद्यन्त पारगाः ।
शर्यातेः पृषतः पुत्रः शुको नाम परंतपः ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ।
अश्वमेधशतैरिष्ट्वा स महात्मा महामखैः ।
आराध्य देवताः सर्वाः पितॄनपि महामतिः ।
शतशृङ्गे तपस्तेपे शाकमूलफलाशनः ।
तेनोपकरणश्रेष्ठैः शिक्षया चोपबृंहिताः ।
तत्प्रसादाद्धनुर्वेदे समपद्यन्त पारगाः ।
गदायां पारगो भीमस्तोमरेषु युधिष्ठिरः ।
असिचर्मणि निष्णातौ यमौ सत्त्ववतां वरौ ।
धनुर्वेदे गतः पारं सव्यसाची परंतपः ।
शुकेन समनुज्ञातो मत्समोऽयमिति प्रभो ।
अनुज्ञाय ततो राजा शक्तिं खड्गं तथा शरान् ।
धनुश्च दददौ श्रेष्ठं तालमात्रं महाप्रभम् ।
विपाठक्षुरनाराचान्गृध्रपक्षानलंकृतान् ।
ददौ पार्थाय संहृष्टो महोरगसमप्रभान् ।
अवाप्य सर्वशस्त्राणि मुदितो वासवात्मजः ।
मेने सर्वान्महीपालानपर्याप्तान्स्वतेजसा ।
एकवर्षान्तरास्त्वेवं परस्परमरिंदमाः ।
अन्ववर्धन्त पार्थाश्च माद्रीपुत्रौ तथैव च ।

Then follows a *repetition* of 1. 115. 28 —a clear sign of interpolation—and a *colophon* (corresponding to the colophon of our adhy. 115). The MSS. cont.:

---

67

☞ This passage occurs also in $D_5$ (suppl. fol. *sec. m.*), which was inadvertantly omitted from the list of MSS. mentioned in the footnote to 1. 115. 28. $D_5$ ins. lines 4–44 of the passage after 1. 116. $1^{*}$, om. the rest.

(L. 3) $D_5$ *आगता यादवाः सर्वे.* — (L. 5) $D_5$ तत्रैव न्यावसत्पाण्डुः शतशृंगे महामना॰. — (L. 7) $D_5$ तपः परममास्थितः (for the posterior half). — (L. 8) $D_5$ दृष्ट्वा तु कुरुश्च शेषां पप्रच्छुरितरेतरं. — (L. 9) Some MSS. संगताः. — (L. 11) $D_5$ दिनानि कतिचित्तैस्तु स्थित्वैनं संपूजिताः. — (L. 12) $D_5$ वसुदेवपुरोगमाः. — (L. 13) $D_5$ *प्रतिजग्मुर्गृहानेव तानाहूयाथ सर्वांस्तदा.* — (L. 15) $D_5$ *ततः पुरोहितो राजन्मथुराया विनिर्गतः.* — (L. 16) $D_5$ वसुदेवाज्ञयादाय (for the prior half). — (L. 18) $D_5$ हस्त्यश्वरथयानानि वस्त्राभरणानि च. — Colophon. *Adhy. no.:* $D_5$ 123; $T_1$ 115; $T_2$ 65; G M 66. — After the colophon, $D_5$ ins.:

जनमेजय उवाच ।

कस्मिन्वयसि संप्राप्ताः पाण्डवा गजसाह्वयम् ।
समपद्यन्त देवेन्द्र तेषामनुग्रह गिरम् ।
एतदिच्छामि सर्वमस्य श्रोतुं द्विजोत्तम ।

वैशंपायन ।
पाण्डवाना तथायुस्त्व शृणु कौरवनन्दन ।
जगाम हास्तिनपुर षोडशाब्दो युधिष्ठिर ।
भीमसेन पञ्चदशो बीभत्सुर्वै चतुर्दशो ।
त्रयोदशाब्दौ च यमौ जग्मतुर्नागसाह्वयम् ।
तत्र त्रयोदशाब्दानि धार्तराष्ट्रै सहोषिता ।
षट् च मासाञ्जतुगृहान्मुक्ता जातो घटोत्कच ।
षण्मासानेकचक्रायां वर्षं पाञ्चालके गृहे ।
धार्तराष्ट्रै सहोषित्वा पञ्च वर्षाणि भारत ।
इन्द्रप्रस्थेऽवसंस्तत्र त्रीणि वर्षाणि विंशतिम् ।
द्वादशाब्दानथैक च विभ्रमच्छन्ननिर्जिता ।
भुक्त्वा षट्त्रिंशत राज्य सागरान्ता वसुंधराम् ।
मासै षड्भिर्महात्मान सर्वे कृष्णपरायणा ।
राज्ये परिक्षित स्थाप्य दृष्टा गतिमवाप्नुवन् ।
एव युधिष्ठिरस्यापि आयुरष्टोत्तर शतम् ।
अर्जुनात्केशवो ज्येष्ठस्त्रिभिर्मासैर्महाभुज ।
कृष्णात्संकर्षणो ज्येष्ठस्त्रिभिर्मासैर्महाबल ।

☞ The passage is immediately followed by 1 116 1 (*without* वैश°)

68

After 1 116 22, D4 (marg *sec m*) S ins

वैशंपायन ।
तस्यास्तद्वचन श्रुत्वा कुन्ती शोकाग्निदीपिता ।
पपात सहसा भूमौ छिन्नमूल इव द्रुम ।
निश्चेष्टा पतिता भूमौ मोहे न तु चचाल सा ।
तस्मिन्क्षणे कृतस्नानमभ्यलंकारसंवृतम् ।
अलंकारकृत पाण्डु शयान शयने शुभे ।
कुन्तीमुत्थाप्य माद्री तु मोहेनाविष्टचेतनाम् ।
एह्येहीति च ता कुन्तीं दर्शयामास कौरवम् ।
पादयो पतिता कुन्ती पुनरुत्थाय भूमिपम् ।
रक्तचन्दनदिग्धाङ्ग महारजतवाससम् ।
सस्मितेन वक्त्रेण वदन्तमिव भारतीम् ।
परिरभ्य तदा मोहाद्विललापाकुलेन्द्रिया ।
माद्री चापि समालिङ्ग्य राजान विललाप सा ।
त तथाशयिन पाण्डुमृषय सह चारणै ।
अभ्येत्य सहिता सर्वे शोकादश्रूण्यवर्तयन् ।
अस्त गतमिवादित्य संशुष्कमिव सागरम् ।
दृष्ट्वा पाण्डु नरव्याघ्र शोचन्ति स्म महर्षय ।
समानशोका ऋषय पाण्डवाश्च बभूविरे ।
ते समाश्वासिते विप्रैर्विलेपतुरनिन्दिते ।

कुन्ती ।
हा राजन्कस्य नौ हित्वा गच्छसि त्रिदशालयम् ।
हा राजन्मम मन्दाया कथ माद्रीं समेत्य वै ।
निधन प्राप्तवान्राजन्मद्भाग्यपरिसंक्षयात् ।
युधिष्ठिर भीमसेनमर्जुन च यमावुभौ ।
कस्मात्पुत्रान्प्रियान्हित्वा प्रयातोऽसि विशां पते ।
नून त्वा त्रिदशा देवा प्रतिनन्दन्ति भारत ।
यथा हि तप उग्र ते चरित विप्रसंसदि ।
आवाभ्यां सहितो राजन्गमिष्यसि दिव शुभम् ।
आजमीढाजमीढानां कर्मणा चरितां गतिम् ।
ननु नाम सहावाभ्या गमिष्यामीति नस्त्वया ।
प्रतिज्ञात कुरुश्रेष्ठ यदासि वनमागत ।
आवाभ्या त्वेव सहितो गमिष्यसि विशां पते ।
मुहूर्त क्षम्यता राजन्नारोक्ष्यावश्चितां तव ।

वैशंपायन ।
विलपित्वा भृश त्वेव ते सख्यौ पतिते भुवि ।
यथा विद्धे हते क्रौञ्चौ लुब्धैर्वनगते तथा ।
युधिष्ठिरमुखा सर्वे पाण्डवा वेदपारगा ।
तेऽप्यागत्य पितुर्मूले ते सज्ञा पतिता भुवि ।
पाण्डो पादौ परिष्वज्य विलपन्ति स्म पाण्डवा ।

— (L. 49) D4 भीम पचदशाब्दे तु मवब्दे वै धनजय , G6 M4 पचदशाब्दो भीमस्तु चतुर्दशाब्दो धनजय(!) — (L. 56) T1 G1.3 वसुतु , G6 M4 वस्तु (for विभ्रम°) D4 वने वैराटके तथा (for विभ्रम°) — After line 56, D4 (which om line 57) ins

संधौ युद्धे व्यतिक्रान्त मासषट्क नृपोत्तम ।
धनु पञ्चाशदर्षेण निशाशासुर्वसुधराम् ।

— (L. 58) D4 तपोनिष्ठा वनेभवन् (for the posterior half) — After line 58, D4 (which om line 59) ins

महाप्रस्थानिकविधौ शेष मासचतुष्टयम् ।

— (L. 60) D4 इत्येवमादित प्रोक्त (for the prior half). — (L. 62) D4 वर्षेण बलभद्रोपि कृष्णाज्ज्येष्ठ प्रकीर्तित — After line 62, S (except G1.3 6) ins.

रामो वृकोदराज्ज्येष्ठ त्रिभिर्मासैर्महाबल ।,

while D4 ins

पाण्डु पञ्च महातेजास्ता पश्य पर्वते सुतान् ।
रेमे स काननयुत पत्नीभ्यां मृतं तदा ।
यस्मिन्पक्षे समुत्पन्न पार्थस्तस्य च भीमय ।
तस्मिंस्तूत्तरफल्गुन्यां प्रवृत्ते तु महोत्सवे ।
पुरोहितेन सहितो ब्राह्मणान्पर्यदर्पयत् ।
तस्मिन्काले समाहूय स ऋषीन्संशितव्रतान् ।
पूजयामास विधिवद्गोभिर्दक्षिणया दिवे ।

68

Lines 1–9 (=1263*) are ins. in D4 after 1 116

युधिष्ठिरः ।

हा विनष्टाः स्म तातेति हा विनाथा भवामहे ।
त्वद्विहीना महाप्राज्ञ कथं वर्तेम बालकाः ।
लोकनाथस्य पुत्राः स्मो न सनाथा भवामहे ।
क्षणेनैव महाराज अहो लोकस्य विघ्नता ।
मास्मद्विधा राजपुत्रा अधन्याः सन्ति भारत ।
त्वद्विनाशाच्च राजेन्द्र राज्यप्रस्खलनात्तथा ।
बान्धवानामथाज्ञानात्प्राप्ताः स्म व्यसनं वयम् ।
किं करिष्यामहे राजन्कर्तव्यं नः प्रसीदताम् ।

भीमः ।

हित्वा राज्यं च भोगांश्च शतशृङ्गनिवासिना ।
त्वया लब्धाः स्म राजेन्द्र महता तपसा वयम् ।
हित्वा मांसं वनं गत्वा स्वयमाहृत्य भक्षणम् ।
शाकमूलफलैर्वन्यैर्भरणं वै त्वया कृतम् ।
पुत्रानुत्पाद्य पितरो यमिच्छन्ति महात्मनः ।
त्रिवर्गफलमिच्छन्तस्तस्य कालोऽयमागतः ।
अभुक्त्वैव फलं राजन्गन्तुं नार्हसि भारत ।

वैशंपायनः ।

इत्येवमुक्त्वा पितरं भीमोऽपि विललाप ह ।

अर्जुनः ।

प्रणष्टं भारतं वंशं पाण्डुना पुनरुद्धृतम् ।
तस्मिंस्तपोवनगते नष्टं राज्यं सराष्ट्रकम् ।
पुनर्निस्तारितं क्षत्रं पाण्डुपुत्रैर्महात्मभिः ।
एतच्छ्रुत्वा तु मोदित्वा गन्तुमर्हसि कौरव ।

वैशंपायनः ।

इत्येवमुक्त्वा पितरं विललाप धनंजयः ।

यमौ ।

दुःसंचयं तपः कृत्वा लब्ध्वा नौ भरतर्षभ ।
पुत्रकामस्य महतः शुश्रूषादिफलं त्वया ।
न चावाभ्यां किंचिदेव राज्यं पित्रा यथा पुरा ।

वैशंपायनः ।

एवमुक्त्वा यमौ चापि विलेपतुरथातुरौ ।

69

After 1. 116. 30, $D_4$ (marg. *sec. m.*) S ins.:

वैशंपायनः ।

ऋषयस्तान्समाश्वास्य पाण्डवान्सत्यविक्रमान् ।
ऊचुः कुन्तीं च माद्रीं च समाश्वास्य तपस्विनः ।
सुभगे बालपुत्रे तु न मर्तव्यं कथंचन ।
पाण्डवांश्चापि नेष्यामः कुरुराष्ट्रं परंतपान् ।
अधर्मेष्वर्थजातेषु धृतराष्ट्रश्च लोभवान् ।
स कदाचिन्न वर्तेत पाण्डवेषु यथाविधि ।
कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
माद्र्याश्च बलिनां श्रेष्ठः शल्यो भ्राता महारथः ।
भर्त्रा तु मरणं सार्धं फलवन्नात्र संशयः ।
युवाभ्यां दुष्करं चैतद्वदन्ति द्विजपुंगवाः ।
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
यमैश्च नियमैः श्रान्ता मनोवाक्कायजैः शुभैः ।
भर्तारं चिन्तयन्ती सा भर्तारं निस्तरेच्छुभा ।
तारितश्चापि भर्ता स्यादात्मा पुत्रैस्तथैव च ।
तस्माज्जीवितमेवैतद्युवयोर्विद्म शोभनम् ।

कुन्ती ।

यथा पाण्डोस्तु निर्देशस्तथा विप्रगणस्य च ।
आज्ञा शिरसि निक्षिप्ता करिष्यामि च तत्तथा ।
यदाहुर्भगवन्तो हि तन्मन्ये शोभनं परम् ।
भर्तुश्च मम पुत्राणां मम चैव न संशयः ।

माद्री ।

कुन्ती समर्था पुत्राणां योगक्षेमस्य धारणे ।
अस्या हि न समा बुद्ध्या यद्यपि स्यादरुन्धती ।
कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
नाहं त्वमिव पुत्राणां समर्था धारणे तथा ।
साहं भर्तारमन्विष्ये संतृप्ता न त्वहं तथा ।
भर्तृलोकस्य तु ज्येष्ठा देवी मामनुमन्यताम् ।
धर्मज्ञस्य कृतज्ञस्य सत्यसंधस्य धीमतः ।
पादौ परिचरिष्यामि तथार्ययानुमन्यताम् ।

वैशंपायनः ।

एवमुक्त्वा महाराज मद्रराजसुता शुभा ।
ददौ कुन्त्यै यमौ माद्री शिरसाभिप्रणम्य च ।
अभिवाद्य महर्षीन्सा परिष्वज्य च पाण्डवान् ।
मूर्ध्न्युपाघ्राय बहुशः पार्थानात्मसुतौ तथा ।
हस्ते युधिष्ठिरं गृह्य माद्री वाक्यमभाषत ।
कुन्ती माता अहं धात्री युष्माकं तु पिता मृतः ।

---

30 — (L. 10) $T_1$ $G_{1.3}$ $M_3$ भारत (for भारतीम्). — (L. 35) Noteworthy is the phrase पितुर्मूले! Cf. line 30 of passage No. 46. — (L. 38) $T_1$ $G_{1.2.5}$ $M_3$ जीवाम (for वर्तेम). — (L. 55) $T_1$ G (except $G_{3.5}$) $M_3$ °पुत्रैश्च पंचभिः.

69

Line 22—line 7. — After line 22, $D_4$ ins.:
न च मे तादृशी बुद्धिर्यान्यवाच्य तथा न मे ।
— (L. 35) $D_5$ वृद्धोपासनसंसक्ताः; $T_1$ $G_1$ $M_3$ वृद्धानुशासने सक्ताः; $G_3$ वृद्धाद्युपासने सक्ताः; $G_5$ वृद्धानुपासनायुक्ताः.

युधिष्ठिरः पिता ज्येष्ठश्चतुर्णां धर्मतः सदा ।
वृद्धाद्युपासनासक्ताः सत्यधर्मपरायणाः ।
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ।
तस्मात्सर्वे कुरुध्वं वै गुरुवृत्तिमतन्द्रिताः ।
ऋषीणां च पृथायाश्च नमस्कृत्य पुनः पुनः ।
आयासकृपणा माद्री प्रत्युवाच पृथां ततः ।
धन्या त्वमसि वार्ष्णेयि नास्ति स्त्री सदृशी त्वया ।
वीर्यं तेजश्च योगं च माहात्म्यं च यशस्विनाम् ।
कुन्ति द्रक्ष्यसि पुत्राणां पञ्चानाममितौजसाम् ।
ऋषीणां संनिधौ चैषा मया वागभ्युदीरिता ।
दिदृक्षमाणया स्वर्गं न ममैषा वृथा भवेत् ।
आर्या चाप्यभिवाद्या च मम पूज्या च सर्वतः ।
ज्येष्ठा वरिष्ठा त्वं देवि भूषिता स्वगुणैः शुभैः ।
अभ्यनुज्ञातुमिच्छामि त्वया यादवनन्दिनि ।
धर्मं स्वर्गं च कीर्तिं च त्वत्कृतेऽहमवाप्नुयाम् ।
यथा तथा विधत्स्वेह मा च कार्षीर्विचारणाम् ।
बाष्पसंदिग्धया वाचा कुन्त्युवाच यशस्विनी ।
अनुज्ञातासि कल्याणि त्रिदिवे संगमोऽस्तु ते ।
भर्त्रा सह विशालाक्षि क्षिप्रमद्यैव भामिनि ।
संगता स्वर्गलोके त्वं रमेथाः शाश्वतीः समाः ।
ततः पुरोहितः स्नात्वा प्रेतकर्मणि पारगः ।
हिरण्यशकलानाज्यं तिलान्दधि च तण्डुलान् ।
उदकुम्भं सपरशुं समानीय तपस्विभिः ।
अश्वमेधाग्निमाहृत्य यथान्यायं समन्ततः ।
काश्यपः कारयामास पाण्डोः प्रेतस्य तां क्रियाम् ।
पुरोहितोक्तविधिना पाण्डोः पुत्रो युधिष्ठिरः ।
तेनाग्निनादहत्पाण्डुं कृत्वा चापि क्रियास्तदा ।
दुःखशोकाभिसंतप्तः पपात भुवि पाण्डवः ।
ऋषीन्पुत्रान्पृथां चैव विसृज्य च नृपात्मजान् ।

## 70

After 1. 119. 7, $G_1$ ins.:

ततः पुत्राश्च पौत्राश्च राजानः सर्व एव हि ।
पाण्डवाः कौरवाश्चैव राज्यैश्वर्यमदान्विताः ।
पृथ्वीनिमित्तमन्योन्यं घातयिष्यन्ति निर्घृणाः ।
कुरुपाण्डवयोरर्थः पृथिवीक्षयकारणः ।
अन्योन्यं घोरमासाद्य करिष्यन्ति महीमिमाम् ।
रुधिरौघनिमग्नां च बालवृद्धावशेषिताम् ।
घोरमेनमदृष्ट्वैव कालं सर्वक्षयावहम् ।
दृष्टानन्दसुखं प्रीत्या दृष्ट्वा मातः शृणुष्व ।

## 71

After 1. 119. $30^{ab}$, $K_4$ Ñ B D ins. (cf. No. 73 below):

भक्ष्यं भोज्यं च पेयं च चोष्यं लेह्यमथापि च ।
उपाहृतं नरैस्तत्र कुशलैः सूदकर्मणि ।
न्यवेदयंस्तत्पुरुषा धार्तराष्ट्राय वै तदा ।
ततो दुर्योधनस्तत्र पाण्डवानाह दुर्मतिः ।
गङ्गां चैवानुयास्याम उद्यानवनशोभिताम् ।
सहिता भ्रातरः सर्वे जलक्रीडामवाप्नुमः ।
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ।
ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः ।
निर्ययुर्नगराच्छूराः कौरवाः पाण्डवैः सह ।
उद्यानवनमासाद्य विसृज्य च महाजनम् ।
विशन्ति स्म तदा वीराः सिंहा इव गिरेर्गुहाम् ।
उद्यानमभिपश्यन्तो भ्रातरः सर्व एव ते ।
उपस्थानगृहैः शुभ्रैर्वलभीभिश्च शोभितम् ।
गवाक्षकैस्तथा जालैर्यन्त्रैः सांचारिकैरपि ।
संमार्जितं सौधकारैश्चित्रकारैश्च चित्रितम् ।
दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीभिर्हि (!) ।
जलं तच्छुशुभे छन्नं फुल्लैर्जलरुहैस्तथा ।
उपच्छन्ना वसुमती तथा पुष्पैर्यथर्तुकैः ।
तत्रोपविष्टास्ते सर्वे पाण्डवाः कौरवाश्च ।
उपच्छन्नान्बहून्कामांस्ते भुञ्जन्ति ततस्ततः ।
अथोद्यानवरे तस्मिंस्तथा क्रीडागताश्च ते ।
परस्परस्य वक्त्रेभ्यो ददुर्भक्ष्यांस्ततस्ततः ।
ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया ।
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः ।
स वाचामृतकल्पश्च भ्रातृवच्च सुहृद्यथा ।
स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पापकृत् ।
प्रतीच्छितं च भीमेन तं वै दोषमजानता ।
ततो दुर्योधनस्तत्र हृदयेन हसन्निव ।
कृतकृत्यमिवात्मानं मन्यते पुरुषाधमः ।

---

71

$D_5$ ins various lines of this passage at different points of its text; its readings have been ignored. — (L. 2) N $B_{1.3}$ उत्पादितं; $D_{n1.n2}$ उपपादितं; $D_5$ दृष्टा पूतं. — (L. 11) $D_a$ प्रविशंति (for विशन्ति स्म). — (L. 14) $D_n$ $D_{3.4}$ यंत्रैः (for जलैः). — (L. 16) $Ñ_{2.3}$ तथा श्रीकुञ्जकैरपि; $D_2$ तथा पद्माकरैरपि. — (L. 20) Ñ $B_{1.2.3}$ $D_a$ $D_{3.4}$ उपपन्नान्. — (L. 26) $N_{1.3}$ $D_2$ भ्रातृवंशु; $N_3$ $D_n$ मदैश्च. — (L. 27) $N_3$ $D_n$ $D_1$ बहु (for चक्रे). — (L. 28) $K_4$ प्रतिक्षिप्तं; Ñ $D_n$ $D_{2.4}$ प्रतीक्षितं; $D_a$ $D_1$ प्रतिच्छिदं.

ततस्ते सहिताः सर्वे जलक्रीडामकुर्वत ।
पाण्डवा धार्तराष्ट्राश्च तदा मुदितमानसाः ।

72

After 1.119.38ab, K4 Ñ B D ins.:

हतावशेषा भीमेन सर्पा वासुकिमभ्ययुः ।
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम् ।
अधः नरो वै नागेन्द्र अप्सु बद्ध्वा प्रवेशितः ।
यथा च नो मतिर्वीर विषपीतो भविष्यति ।
निश्चेष्टोऽस्माननुप्राप्तः स च दष्टोऽन्वबुध्यत ।
ससंज्ञश्चापि संवृत्तश्छित्त्वा बन्धनमाशु नः ।
पोथयन्तं महाबाहुं तं वै त्वं ज्ञातुमर्हसि ।
ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ।
पश्यति स्म महाबाहुं भीमं भीमपराक्रमम् ।
आर्यकेण च दृष्टः स पृथाया आर्यकेण च ।
तदा दौहित्रदौहित्रः परिष्वक्तः सुपीडितम् ।
सुप्रीतश्चाभवत्तस्य वासुकिः सुमहायशाः ।
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतां प्रियम् ।
धनौघो रत्ननिचयो वसु चास्य प्रदीयताम् ।
एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।
यदि नागेन्द्र तुष्टोऽसि किमस्य धनसंचयैः ।
रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबलः ।
बलं नागसहस्रस्य यस्मिन्कुण्डे प्रतिष्ठितम् ।
यावत्पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ।
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।
प्राङ्मुखश्चोपविष्टः सन्रसं पिबति पाण्डवः ।
एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः ।
एवमष्टौ स कुण्डानि ह्यपिबत्पाण्डुनन्दनः ।
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
अशेत भीमसेनस्तु यथासुखमरिंदम ।

Colophon

वैशंपायन उवाच ।

ततस्ते कौरवाः सर्वे विना भीमं च पाण्डवाः ।
वृत्तक्रीडाविहारास्तु प्रतस्थुर्गजसाह्वयम् ।
रथैर्गजैस्तथा चाश्वैर्यानैश्चान्यैरनेकशः ।
ब्रुवन्तो भीमसेनस्तु यातो ह्यग्रत एव नः ।
ततो दुर्योधनः पापस्तत्रापश्यन्वृकोदरम् ।
भ्रातृभिः सहितो हृष्टो नगरं प्रविवेश ह ।
युधिष्ठिरस्तु धर्मात्मा अविन्दन्पापमात्मनि ।
स्वेनानुमानेन परं साधु समनुपश्यति ।
सोऽभ्युपेत्य तदा पार्थो मातरं भ्रातृवत्सलः ।
अभिवाद्याब्रवीत्कुन्तीमम्ब भीम इहागतः ।
क्व गतो भविता मातर्नेह पश्यामि तं शुभे ।
उद्यानानि वनं चैव विचितानि समन्ततः ।
तदर्थं न च तं वीरं दृष्टवन्तो वृकोदरम् ।
मन्यमानास्ततः सर्वे यातो नः पूर्वमेव सः ।
आगताः स्म महाभागे व्याकुलेनान्तरात्मना ।
इहागम्य क्व नु गतस्त्वया वा प्रेषितः क्व नु ।
कथयस्व महाबाहुं भीमसेनं यशस्विनि ।
न हि मे शुध्यते भावस्तं वीरं प्रति शोभने ।
यतः प्रसुप्तं मन्येऽहं भीमं नेति हतस्तु सः ।
इत्युक्ता च ततः कुन्ती धर्मराजेन धीमता ।
हा हेति कृत्वा संभ्रान्ता प्रत्युवाच युधिष्ठिरम् ।
न पुत्र भीमं पश्यामि न मामभ्येति स प्रभो ।
शीघ्रमन्वेषणे यत्नं कुरु तस्यानुजैः सह ।
इत्युक्त्वा तनयं ज्येष्ठं हृदयेन विदूयता ।
क्षत्तारमानाय्य तदा कुन्ती वचनमब्रवीत् ।
क्व गतो भगवन्क्षत्तर्भीमसेनो न दृश्यते ।
उद्यानान्निर्गताः सर्वे भ्रातरो भ्रातृभिः सह ।
तत्रैकस्तु महाबाहुर्भीमो नाभ्येति मामिह ।
न च प्रीणयते चक्षुः सदा दुर्योधनस्य सः ।
क्रूरोऽसौ दुर्मतिः क्षुद्रो राज्यलुब्धोऽनपत्रपः ।

72

(L. 1) N3 B6 Dn D1.5 सर्वे (for सर्पा). — (L. 3) Dn D1 ह्यप्सु. — (L. 7) Ñ B1 Dn D1 transp. तं and त्वं. — (L. 22) N1.2 B1.5 Dn D1.4 स (for सन्). — (L. 25) N3 B (except B1) D3.5 नागदत्ते. — Colophon om. in B D1.5. Adhy. no.: Dn1 D2 126; Dn2 127. Aggregate śloka no.: Dn1 5037. — (L. 33) K4 नाविंदन्; Ñ1.2 Dn ह्यविंदन्; B1 D2 अविदन्; B6 ह्यविंदन्; D5 चिंतयन्. — After line 36, D5 ins.:

नैतत्साह तदा कुन्ती ततस्ते व्यथिताभवन् ।
द्रुतं गत्वा पुरोद्यानं व्यचिन्वंत स पाण्डवाः ।
भीम भीमेति ते वाचमुच्चमुच्चैरुदीरयन् ।
विचिन्वंत वनं सर्वे न पश्यन्ति स्म मारुतिम् ।
आगताः स्वगृहं भूय इदमूचुर्वनान्तरे ।

— (L. 48) Ñ2 Dn भ्रेत्यसाविति. — After line 54, B5 ins.:

विदुर उवाच ।
द्रुतं गत्वा पुरोद्यानं चिन्वन्तु सह पाण्डवैः ।
ते तत्र गत्वा त्वरिता भीमेत्युच्चैरुदीरयन् ।
विचिन्वन्तो वनं सर्वं ते न पश्यन्ति तं जनाः ।
आगम्य नगरं भूय इत्यूचुः पृथां तदा ।
न दृश्यते महाबाहुरम्ब भीमो महाबलः ।

निहन्यादपि तं वीरं जातमन्युः सुयोधनः ।
तेन मे व्याकुलं चित्तं हृदयं दह्यतीव च ।
विदुर उवाच ।
मैवं वदस्व कल्याणि शेषसंरक्षणं कुरु ।
प्रत्यादिष्टो हि दुष्टात्मा शेषेऽपि प्रहरेत्तव ।
दीर्घायुषस्तव सुता यथोवाच महामुनिः ।
आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति ।
वैशंपायन उवाच ।
एवमुक्त्वा ययौ विद्वान्विदुरः स्वं निवेशनम् ।
कुन्ती चिन्तापरा भूत्वा सहासीना सुतैर्गृहे ।
ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः ।
तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली ।
तं दृष्ट्वा प्रतिबुद्धं तु पाण्डवं ते भुजंगमाः ।
सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन् ।
यत्ते पीतो महाबाहो रसोऽयं वीर्यसंभृतः ।
तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि ।
गच्छाद्य च त्वं स्वगृहं स्नातो दिव्यैरिमैर्जलैः ।
भ्रातरस्ते तु तप्यन्ति त्वां विना कुरुपुंगव ।
ततः स्नातो महाबाहुः शुचिः शुक्लाम्बरस्रजः ।
ततो नागस्य भवने कृतकौतुकमङ्गलः ।
ओषधीभिर्विषघ्नीभिः सुरभीभिर्विशेषतः ।
भुक्तवान्परमान्नं च नागैर्दत्तं महाबलः ।
पूजितो भुजगैर्वीर आशीर्भिश्चाभिनन्दितः ।
दिव्याभरणसंछन्नो नागानामन्त्र्य पाण्डवः ।
उदतिष्ठत्प्रहृष्टात्मा नागलोकादरिंदमः ।
उत्क्षिप्तः स [illegible] नागेन जलाज्जलरुहेक्षणः ।
तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः ।
ते चान्तर्दधिरे नागाः पाण्डवस्यैव पश्यतः ।
तत उत्थाय कौन्तेयो भीमसेनो महाबलः ।
आजगाम महाबाहुर्मातुरन्तिकमञ्जसा ।
ततोऽभिवाद्य जननीं ज्येष्ठं भ्रातरमेव च ।
कनीयसः समाघ्राय शिरःस्वरिविमर्दनः ।
तैश्चापि संपरिष्वक्तः सह मात्रा नरर्षभैः ।
अन्योन्यगतसौहार्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन् ।
ततस्तत्सर्वमाचष्ट दुर्योधनविचेष्टितम् ।
भ्रातॄणां भीमसेनश्च महाबलपराक्रमः ।
नागलोके च यद्वृत्तं गुणदोषमशेषतः ।
तच्च सर्वमशेषेण कथयामास पाण्डवः ।
ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत् ।
तूष्णीं भव न ते जल्प्यमिदं कार्यं कथंचन ।
एवमुक्त्वा महाबाहुर्धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः सर्वैरप्रमत्तोऽभवत्तदा ।

## 73

After adhy. 119, T G ins.:

वैशंपायनः ।
ततस्ते मन्त्रयामासुर्दुर्योधनपुरोगमाः ।
प्राणहा विक्रमी चापि शौर्ये च महति स्थितः ।
स्पर्धते चापि सततमस्मानेको वृकोदरः ।
तं तु सुप्तं पुरोद्याने जलशूले क्षिपामहे ।
ततो जलविहारार्थं कारयामास भारत ।
चेलकम्बलवेश्मानि चित्राणि च शुभानि च ।
तत्र संस्कारयामासुर्नानागाराण्यनेकशः ।
उदकक्रीडनार्थानि कारयामास भारत ।
प्रमाणकोट्यामुद्देशे स्थले कृत्वा परिच्छदम् ।
भक्ष्यं भोज्यं च पेयं च चोष्यं लेह्यं तथैव च ।
उपार्जितं नरैस्तत्र तथा सूदकृतं च तत् ।
न्यवेदयन्त पुरुषा धार्तराष्ट्रस्य तत्तथा ।
ततो दुर्योधनस्त्वाह पाण्डवांस्तु सुदुर्मतिः ।
गङ्गां वै यानयामोऽद्य उद्यानवनशोभिताम् ।
सहिता भ्रातरः सर्वे जलक्रीडामवाप्नुमः ।
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ।
ते रथैर्नगराकारैर्देशजैश्च हयोत्तमैः ।
निर्ययुर्नगराद्वीराः कुरवः पाण्डवैः सह ।
उद्यानवनमासाद्य संप्रसृज्य च वाहनम् ।
प्राविशंस्तु महावीर्याः सिंहा इव गिरेर्गुहाम् ।
उद्यानं स्माथ पश्यन्ति भ्रातरः सर्व एव ते ।
उपस्थानगृहैः शुद्धैर्वलभीभिश्च शोभितम् ।
गवाक्षकैस्तथा जालैर्जलसंसारकैरपि ।
सूपस्थितं सुधाकारैश्चित्रकारैश्च शिल्पिभिः ।
दीर्घिकाभिश्च पुण्याभिस्तथा कारण्डकैरपि ।
जलं तु शुशुभे छन्नं फुल्लैर्जलरुहैस्तथा ।
उपकीर्णा वसुमती तथा पुष्पैर्यथर्तुकैः ।
उपविष्टास्तदा सर्वे पाण्डवाः कुरवस्तथा ।

---

(cf. the ins. in $D_5$ given above). — (L. 61) $D_5$ दीर्घायुषः सुतास्तुभ्यं दत्ता देवैरभिष्टुतैः. — (L. 67) $N_3$ $B_5$ Dn $D_{1.5}$ प्रतिबुध्यंत. — (L. 71) $\tilde{N}_{1.3}$ $B_{3.4}$ Da $D_{4.5}$ °च स्वगृहं स्नातो दिव्यैरेभिः शुभैर्जलैः. — After line 94, $K_4$ $\tilde{N}_3$ $B_{1.3}$ D (except $D_5$) ins.:

इतः प्रभृति कौन्तेया रक्षतान्योन्यमादृताः ।

73

The first few lines of this passage are found in $D_5$ also. — (L. 2) $G_{1.4.5}$ प्राणवान्. For lines 5–6, cf. 1. 119. 39; for 7–8, cf. 1310*; for 9, cf. $30^{cd}$. Lines 10–40 are an almost verbatim repetition of lines 1–31 of passage No. 71 above. — (L. 14) $T_1$ $G_{1-3}$

उपपन्नान्बहून्कामांस्तेऽथ भुक्त्वा ततस्ततः ।
अथोद्यानवने तस्मिंस्तथा क्रीडागताश्च ते ।
परस्परस्य वक्त्रेषु ददुर्भक्ष्यांस्ततस्ततः ।
ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया ।
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः ।
सत्कृत्य भ्रातृवत्तत्र वाचा चामृतकल्पया ।
प्राक्षिपद्वै स्वयं भक्ष्यं वक्त्रे भीमस्य पापकृत् ।
प्रभक्षितं च भीमेन ह्यस्य दोषमजानता ।
ततो दुर्योधनस्तत्र हृदयेन हसन्निव ।
कृतकृत्यमिवात्मानं मेने स पुरुषाधमः ।
ततस्ते सहिताः सर्वे जलक्रीडामकुर्वत ।
दिवसान्ते परिश्रान्ता विहृत्य कुरुनन्दनाः ।
विहारायतनेष्वेव वीरा वासमरोचयन् ।
भीमस्तु बलवान्भुक्त्वा व्यायामाभ्यधिकं जले ।
वाहयित्वा कुमारांस्ताञ्जले क्रीडां महाबलः ।
प्रमाणकोट्यां वासार्थी सुष्वापारुह्य तत्स्थलम् ।
स हि तत्स्थलमासाद्य श्रान्तश्चाप्सु विशेषतः ।
श्रमेण च परीताङ्गः सुष्वाप मृतकल्पवत् ।
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः स्वयम् ।
शूलान्यप्सु निखाय्याशु स्थलाज्जलमपातयत् ।
सद्योपस्वाप संभ्रान्तो जले शूलानि पाण्डवः ।
पपात यत्र तत्रास्य शूलं नासीद्यदृच्छया ।
स निमग्नो जलस्यान्तमवाप्य पाण्डवोऽविशत् ।
आक्रम्य नागभवने तथा नागकुमारकान् ।
ततः समेत्य बहुभिस्तदा नागैर्महाविषैः ।
दश्यते पाण्डवस्तत्र विषदिग्धो महाविषैः ।
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ।
हतं सर्पविषेणाशु स्थावरं जङ्गमेन [illegible] ।
ततः प्रबुद्धः कौन्तेयः स तत्संछिद्य बन्धनम् ।
पोथयामास तान्सर्वांन्कांश्चित्प्राणैर्व्ययोजयत् ।
ते हन्यमानाः पार्थेन सर्पा वासुकिमभ्ययुः ।
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम् ।
अयं नरो वै नागेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः ।
यथा च नो मतिर्वीर विषपीतो भविष्यति ।
विनिविष्टोऽन्तरं प्राप्त स च दष्टो ह्यनेकशः ।
ससंज्ञश्चापि संवृत्तश्छित्त्वा बन्धनमाशु नः ।
पोथयानो महाबाहुस्तं वै त्वं ज्ञातुमर्हसि ।
ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ।
पश्यति स्म महानागो भीमं भीमपराक्रमम् ।
आर्यकेण च दृष्टः स पृथायाश्चार्यकेण तु ।
ततो दृष्टश्च तेनापि परिष्वक्तश्च पाण्डवः ।
सुप्रीतश्चाभवत्तस्य वासुकिः सुमहायशाः ।
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतामिति ।
प्रियं धनौघं रत्नानि यावदस्य प्रदीयताम् ।
एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।
यदि नागेन्द्र प्रीतोऽसि किमस्य धनसंचयैः ।
रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबल ।
बलं नागसहस्रस्य कुण्डे यस्मिन्प्रतिष्ठितम् ।
यावत्पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ।
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।
प्राङ्मुखश्चोपविष्टः सन्रसं पिबति पाण्डवः ।
एकोच्छ्वासात्तदा कुण्डं पिबति स्म महाबलः ।
एवमष्टौ तु कुण्डानि सोऽपिबत्पाण्डुनन्दनः ।
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
शेते स्म च तदा भीमो दिवसान्यष्ट चैव तु ।
दुर्योधनोऽपि पापात्मा भीममाशीविषह्रदे ।
प्रक्षिप्य कृतकृत्यः स आत्मानं मन्यते तदा ।
प्रभातायां रजन्यां तु वनात्प्रविविशुः पुरम् ।
वदन्तो भीमसेनस्तु यातो ह्यग्रत एव सः ।
युधिष्ठिरस्तु धर्मात्मा चिन्तयन्पापमात्मनि ।

गगामिनां न( $T_1$ च; $G_1$ प्र )यामोच — After line 16, $G_1$ ins.:

जानन्नप्यनुमेने तद्भेदबुद्धिभिया तदा ।

— After line 31, $G_1$ ins.:

नानाविधानि भक्ष्याणि भोज्यापूपानि मोदकान् ।
खेलन्तः प्रहसन्तश्च विसृजेषु कुमारकाः ।

— For line 34, $G_1$ reads

स* * क्षेपयामास स्वयमुत्थाय मित्रवत् ।
बहिर्मधुरया वाचा हृदयेन क्षुरोपमः ।

— For lines 41–49, cf. 1. 119. 31–34. — After line 48, $G_1$ ins.

खानयित्वाप्सु शूलानि प्रदेशाभ्यन्तराणि च ।

— (L. 49) $G_1$ लतापाशैर्दृढं बद्ध्वा. — For lines 52–57, cf. 1312*, for lines 58–59, cf. 1. 119. 38[ab], for 60–85, cf. lines 1–26 of passage No. 72 above. — (L. 64) $T_1$ $G_1$ विषाविष्टोंतरं प्रा°, $G_6$ निश्चेष्टोसावनुप्रा°. $G_3$: दष्टोप्यने°; $G_5$ दष्टोन्वबुध्यत. — For lines 69–71, $G_1$ subst.:

अथ वासुकिना भीमो दृष्टः स्पृष्टः सुहृत्तमः ।
परिष्वक्तश्च सस्नेहं भीमः प्रीतोऽभवत्तदा ।
वासुकिश्चापि सुप्रीतो भीममाहामृतं वचः ।

— (L. 88) $T_1$ $G_4$ प्रविवेशुः पुरं ततः. — For lines 89–93, cf. lines 30, 33–36 of passage No. 72 above. — After line 89, $G_2$ ins.:

इति स पृच्छतां नृणां कुन्त्याश्च विदुरस्य च ।

एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ।
तमागतमभिप्रेक्ष्य शृगालोऽप्यब्रवीद्वच ।
जम्बुक उवाच ।
शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ।
मृगमांसं न खादेयं गरमेतच्च रोचते ।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ।
तच्छ्रुत्वा मूषिको वाक्यं संत्रस्त प्राद्रवद्भयात् ।
तत स्नात्वा स वै तत्र आजगाम वृको नृप ।
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।
मृगराजो हि संक्रुद्धो न ते साधु भविष्यति ।
सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ।
एवं संचोदितस्तेन जम्बुकेन तदा वृकः ।
वृकावलुम्पनं कृत्वा प्रयातः पिशिताशन ।
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ।
तमुवाच महाराज नकुल जम्बुको वने ।
स्वबाहुबलमाश्रित्य निर्जितास्तेऽप्यतो गताः ।
मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ।
नकुल उवाच ।
मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः ।
निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।
न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत् ।

कणिक उवाच ।
एवं तेषु प्रयातेषु जम्बुको हृष्टमानस ।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ।
एवं समाचरन्नित्यं सुखमेधति भूमिपः ।
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन समं न्यून तथौजसा ।
एवं ते कथितं राजञ्शृणु चाप्यपरं तथा ।
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्थानेषु वर्तन्तः कर्तव्या भूतिवर्धना ।
शपथेनाप्यरिं हन्यादर्थदानेन वा पुन ।
विषेण मायया वापि नोपेक्षेत कथंचन ।
उभौ चेत्संशयोपेतौ श्रद्धावांस्तत्र वर्धते ।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ।
क्रुद्धोऽप्यक्रुद्धरूप स्यात्स्मितपूर्वाभिभाषिता ।
न चाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ।
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ।
आश्वासयेच्चापि पर सान्त्वधर्मार्थवृत्तिभि ।
अथास्य प्रहरेत्काले यदा विचलिते पथि ।
अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठत ।

T2 G हनिष्यामि. — (L. 78) T2 G खादिष्यामि तु मांसं°. — After line 79, G3 ins.:

वध्यस्व मूषिकस्येति नकुलायाब्रवीद्वच ।

— (L. 80) Om. in Ñ3 T2 G. Ñ1.2 Dn D4 °प्रेत्य — (L. 82) B1.6 D2 T1 शव (for गरं). V1 B6 Da रोचये T2 G वधमस्तद्विषस्य तत् (for the posterior half) — (L. 84) N2 Da Dn D1 °स्त प्रगतो (Da °ययौ) बिल. — (L. 85) T2 G तत स्नातस्तदा तत्र त्वाज°. — T2 G (except G1.3) om. line 86. — (L. 87) T2 G °द्धो न न° साधु करिष्यति. — (L. 90) K4 वृकोप्यनशन कृ°; Ñ1.2 V1 Dn D2.4.5 ततोवलुपन कृ°, Ñ3 वृकोदरमल कृ°, T G भीतो (T1 वृको) वरिष्ठ इत्याथ. — (L. 92) T2 G ततो राजन् (for महाराज). — (L. 93) T2 G1.2.4.5 °स्ते मया हता, G3.6 °स्ते समागता — (L. 97) K4 न त्वया उत्स°, Ñ V2 B3 Da Dn D1 T1 न त्वयाप्युत्स°, D2 न तेद्युत्स°, G1.2.6 नाहमप्युत्स°, G3 न ह्यह उत्स°, G4 न त्वद उत्स°, G5 न त्वामप्यु° K4 D1.4.5 °क्त्वा सोप्युपाक्रमत्, B1.3 °क्त्वा सावपाग°, T2 G °क्त्वा गां विवेश ह. — (L. 98) B1.3 T2 G तेष्वपयातेषु — (L. 99) T2 G (except G2.6) इत्येव मन्त्रनिश्चयात — G6 om. lines 100–102 — (L. 100) Om. in T G1-4. Ñ1.2 V1 Dn D1 एधेत. Dn भूपते. — (L. 102) T2 G (G6 om.) तस्मैनैव समोभर्ता (for the posterior half) — (L. 103) T2 G1.2.4.5 मम, G3.6 नृप (for तथा). — (L. 104) S (except G3.6) यदि पुत्रो यदि पिता यदि भ्राता सखा यदि. — (L. 105) S (except T1) अर्थे (G1 M नाम) पर्यवतिष्ठेरन्. K4 Ñ V1 B1m D2.4.5 T G1.4.5 हन्तव्या K4 Ñ V1 B1m Dn1 D2.4.5 T1 भूतिमिच्छता, B3.6 Da G1.6 भूमिवर्धना, T2 G3.4 M1.2 भूरिवर्धना. — (L. 106) S (except T1) °रिं हन्याद्दोष इति भार्गव. — S (except T1) om. line 107. — (L. 108) Om. in Ñ3 B3.6 Da D4.5 S (except T1) उभावपि शपेयातां श्रद्धावानस्तु वर्धते (M6-8 दीयते). — (L. 110) T2 G1.4-6 M6-8 स्तो, G3 M1.2 कार्ये (for न्याय्यं). T2 G1.4-6 शोभन, M6-8 शासन — (L. 111) T1 G3 M शुद्ध; T2 शक्य, G1 शश्यस, G3 सत्य, G4-6 शक्य (for स्मित) — (L. 113) K4 Ñ3 V1 B6 न चाप्यन्यायविभ्रतः; S न चैन क्रोधसंदीप्त K4 Ñ3 V1 B6 D4.5 विचाय इत्यादि वा, S विचार्य क्षिलवचन. — (L. 114) Ñ3 कृपेतेन, T1 M कृपा देनः — (L. 115) T2 G1.3.4.5 प्रिय ब्रूयात् S शोचन्निव रुदन्निव — (L. 115) Ñ2 V1 B3.5 Da T1 सान्त्वदानार्थे°; T2 G1.3.4.5 सामदान दं°; T1 G2.6 M साम्ना धर्मा°. — (L. 116) B1.6 Da आश्वस्त; T1 G2.6 M तस्य (for अथास्य) K4 Ñ3 अथ तं; T2 G1.3.4.5 तदा तं; M त्वास्तं (for अथास्य) K4 Ñ3 V1 B3.5 D2 विचरते. Ñ1 Da D1 विपन्ने; S विचरि- — (L. 117) T1 M अपकारपरायस — (L. 118) K4 T2 G1.3.4.5 अपि; G2.6 M अपि (for अपि). T2 G1.3.4.5

स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ।
यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् ।
अधनान्दाम्भिकांश्चोरान्विषये स्वे न वासयेत् ।
प्रत्युत्थानासनाद्येन संप्रदानेन येनचित् ।
प्रतिविश्रब्धघाती स्यात्तीक्ष्णदंष्ट्रो निमग्नकः ।
अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्वशः ।
अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ।
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ।
चारः सुविहितः कार्य आत्मनश्च परस्य च ।
पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ।
उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु रथ्यासु सर्वतीर्थेषु चाप्यथ ।
चत्वरेषु च कूपेषु पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ।
वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः ।
श्लक्ष्णपूर्वाभिभाषी स्यात्सृष्टो रौद्रेण कर्मणा ।
अञ्जलिं शपथं सान्त्वं शिरसा पादवन्दनम् ।
आशाकरणमित्येकं कर्तव्यं भूतिमिच्छता ।
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसंकाशो न च जीर्येत कर्हिचित् ।
त्रिवर्गे त्रिविधा पीडा अनुबन्धास्तथैव च ।
अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत् ।
धर्मं विचरतः पीडा सापि द्वाभ्यां नियच्छति ।
अर्थं स्यादर्थलुब्धस्य कामस्यातिप्रवर्तिनः ।
अगर्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता ।
अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सह ।
कर्मणा येन तेनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ।
न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ।
यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ।
योऽरिणा सह संधाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ।
मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता ।

---

घनैरर्कं (for शैलो मेघैः). — M om. lines 119–20. — (L. 119) T2 G यस्य स्यात् वधः प्राप्तस्तस्यागारोपदीपनं — (L. 120) Ñ3 B (except B6) Dn T2 नास्तिकान्, T2 G भिक्षुकान् (for दाम्भिकान्). T G विषयस्थेषु योजयेत्. — (L. 121) S (except T1 G3.6) प्रत्युत्थानाभिवादाभ्यां. — (L. 122) S प्रतिप्रच्छन्नघाती D5 S °दंष्ट्र इवोरग — (L. 123) B6 D5 S (except T1 G3 6) अशङ्कितात्स्व S (except T1 G3 6) नित्यं यत्नेन शङ्कितात् — (L. 124) T2 G (except G3 6) शङ्कितान्द्भयमुत्पन्नं समूलमपि कृन्तति — (L. 126) S (except T1) आप्नोति (for उत्पन्नं) S (except T1) तस्मात् सर्वत्र नाश्वसेत् (G1–4 सर्वान्न विश्वसेत्) — (L. 127) B1 3 T2 G1.3 4 5 चारस्तु (B1 3 °र सु) विहित यां, G3 6 चारास्तु विहिता कार्या, M (except M1) चारे सुवित्त यत्नार्थे — (L. 128) T2 G1 3 4 5 M पाषण्डादीनविज्ञातान्, G3 6 पाषण्डब्राह्मणा दींश्च — After line 128, T G (except G3.6) ins :

> स्वराष्ट्रे विदितांश्चारान्परीक्षार्थं मुहुर्मुहुः ।
> स्वकीयान्नीरदोषेषु रक्षार्थं विसृजेन्नृप ।

— (L. 130) Ñ1 V1 B Da D2 5 वेश्यासु, T2 G1–5 देवेषु, M वा राजन् S (except T1) चत्वरेषु सभासु च — (L. 131) Ñ1 2 Dn D1 कूपेषु (for द्यूतेषु). T2 G1 3 4 5 M द्यूतेषु जनपानेषु (M °नाचेषु), G3 6 ब्राह्मणायतने द्यूते — (L. 132) S (except T1) तीर्थेषु (for सर्वेषु) — (L. 134) Ñ2 V1 B3.6 Dn D1 3 4 5 T2 सित-; T2 G1 3 4 5 M मृदु-; G3 6 गुरु (for श्लक्ष्ण) B3 Da S रौद्राय कर्मणे — Ñ1 om. lines 135–146. (L. 135) K4 Ñ2 3 V1 B1 Dn D1 5 अञ्जलिं शपथं — (L. 136) T2 G1 4 5 अत्र, G3 3 6 M एतत् (for एवं) — (L. 137) M पुष्पित स्यादनारूढो. S दुरारोह फलान्वित — (L. 138) S (except T1) कस्यचित् — (L. 140) S °बंधास्तु सेवेत — (L. 141) S (except T1) धर्मोऽतिचरित पीडा सह द्वा° — (L. 142) Ñ2 B1m 3 Dn3 G3 M3 5 अर्थ चाप्यर्थं°, Da Dn2 D2 T2 G3–6 M6–8 अर्थेऽथाप्य(Da °स्य)र्थ°. Ñ2 B1m 3 Dn3 धाम चातिप्र°, S कामश्चातिप्रसंगिनः — (L. 143) S (except T1 G3 6) सांत्वशीलेन चोत्कल (M °लेन वे°क्षिता) — (L. 144) S मन्त्रयेत्तद्विधैः (T2 G3 6 °येत द्विजैः, M6–8 °येद्विविधैः) सह — (L. 145) Ñ2 V1 Dn1 n2 तेनैव, Dn2 T G1 2 4 5 M केनैव (केनापि or केनेह) G3 6 मृदुना येनकिंचिज्जन्मकर्मणा वा° — (L. 146) S (except T1 G3 6) पश्चाद्धर्मं समाचरेत् — (L. 147) T2 G (except G3 6) असंशयम् K4 Ñ1 2 Dn D1 2 S अनारुह्य (G1 3 4 5 अथारुह्य) — (L. 148) T2 G1 3 4 5 वा न वा (for पश्यति). — (L. 149) T2 G1 य सुबुद्धिं, G2 4 य सुबुध्या, G3 M6 8 यं स्वबुद्धिं, G3 ऋजुबुद्धिं G6 बुद्धिं परिभवेत्तस्मादतीतेन हि सा° — (L. 151) G3 6 वैरिणा, सविमास्याय — (L. 152) S (except T1) पतनेन (G3 M °नेव) प्रबुध्यते — T2 G1 3 4 5 ins after line 153:

> न रात्रौ मन्त्रयेद्विद्वान्न च कैश्चिदुपासितः ।
> प्रासादाग्रे शिलाग्रे वा विशाले विजनेऽपि वा ।
> समन्तात्तत्र पश्यद्भिः सहायैरेव मन्त्रयेत् ।
> नैव संवेशयेत्तत्र मन्त्रेष्वपि शारिकाम् ।
> शुकान्वा शारिका वापि बाल्मूकजडानपि ।

आकारश्चात्मनो रक्ष्यश्चारेणाप्यनुपालित ।
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ।
कर्शित व्याधित क्लिन्नमपानीयमघासकम् ।
परिविश्वस्तमन्द च प्रहर्तव्यमरेर्बलम् ।
नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति सगतम् ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ।
सग्रहे विग्रहे चैव यत्न कार्योऽनसूयता ।
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येरन्सुपर्यवसितानि च ।
भीतवत्सविधातव्य यावद्भयमनागतम् ।
आगत तु भय दृष्ट्वा प्रहर्तव्यमभीतवत् ।
दण्डेनोपनत शत्रुमनुगृह्णाति यो नर ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ।
अनागत हि बुध्येत यच्च कार्यं पुर स्थितम् ।
न तु बुद्धिक्षयात्किंचिदतिक्रामेत्प्रयोजनम् ।
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।

विभज्य देशकालौ च दैव धर्मादयस्त्रय ।
नै श्रेयसौ तु तौ ज्ञेयौ देशकालाविति स्थिति ।
तालवत्कुरुते मूल बाल शत्रुरुपेक्षित ।
गहनेऽग्निरिवोत्सृष्ट क्षिप्र सजायते महान् ।
अग्नि स्तोकमिवात्मान सधुक्षयति यो नर ।
स वर्धमानो ग्रसते महान्तमपि सचयम् ।
आशा कालवतीं कुर्यात्काल विघ्नेन योजयेत् ।
विघ्न निमित्ततो ब्रूयान्निमित्त चापि हेतुत ।
क्षुरो भूत्वा हरेत्प्राणान्निशित कालसाधन ।
प्रतिच्छन्नो लोमवाही द्विपतां परिकर्तन ।
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो न मज्जेस्त्व तथा कृत्य समाचर ।
सर्वकल्याणसपन्नो विशिष्ट इति निश्चय ।
तस्मात्त्व पाण्डुपुत्रेभ्यो रक्षात्मान नराधिप ।
भ्रातृभ्यो बलिनो यस्मात्पाण्डुपुत्रा नराधिप ।
ब्रवीमि तस्माद्विस्पष्ट यत्कर्तव्यमरिंदम ।
सपुत्र शृणु तद्राजञ्श्रुत्वा च भव यत्नवान् ।
यथा भय न पाण्डुभ्यस्तथा कुरु नराधिप ।

---

प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजै ।
नीतिशैर्योधशास्त्रज्ञैरितिहासे सुनिष्ठिते ।
रक्षा मन्त्रस्य निश्छिद्रा मन्त्रान्ते निश्चयेत्स्वयम् ।
धीरोपवर्णितात्तस्माद्धर्मार्थाभ्यामथान्यमना ।
एकेन वाथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् ।
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णेश्छिद्यते मन्त्र इति नीतिषु पठ्यते ।
नि सृतो नाशयेन्मन्त्रो हस्तप्राप्तामपि श्रियम् ।
स्वमत च परेषा च विचार्य च पुन पुन ।
गुणवद्वाक्यमादद्यान्नैव कुर्याद्विचक्षण ।

— (L. 154) $\tilde{N}_1$ 2 Dn $D_2$ $T_1$ आकारमभिरक्षेत $T_2$ G (except $G_3$ 6) M °र चात्मनो रक्ष्य $T_2$ G (except $G_{3.6}$) चारयोग्य च सर्वदा M विवृत कामनाशन — (L. 155) S (except $T_1$) दुष्कर (for दारुण) — (L. 156) $G_{1.4.5}$ प्राप्नोति महतीं लक्ष्मीं नाहत्वा मत्स्यघातवत् — (L. 157) S (except $T_1$ $G_{1.4.6}$) तृषित (for व्याधित) $T_2$ $G_{2-4}$ श्रांत $G_{1.5.6}$ M श्रात (for क्लिन्न) $T_2$ $G_{1.2.4.6}$ M विपरीतम् (for अपानीयम्) $K_4$ S (except $T_1$) अनायक (for अघा°) — (L. 158) $K_4$ $\tilde{N}_1$ $V_1$ T G °स्तमत्त च $B_{1.2.4}$ °स्तमार्ते च $D_4$ °स्तमत्त च $D_2$ मत्त च परिविश्वस्त M °स्तवत्त्य च रिपोर् (for अरेर्) — (L. 159) T G नानर्थेनार्थवांस्ति M न हि कश्चित्कृते कार्ये कर्तारं समवेक्षते — After line 159, $K_4$ ins

अनागत तु तत्सर्वं प्रयत्नेन विचारयेत् ।

— (L. 160) Dn $D_1$ 5 $T_1$ साध्यानि (for कार्याणि) — (L. 161) $T_2$ G निग्रहे (for वि°) — (L. 162) S वि($T_1$ सं)ग्रह कालयुक्तश्च — (L. 167) T G दैवेन (for दण्डेन) $K_4$ $B_1$ T G उपहत $N_2$ उपहित $V_1$ उपगत $T_2$ G सं($G_{3.6}$ प्र)गृह्णाति यदा नृप — (L. 168) $K_4$ T G उपगृह्णाति, $\tilde{N}_{1.2}$ V Dn $D_{1.4.5}$ उपगृह्णीयाद् — (L. 169) $K_4$ $T_2$ G उपस्थित — (L. 170) $K_4$ S अतिक्रान्तमपेक्षयेत् ($T_1$ $G_{1.2.5}$ °मवेक्षयेत् $M_{2.3.5}$ °मवेक्षयेत् $M_4$ °मुपेक्षयेत्) — S (except $T_1$) om line 171 which is a repetition of 162 (q. v.) — (L. 172) S ज्ञेया (for दैव) — (L. 173) S नि श्रेयसौ हि तौ ज्ञेयाविह चामुत्र च स्थितौ — (L. 174) S बलवत्कुरुते रूपं बाल्यात्कुत्सुत° — (L. 175) $T_2$ $G_{2.4.5.6}$ संपद्यते M °वर्धते — (L. 176) S पण्डित (for यो नर) — After line 177, S ins

आत्मैव वदतीनि प्रिय कुर्यान्निरर्थकम् ।
[ $T_1$ M आदातव्य न दातव्य ]

— (L. 180) $T_2$ G दहन्नेव M दहन्नेव (for हरेत्प्राणान्) $T_2$ $G_{3.5.6}$ कटुवारित $G_1$ कालमारुत $G_{3.4}$ M कटुपायन — (L. 181) Dn लोमहारी G (except $G_1$) M प्रच्छन्नो रोमवारी (M °घाती) स्यात् M द्विपतामपवारित — (L. 182) S पान्डवाश्च तथा राजन्ये चान्ये चापि कुरून्प्रति — (L. 184) Om in T $G_{2.4.5}$ M $G_{1.3.6}$ न हि कुर्यात्सगुणतां विनष्टा इति निश्चय — (L. 183) G (except $G_{3.6}$) M रिपुभ्य (for नरा°) — (L. 186) $\tilde{N}_2$ Dn $D_{1.5}$ S भ्रातृभ्या S (except $T_1$) बलवंतस्ते (for बलिनो यस्मात्) — Dn om lines 187-93 $\tilde{N}_2$ $D_1$ S (except $T_1$) om 188-9, S (except $T_1$) om.

पश्चात्तापो यथा न स्यात्तथा नीतिर्विधीयताम् ।

वैशंपायन उवाच ।

एवमुक्त्वा संप्रतस्थे कणिकः स्वगृहं ततः ।
धृतराष्ट्रोऽपि कौरव्यः शोकार्तः समपद्यत ।

Colophon.

K4 Ñ V1 B D T1 cont.:

वैशंपायन उवाच ।

ततः सुबलपुत्रस्तु राजा दुर्योधनश्च ह ।
दुःशासनश्च कर्णश्च दुष्टं मन्त्रममन्त्रयन् ।
ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपम् ।
दहने तु सपुत्रायाः कुन्त्या बुद्धिमकारयन् ।
तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान् ।
आकारेणैव तं मन्त्रं बुबुधे दुष्टचेतसाम् ।
ततो विदितवेद्यात्मा पाण्डवानां हिते रतः ।
पलायने मतिं चक्रे कुन्त्याः पुत्रैः सहानघः ।
ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
ऊर्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच ह ।
एष जातः कुलस्यास्य कीर्तिवंशप्रणाशनः ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ।
इयं वारिपथे युक्ता तरङ्गपवनक्षमा ।
नौर्यया मृत्युपाशात्त्वं सपुत्रा मोक्ष्यसे शुभे ।
तच्छ्रुत्वा व्यथिता कुन्ती पुत्रैः सह यशस्विनी ।
नावमारुह्य गङ्गायां प्रययौ भरतर्षभ ।
ततो विदुरवाक्येन नावं विक्षिप्य पाण्डवाः ।
धनं चादाय तैर्दत्तमरिष्टं प्राविशन्वनम् ।
निषादी पञ्चपुत्रा तु जातुषे तत्र वेश्मनि ।
कारणाभ्यागता दग्धा सह पुत्रैरनागसा ।
स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः ।
वञ्चिताश्च दुरात्मानो धार्तराष्ट्राः सहानुगाः ।
अविज्ञाता महात्मानो जनानामक्षतास्तथा ।
जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रितात् ।
ततस्तस्मिन्पुरे लोका नगरे वारणावते ।
दृष्ट्वा जतुगृहं दग्धमन्वशोचन्त दुःखिताः ।
प्रेषयामासु राज्ञे च यथावृत्तं निवेदितुम् ।
संवृत्तस्ते महान्कामः पाण्डवान्दग्धवानसि ।
सकामो भव कौरव्य भुङ्क्ष्व राज्यं सपुत्रकः ।
तच्छ्रुत्वा धृतराष्ट्रश्च सह पुत्रेण शोचयन् ।
प्रेतकार्याणि च तथा चकार सह बान्धवैः ।
पाण्डवानां तथा क्षत्ता भीष्मश्च कुरुसत्तमः ।

जनमेजय उवाच ।

पुनर्विस्तरतः श्रोतुमिच्छामि द्विजसत्तम ।
दाहं जतुगृहस्यैवं पाण्डवानां च मोक्षणम् ।
सुनृशंसमिदं कर्म तेषां क्रूरोपसंहितम् ।
कीर्तयस्व यथावृत्तं परं कौतूहलं मम ।

वैशंपायन उवाच ।

शृणु विस्तरतो राजन्वदतो मे परंतप ।
दाहं जतुगृहस्यैतत्पाण्डवानां च मोक्षणम् ।

82

S (except G3.6) ins. after 1444*: D4 (om. lines 21-36), after passage No. 81 above (cf. v. l. 1. 130. 1):

धृतराष्ट्रस्तु वचनं श्रुत्वा सुमहदप्रियम् ।
उवाच मतिमान्वाक्यं दुर्योधनमरिंदमम् ।
आत्मवृद्ध्याप्यहं तात पाण्डुना पूजितो भृशम् ।
राजानो यद्यपि श्रेष्ठा धर्महेतोर्भवन्ति हि ।
प्रज्ञाचक्षुरनेत्रत्वादशक्तो राष्ट्रगोपने ।
न चान्धः परचक्राणि प्रतिव्यूहति संगरे ।
अर्थशास्त्रं मयाधीतं साङ्गा वेदाश्च पुत्रक ।
धार्तराष्ट्र स्वयं राज्ञा योद्धव्यं धर्मकाङ्क्षिणा ।
रणे च मृत्युः स्वर्गाय राजन्यस्य विधीयते ।
पुत्रसंक्रामितश्रीर्वा वासाय वनमाश्रयेत् ।
ज्येष्ठोऽयमिति राज्ये च स्थापितो विकलोऽपि सन् ।
निर्जित्य परराष्ट्राणि पाण्डुर्मह्यं न्यवेदयत् ।
कुलधर्मस्थापनाय ज्येष्ठोऽहं ज्येष्ठभाक् च ।
बहूनां भ्रातॄणां (!) मध्ये श्रेष्ठो ज्येष्ठो हि श्रेयसा ।

190. — (L. 192) T2 G1.2.4.5 M तदा (M ततो) दुर्योधनो राजा; G3.6 तदा सपुत्रो राजा च. — Colophon. *Adhy. no.:* B1 T1 137; Dn2.n3 139; T2 G5 86; G1.2.6 88; G3 87; G4 M 85. — *S'loka no.:* Dn2 5635. — (L. 229) Dn D1.6 T1 वदतो (for ब्रुवतो).

82

(L. 3) M (except M8) पूर्वं (for तात). — (L. 8) D4 M धर्मकारणात्. — (L. 10) D4 M तपसे (for वासाय). T2 G1.2.4.5 om. lines 13-16. — (L. 13) M2.6 धर्मसंस्थापनार्थाय; M8 (*inf. lin.*).6-8 °धर्मं समास्थातुं. — (L. 18) D4 M लोकद्वयहितैषिणः (for the posterior half). — (L. 19) D4 M धर्मे च प्रसवे चैव ज्येष्ठाः पांडुसुतास्तदा. — M om. lines 20-21, and after line 23 ins:

ततः शांतनवो भीष्मः सत्यवाग्दृढविक्रमः ।
पूर्वमुक्त्वा तथा वाचं नाथ राज्यं ग्रहीष्यति ।
विदुरः करणत्वाच्च पाण्डवस्त्वभिषिच्यताम् ।

— (L. 24) Cf. 1. 129. 7. G1.2 M पांडवस्येव. — Lines 26-27 = 1438*. Lines 28-29 = (var.) 1. 129. 8. — L. 35 = (var.) 1. 130. 15ef.

कनीयानपि स ज्येष्ठ श्रेष्ठ श्रेयान्कुलस्य वै ।
तस्माज्ज्येष्ठश्च श्रेष्ठश्च पाण्डुर्धर्मभृतां वर ।
तस्य पुत्रा गुणै ख्याता अर्थे च कृतनिश्चया ।
कृतास्त्रा लब्धलक्षाश्च पाण्डुपुत्रा महारथा ।
धर्मे च नीतिशास्त्रे च तथा च निरता सदा ।
पौरजानपदाना च प्रीतिरेषु विशेषत ।
कथ नामोत्सहे वत्स नगराच्च विवासितुम् ।

दुर्योधन ।

पौरजानपदै सार्धं विप्रा जल्पन्ति नित्यश ।
प्रज्ञाचक्षुरनेत्रत्वादशक्तो राज्यरक्षणे ।
ते वय पाण्डवश्रेष्ठ तरुण वृद्धशीलिनम् ।
राजानमभिषिञ्चाम सत्य करुणवेदिनम् ।
स हि वृद्धानमात्याश्च ज्ञातींश्चापि महायशा ।
सत्कृत्य नित्य पूजार्हान्पाण्डव पूजयिष्यति ।
पितामह शांतनव धृतराष्ट्र च धर्मत ।
सपुत्र विविधैर्भोगैर्योजयिष्यति मानित ।
इत्येव विलपन्ति स्म वदन्ति च जना मुहु ।
राजन्दु खशताविष्टा पौरा शतसहस्रश ।
तेषां श्रुत्वा तु वाक्यानि पौराणामशिवानि च ।
युधिष्ठिरानुरक्तानां परितप्स्यामि भारत ।
धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वाक्यमुवाच ह ।
यथा न वाच्यतां पुत्र गच्छेम च तथा कुरु ।

वैशपायन ।

एव तस्य वच श्रुत्वा प्रविश्य च गृह महत् ।

☞ In M the above passage is followed by adhy 129–130, in T2 G1 4 5 by a *repetition* (with v l) of the same two adhy (for the text of the repetition of adhy 129 see under No 83 below), and finally in G1 by adhy 131! See the *conspectus of interpolations on p 573*

## 83

☞ There is a slight confusion in the notes on page 573 as regards the *repetition* of adhy 129–130 in T2 G1 4 5 to which attention must be drawn here The v l given under adhy 129–130 of the constituted text are for the first occurrence of adhy 129 and for the second occurrence of adhy 130, accordingly the texts given *here* in this App are that of the first occurrence of 130 and the second occurrence of 129

T2 G1 4 5 ins after (the *first* occurrence of) adhy 129 a passage which is a repetition (with v l) of adhy 130 (see conspectus on p 573)

वैशपायन ।

धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव सचिन्त्य दुर्योधनमथाब्रवीत् ।

धृतराष्ट्र ।

धर्मवृत्त सदा पाण्डु सुवृत्तो मयि गौरवात् ।
सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषत ।
नात्र किंचन जानाति भोजनानि चिकीर्षति ।
निवेदयति धर्मस्थो मयि धर्मभृतां वर ।
तस्य पुत्रो यथा पाण्डुस्तदा धर्मपर सदा ।
गुणवाँल्लोकविख्यातो नगरे च प्रतिष्ठित ।
स कथ शक्यतेऽस्माभिरपकर्तु नरर्षभ ।
राज्यमेष हि न प्राप्त ससहायो विशेषत ।
भृता हि पाण्डुनामात्य बल च सतत धृतम् ।
धृता पुत्राश्च पौत्राश्च तेषामपि विशेषत ।
ते तथा सत्कृतास्तात विषये पाण्डुना नरा ।
कथ युधिष्ठिरस्यार्थे न नो हन्यु सबान्धवान् ।
नैते विषयमिच्छेयुर्धर्मत्यागे विशेषत ।
ते वय कौरवेयाणामेतेषा च महात्मनाम् ।
कथ न वाच्यतां तात गच्छेम जगतस्तथा ।

दुर्योधन ।

मध्यस्थ सतत भीष्मो द्रोणपुत्रो मयि स्थित ।
यत पुत्रस्ततो द्रोणो भविता नात्र सशय ।
कृप शारद्वतश्चैव यत एव वय तत ।
भागिनेय ततो द्रौणिं न त्यक्ष्यति कथचन ।
क्षत्तार्थबद्धस्त्वस्माकु प्रच्छन्नस्तु यत परे ।
न चैक स समर्थोऽस्मत्पाण्डवार्थे प्रबाधितुम् ।
सुविस्रब्धान्पाण्डुसुतान्सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति ।
विनिद्राकरण घोर हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूत कर्मणा तेन नाशय ।

Colophon

☞ This passage is followed by passage No 81

T2 G1 4 5 ins after passage No 82 above, a passage which is a *repetition (with v l) of adhy* 129 (see conspectus on p 573)

वैशपायन ।

प्राणाधिक भीमसेन कृतविद्य धनजयम् ।
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मति ।
तथा वैकर्तन कर्ण शकुनिश्चापि सौबल ।
अनेकैरप्युपायैस्ते *निघांसन्ति* स्म पाण्डवान् ।
पाण्डवाश्चापि तत्सर्वं प्रतिचक्रुर्यथाबलम् ।
उद्भावनमकुर्वाणा विदुरस्य मते स्थिताः ।
गुणै समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयांचक्रिरे तेषां गुणान्ससत्सु भारत ।

राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा ।
कथयन्ति स्म संभूय चत्वरेषु सभासु च ।
प्रज्ञाचक्षुरचक्षुष्मान्धृतराष्ट्रो जनेश्वरः ।
राज्यं च प्राप्तवान्पूर्वं स कथं नृपतिर्भवेत् ।
तथा भीष्मः शांतनवः सत्यसंधो जितेन्द्रियः ।
प्रत्याख्याय तदा राज्यं नाद्य जातु ग्रहीष्यति ।
ते वयं पाण्डवश्रेष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वद्य सत्यं करुणवेदिनम् ।
स हि भीष्मं शांतनवं धृतराष्ट्रं च बुद्धिमान् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ।
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि भारत ।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः ।
संतप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चापि संतप्तो धृतराष्ट्रमुपागमत् ।
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य च ।
दृष्ट्वा पाण्डोः पुरावृत्तं पश्चादिदमुवाच ह ।
श्रुता मे जल्पतां वाच्यः पौराणामशिवा गिरः ।
आगतोऽहं महाप्राज्ञ पादमूलं वचः शृणु ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् ।
सौम्ये मतिश्च भीष्मस्य न च राज्यं बुभूषति ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्येति चापरः ।
ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अविज्ञाता भविष्यामो लोकस्य जगतीपते ।
सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा शीघ्रं विधीयताम् ।
अथ त्वमपि राजेन्द्र राजवंशो भविष्यसि ।
यदि हि त्वं पुरा राज्ये भवानास्थापितो नृपः ।
ध्रुवं लप्स्यामहे राज्यं वयमप्यवशेन ते ।
स तथा कुरु कौरव्य रक्ष्या वंश्या यथा वयम् ।
सैमाप्नुमः स्वयं राज्यं भजयस्व सहानुगैः ।

Colophon.

84

After 1. 134. 18, $T_1$ $G_{1.3.4}$ ins.:

दर्शयित्वा पृथग्गन्तुं न कार्यं प्रतिभाति मे ।
अशुभं वा शुभं वापि वैर्वसाम सहैव तु ।
अद्य प्रभृति चास्मासु गतेषु भयविह्वलः ।
रूढमूलो भवेद्राज्ये धार्तराष्ट्रो जनेश्वरः ।
तदीयं च भवेद्राज्यं तदीयाः स्युः प्रजा इमाः ।
तस्मात्सहैव वत्स्यामो गच्छन्त्वापदा वयम् ।
अस्माकं कालमासाद्य राज्यमाच्छिद्य शत्रुतः ।
अर्धं पैतृकमस्माकं सुखं भोक्ष्याम शाश्वतम् ।
धृतराष्ट्रवचोऽस्माभिः किमर्थमनुमन्यते ।
तेभ्यो भीत्यान्यथा गन्तुं दौर्बल्यं ते कुतो नृप ।
आपत्सु रक्षितास्माकं विदुरोऽस्ति महामतिः ।
मध्यस्थ एव गाङ्गेयो राज्यभोगपराङ्मुखः ।
बाह्लिकप्रमुखा वृद्धा मध्यस्था एव सर्वदा ।
अस्मदीयो भवेद्द्रोणः फल्गुनप्रेमसंयुतः ।
तस्मात्सहैव वस्तव्यं न गन्तव्यं पृथङ्नृप ।
अथवास्मासु ते कुर्युः किमशक्ताः पराक्रमैः ।
क्षुद्राः कपटिनो धूर्ता जानन्तु मनुजेश्वर ।
किं न कुर्युः पुरा मह्य किं न दत्तं पुरा विषम् ।
आशीविषैर्महाघोरैः सर्पैस्तैः किं न दंशितः ।
प्रमाणकोट्यां संनद्ध निद्रापरवशो मयि ।
सर्पैर्दृष्टिविषैर्घोरैर्गङ्गायां शूलसंततौ ।
किं तैर्न पातितो भूप तदा किं मृतवानहम् ।
आपत्सु च सुघोरासु दुष्प्रयुक्तासु पापिभिः ।
अस्मानरक्षयो देवो जगद्यस्य वशे स्थितम् ।
चराचरात्मकं सोऽद्य यातः क्व नु नृपोत्तम ।
यावत्सोढव्यमस्माभिस्तावत्सोढास्मि यत्नतः ।
यदा [redacted] रक्ष्यतेऽस्माभिस्तदा पश्याम नो हितम् ।
किं द्रष्टव्यं तदास्माभिर्विगृह्य तरसा बलात् ।
सान्त्ववादेन दानेन भेदेनापि यतामहे ।
अर्धराज्यस्य संप्राप्त्यै ततो दण्डः प्रशस्यते ।
तस्मात्सहैव वस्तव्यं तन्मनोर्पितशल्यवत् ।
दर्शयित्वा पृथग्वापि न गन्तव्यं सुभीतवत् ।

☞ In the footnotes to 1. 134. 17–18 it has been erroneously stated that this passage occurs in $G_{1.3}$ after stanza 17. In all four MSS. it occurs at the same place, namely, after stanza 18.

85

$K_4$ N $V_1$ B D M ins. after adhy. 136; T G, after 1. 137. 17:

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु यथासंप्रत्ययं कविः ।
विदुरः प्रेषयामास तद्वनं पुरुषं शुचिम् ।
स गत्वा [redacted] यथोद्देशं पाण्डवान्ददृशे वने ।

---

85

$G_{1.4}$ ins. after line 2: $G_6$, after line 129 of passage No. 86 below:

हत्वा तं वनकेनोके कौन्तेयोऽन्यमादितः ।

आत्मनः पाण्डवानां च विश्वास्य ज्ञानपूर्वकम् ।
गङ्गासंतरणार्थाय ज्ञानाभिज्ञानवाचकम् ।
— (L. 3) $K_4$ $\tilde{N}_3$ $D_5$ यथोद्दिष्टं; S (except $T_1$) वनोद्देशे. $K_4$ $\tilde{N}_1$ S (except $T_1$) वने प्रैक्षत ($K_4$ $\tilde{N}_1$ °पश्यत) पाण्डवान्-

जनन्या सह कौरव्य माप्यानाश्वदीजलम् ।
विदितं तन्महाबुद्धेर्विदुरस्य महात्मनः ।
ततस्तस्यापि चारेण चेष्टितं पापचेतसः ।
ततः संप्रेषितो विद्वान्विदुरेण नरस्तदा ।
पार्थानां दर्शयामास मनोमारुतगामिनीम् ।
सर्ववातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
शिवे भागीरथीतीरे नरैर्विस्रम्भिभिः कृताम् ।
ततः पुनरथोवाच ज्ञापकं पूर्वचोदितम् ।
युधिष्ठिर निबोधेदं संज्ञार्थं वचनं कवेः ।
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न हन्तीत्येवमात्मानं यो रक्षति स जीवति ।
तेन मां प्रेषितं विद्धि विश्वस्तं संज्ञयानया ।
भूयश्चैवाह मां क्षत्ता विदुरः सर्वतोऽर्थवित् ।
कर्णं दुर्योधनं चैव भ्रातृभिः सहितं रणे ।
शकुनिं चैव कौन्तेय विजेतासि न संशयः ।
इयं वारिपथे युक्ता नौरप्सु सुखगामिनी ।
मोचयिष्यति वः सर्वानस्माद्देशान्न संशयः ।
अथ तान्व्यथितान्दृष्ट्वा सह मात्रा नरोत्तमान् ।
नावमारोप्य गङ्गायां प्रस्थितानब्रवीत्पुनः ।
विदुरो मूर्ध्न्युपाघ्राय परिष्वज्य च वो मुहुः ।
अरिष्टं गच्छताव्यग्राः पन्थानमिति चाब्रवीत् ।
इत्युक्त्वा स [illegible] तान्वीरान्पुमान्विदुरचोदितः ।
तारयामास राजेन्द्र गङ्गां नावा नरर्षभान् ।
तारयित्वा ततो गङ्गां पारं प्राप्तांश्च सर्वशः ।
जयाशिषः प्रयुज्याथ यथागतमगाद्धि सः ।
पाण्डवाश्च महात्मानः प्रतिसंदिश्य वै कवेः ।
गङ्गामुत्तीर्य वेगेन जग्मुर्गूढमलक्षिताः ।

In T G this passage is followed by a *repetition* of 1. 137. 17[cd], a sure indication that it is an interpolation.

Colophon.

— (L. 4) $K_4$ $Ñ_{1.3}$ S (except $T_1$) सह मात्रा नरव्याघ्रान्. $K_4$ $Ñ_{1.3}$ $D_5$ प्रयाताञ्जाह्नवीं नदीं; $T_2$ G $M_{6.8}$ अनयञ्जाह्नवीं ततः; $M_{6-8}$ अनहीं यादवीं तदा. — After line 4, $D_4$ (marg. *sec. m.*) ins.:

उवाच चैनान्विश्वस्तं पाण्डवान्भयपीडितान् ।

— (L. 6) $N_1$ S (except T $G_3$) तत्रस्थस्यापि चा°. $K_4$ $N_1$ $D_5$ S (except $T_1$) पापानां वै चिकीर्षितं. — (L. 7) $K_4$ $Ñ_{2.3}$ $V_1$ Da $Dn_3$ $D_4$ प्रवासितो; $Ñ_1$ $D_5$ संप्रहितो. S (except $T_1$) ततो धर्मविदा तेन प्रहितः पुरुषः शिवः. — (L. 8) Om. in S (except $T_1$). $Ñ_3$ B (except $B_6$) $D_5$ पार्थान्संदर्श°. — (L. 9) $T_2$ G *सर्वगां जवनां नावं.* $T_2$ G युक्तारित्रां प°; M युक्तां चित्रप°. — (L. 10) $K_4$ $Ñ_1$ $D_5$ S (except $T_1$) विश्वास्यै($K_4$ $Ñ_1$ $D_5$ °श्वस्तै)र्मनुजैर्वृतां. S (except $T_1$), which om. lines 11–12, ins. after line 10:

पाण्डवान्दर्शयामास वचनं चेदमब्रवीत् ।

— (L. 13) S कक्षघ्न शिशिरघ्नं च महाक($G_{1-3}$ $M_2$ °कु)क्षे बिलौकसं. S (except $T_1$), which om. line 14, ins. after line 13:

बोद्धव्यमिति यत्प्राह विदुरस्तदिदं तथा ।

— (L. 15) $T_2$ G विश्वस्तं वै ($G_3$ नौरेषा तु) महात्मना; M विश्वासजननाय वै ($M_5$ विश्वासार्थमिहानघाः). — (L. 16) $T_2$ G अब्रवीच्च महाबाहुः (*or* °बुद्धिः). $K_4$ Da S (except $T_1$) सर्वधर्मवित्; $Ñ_{2.3}$ B (except $B_6$) सर्वशास्त्रवित्. — After line 16, $K_4$ $B_3$ (both with v. l.), $D_4$ S (except $T_1$) ins.:

अधिक्षिपन्धार्तराष्ट्रं सभार्यकमुदारधीः ।

— (L. 17) $K_4$ S (except $T_1$) कर्णं च दुर्मतिं क्रूरं शकुनिं चापि सौबलम्. — (L. 18) S (except $T_1$) दुर्योधनः कुलस्यास्य कीर्तिधर्मप्रणाशनः. — After line 18, $K_4$ S (except $T_1$) ins.:

गान्धारराजसहितः पितरं पातयिष्यति ।

$K_4$ S (except $T_1$) cont.: *$D_4$ ins. after line 18:*

राजा चाप्यपरिज्ञातः स्नेहबद्धो दुरात्मसु ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ।

$T_2$ G cont.:

वैशंपायनः ।

पाण्डवाश्चापि गत्वाथ गङ्गायास्तीरमुत्तमम् ।
*निषादाधिपतिं वीरं दाशं परमधार्मिकम् ।*
दीपिकाभिः कृतालोकं मार्गमाणं च पाण्डवान् ।
ददृशुः पाण्डवेयास्ते नाविकं त्वरयान्वितम् ।
*निषादस्तत्र कौन्तेयानभिज्ञाने न्यवेदयत् ।*
विदुरस्य महाबुद्धेर्म्लेच्छभाषादि यत्तदा ।

नाविकः ।

विदुरेणास्मि संदिष्टो दत्त्वा बहु धनं महत् ।
गङ्गातीरे निविष्टस्त्वं पाण्डवांस्तारयेति ह ।
सोऽहं चतुर्दशीमद्य गङ्गाया अविदूरतः ।
चारैरन्वेषयाम्यस्मिन्वने मृगगणान्विते ।
*प्रभवन्तोऽद्य भद्रं वो नावमारुह्य गम्यताम् ।*
युक्तारित्रपताकां च निश्छिद्रां मन्दिरोपमाम् ।

— (L. 19) $K_4$ S (except $T_1$) तथैव (for नौरप्सु). — (L. 20) S (except $T_1$) मृत्युपाशात्समागतान्. — (*L.* 21) $K_4$ S (except $T_1$) तनस्तान् व्यथितान् (M सहितान्) सर्वान्सह मात्रा परंतपान्. — (L. 22) $K_4$ S (except $T_1$) प्रयातः ($K_4$ M प्रयातान्) पुनरब्रवीत्. — (L. 23) $K_4$ मुहुः; $Ñ$ $V_1$ Dn $D_{1.2.4}$ वचो (for च वो). — *After line 24,* $T_2$ G ins.:

86

After 1. 137. 16, S ins.:

ततः प्रव्यथितो भीष्मः पाण्डुराजसुतान्मृतान् ।
मात्रा सहेति तान्श्रुत्वा विललाप रुरोद च ।
हा युधिष्ठिर हा भीम हा धनंजय हा यमौ ।
हा पृथे सह पुत्रैस्त्वमेकाग्रेण स्वर्गता ।
मात्रा सह कुमारास्ते सर्वे तत्रैव संस्थिताः ।
न हि तौ नोत्सहेयातां भीमसेनधनंजयौ ।
तरसा वेगितात्मानौ निर्भेत्तुमपि मन्दिरम् ।
पराङ्मुखं न पश्यामि पृथायाः सह पाण्डवैः ।

(Here follows a colophon in M MSS. only.)

T G cont.:

सर्वथा विकृतं तत्तु यदि ते निधनं गताः ।
धर्मराजः स निर्दिष्टो ननु विप्रैर्युधिष्ठिरः ।
पृथिव्यां चरतां श्रेष्ठो भविता स धनंजयः ।
सत्यव्रतो धर्मदत्तः सत्यवाक्शुभलक्षणः ।
कथं कालवशं प्राप्तः पाण्डवेयो युधिष्ठिरः ।
आत्मानमुपमां कृत्वा परेषां वर्तते तु यः ।
सह मात्रा तु कौरव्यः कथं कालवशं गतः ।
परिपालितश्चिरं कालं फलकाले यथा द्रुमः ।
भग्नः स्याद्वायुवेगेन तथा राजा युधिष्ठिरः ।
यौवराज्याभिषिक्तेन पितुर्येनाहृतं यशः ।
आत्मनश्च पितुश्चैव सत्यधर्मार्यवृत्तिभिः ।
स ब्रह्मण्यः परप्रेक्षी हृदि शोकं निधाय मे ।
कालेन स हि संभग्नो धिक्कृतान्तमनर्थदम् ।
यच्च सा वनवासेन क्लेशिता दुःखभागिनी ।
पुत्रगृध्नुतया कुन्ती न भर्तारं मृता त्वनु ।
अल्पकालं कुले जाता भर्तुः प्रीतिमवाप या ।
दग्धाद्य सह पुत्रैः सा असंपूर्णमनोरथा ।
एतच्च चिन्तयानस्य बहुधा व्यथितं मनः ।
अवधूय च मे देहं हृदयेऽग्निर्न दीर्यते ।
पीनस्कन्धश्चारुबाहुर्मेरुकूटसमो युवा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ।
अतित्यागी च योगी च क्षिप्रहस्तो दृढायुधः ।
प्रवृत्तिमाँल्लब्धलक्ष्यो रथयानविशारदः ।
दूरपाती त्वसंभ्रान्तो महावीर्यो महास्त्रवित् ।
अदीनात्मा नरव्याघ्रः श्रेष्ठः सर्वधनुष्मताम् ।
येन प्राच्यास्तु सौवीरा दाक्षिणात्याश्च निर्जिताः ।
ख्यापितं येन शूरेण त्रिषु लोकेषु पौरुषम् ।
यस्मिञ्जाते विशोकाभूत्कुन्ती पाण्डुश्च वीर्यवान् ।
पुरंदरसमो जिष्णुः कथं कालवशं गतः ।
कथं तौ वृषभस्कन्धौ सिंहविक्रान्तगामिनौ ।
मर्त्यधर्ममनुप्राप्तौ यमावरिनिबर्हणौ ।

वैशंपायनः ।

तस्य विक्रन्दितं श्रुत्वा उदर्कं च प्रसिद्धनः ।
देशकालं समाज्ञाय विदुरः प्रत्यभाषत ।
मा शोचस्त्वं नरव्याघ्र जहि शोकं महाव्रत ।
न तेषां विद्यते पापं प्राप्तकालं कृतं मया ।
तच्च तेभ्यः स उदर्कं विप्रपिब्रत्तु भारत ।
सोऽब्रवीत्किंचिदुत्थाय कौरवाणामशृण्वताम् ।
क्षत्तारमनुसंगृह्य बाष्पोत्पीडकलस्वरः ।

भीष्मः ।

कथं ते तात जीवन्ति पाण्डोः पुत्रा महारथाः ।
कथमस्मत्कृते पक्षः पाण्डोर्न हि निपातितः ।

---

इत्युक्त्वा तान्समारोप्य तारयामास पाण्डवान् ।

— (L. 25) S (except T1) इत्युक्ताः सह मात्रा ते तस्मान्मुक्ता महाभयात्. — S (except T1) om. lines 26–29. — (L. 30) K4 च शूरो; S (except T1) कौन्तेयाः (for येन). K4 S (except T1) वनं जग्मुर्यथाद्रुतं (G1, 3 °र्महानिशि). — After line 30, T2 G ins.:

ततस्तां तत्र तीर्त्वा तु गङ्गां भागीरथीं नदीम् ।

— T G om. colophon.

86

In G1, 3, 4 the passage is preceded by:

विदुरो धृतराष्ट्रस्य जानन्सर्वं मनोगतम् ।
केनायं विधिना सृष्टः कौटिल्यः कपटालयः ।
इत्येवं चिन्तयन्प्राज्ञो विदुरो विदुषां वरः ।
लोकानां दर्शयन्दुःखं दुःखितैः सह बन्धुभिः ।
मनसा चिन्तयन्पार्थान्नित्यदूरं गमिष्यति ।
सहिता पाण्डवैः पुत्रैरिति चिन्तापरोऽभवत् ।

— (L. 11) T1 G1 °व्यां च नरश्रेष्ठो; G3, 5, 6 °व्यां च रथश्रेष्ठो.
— After line 39, T1 G1, 3, 4 ins.:

क्व गता वत्सा मां वृद्धं विहाय भृशमातुरम् ।
हा कुन्ते वत्से वार्ष्णेयि निधाय हृदि मे शुचम् ।
वारणावतयात्रायां के त्वधुः शकुनाः पथि ।
एवमल्पायुषो लोके भविष्यन्ति पृथासुताः ।
संशप्ता इति कैर्यूयं वत्सान्दर्शय मे विभो ।
ममैव नाथा मन्नाथा मम नेत्राणि पाण्डवाः ।
हा पाण्डवा मे हा वत्सा हा सिंहशिशवो मम ।
भ्रातरो हा मदोत्सृक्ता हा ममानन्दवर्धनाः ।
मम हीनस्य युष्माभिः सर्वे लोकास्तमोवृताः ।
कदा द्रक्ष्यामि कौन्तेयांस्तरुणादित्यवर्चसः ।
दृष्ट्वा युष्मान्कदा रंस्ये पूर्ववन्मम नन्दनाः ।
का गतिर्मे क्व यास्यामि कुतो द्रक्ष्यामि मे शिशून् ।
हा युधिष्ठिर हा भीम हा हा फल्गुन हा यमौ ।

कथं मत्प्रमुखाः सर्वे प्रमुक्ता महतो भयात्।
जननी गरुडेनेव कुमारास्ते समुद्धृताः ।

वैशंपायनः ।

एवमुक्तस्तु कौरव्य कौरवाणामशृण्वताम् ।
आचचक्षे स धर्मात्मा भीष्मायाद्भुतकर्मणे ।

विदुरः ।

धृतराष्ट्रस्य शकुने राज्ञो दुर्योधनस्य च ।
विनाशे पाण्डुपुत्राणां कृतो मतिविनिश्चयः ।
तत्राहमपि च ज्ञात्वा तस्य पापस्य निश्चयम् ।
न जिघांसुरहं चापि तेषामनुमते स्थितः ।
ततो जतुगृहं गत्वा दहनेऽग्निनियोजिते ।
दुष्प्राप्य सद्गुनस्य धार्तराष्ट्रस्य शासनात् ।
ततः खनकमाहूय सुरङ्गां मे बिले तदा ।

सगुहां कारयित्वा ते कुन्त्या पाण्डुसुतास्तदा ।
निष्कासिता मया पूर्वं मा स्म शोके मनः कृथाः ।
ततस्तु नावमारोप्य सहपुत्रां पृथामहम् ।
दत्त्वाभयं सपुत्रायै कुन्त्यै गृहमदाहयम् ।
तस्मात्ते मा स्म भूद्दुःख मुक्ताः पापात्तु पाण्डवाः ।
निर्गताः पाण्डवा राजन्मात्रा सह परंतपाः ।
अग्निदाहान्महाघोरान्मया तस्मादुपायतः ।
मा स्म शोकमिमं कार्षीर्जीवन्त्येव च पाण्डवाः ।
प्रच्छन्ना विचरिष्यन्ति यावत्कालस्य पर्ययः ।
तस्मिन्युधिष्ठिरं काले द्रक्ष्यन्ति भुवि मानवाः ।
विमलं कृष्णपक्षान्ते जगच्चन्द्रमिवोदितम् ।
न तस्य नाशं पश्यामि यस्य भ्राता धनंजयः ।
भीमसेनश्च दुर्धर्षो माद्रीपुत्रौ च भारत ।

Colophon

मा गच्छत निवर्तध्वं मयि कोपः विमुच्यताम् ।

— After line 48, $T_1$ ins.

कथं पश्चात्त्वया क्षत्तः पाण्डोः पक्षः समुद्धृतः ।;

while $G_3$ ins.

कथं तव कृतः पक्षः पाण्डोर्नापि निपातितः ।

— For line 67, $G_1$ reads:

भवान्भीष्म मनः शोकं मा कार्षीः पाण्डवान्प्रति ।
मुक्ता जतुगृहादग्नेः सम्यग्जीवन्ति पाण्डवाः ।

— After line 72, $G_{3.6}$ ins. a colophon (*Adhy.* no. $G_3$ 94, $G_6$ 95), while T $G_{1.2.4.5}$ ins.

वैशंपायनः ।

ततः संहृष्टसर्वाङ्गो भीष्मो विदुरमब्रवीत् ।
युक्तं चैवानुरूपं च कृतं तात शुभं त्वया ।
वयं विमोक्षिता [illegible]खात्पाण्डुपक्षो न नाशितः ।
एवमुक्त्वा विवेशाथ पुरं जनशताकुलम् ।
कुरुभिः सहितो राजा नागरैश्च पितामहः ।
अथाग्निकेय सामात्य सवर्णं सहसौबल ।
सात्मज धार्तराष्ट्रस्य सरोषत्वं महर्षं च ।
भीष्मस्तु राजन्दुर्धर्षो विदुरश्च महामतिः ।
जहर्षाते स्मरन्तौ तौ जातुषाग्नेर्विमोचनम् ।
सत्यशीलगुणाचारे राष्ट्रे जानपदोद्भवे ।
द्रोणादयस्तु धर्मैश्च तेषां तान्मोचितान्विदुः ।
शौर्यलावण्यमाहात्म्यैः रूपैः प्राणबलैरपि ।
स्मरन्पार्थानमन्यन्त पौरजानपदास्तदा ।
अन्ये जनाः प्राकृताश्च स्त्रियश्च बहुधा तथा ।
शङ्कमाना वदन्ति स्म दग्धा जीवन्ति वा न वा ।

Here follows a colophon.

— T $G_{1.2.4}$ cont.:

वैशंपायनः ।

पाण्डवान्महतो दाहान्मोचयित्वा महामते ।
म्रियमाणं महाक्लेशैर्भवान्मां समजीवयत् ।
प्रच्छन्ना विचरिष्यन्तो यथोक्तं भवता तदा ।
न व्यक्तं तत्त्वया तात यत्र कुत्रापि न क्वचित् ।
इतोऽपि प्रेषयित्वाशान्योगक्षेमं विचारय ।
दूराद्दूरतरं पार्थान्प्रस्थापय वनाद्वनम् ।
तत्र तत्र प्रेषयित्वा दूतानाशाग्शुभास्तव ।
योगक्षेमं पाण्डवानां गूढं सम्यग्विचारय ।
भीष्मेणेत्थं समादिष्टो विदुरः खनकं पुनः ।
गुप्तं स प्रेषयामास खनकं जनमेजय ।
सोऽपि गत्वा पृथापुत्रान्दृष्ट्वा सिद्धवटे तदा ।
म्लेच्छभाषां वदन्नेव विदुरेण प्रचोदितम् ।
राज्ञी पाण्डुसुतान्दृष्ट्वा सान्त्वयित्वा वचोऽब्रवीत् ।

खनकः ।

आयुष्मद्भिर्न भेतव्यं भवद्भिः कौरवा न हि ।
जानन्ति जीवतो युष्मान्निश्चितोऽभूद्वनं गतौ ।
जानाति युष्मान्गाङ्गेयो विदुरेण प्रबोधितः ।
शनैः शनैश्च गन्तव्यं न भीत्या त्वरया न च ।
दक्षिणां दिशमास्थित्य वटवानमुत्तमम् ।
विद्यते भारतश्रेष्ठास्तत्र गच्छन्तु निर्भयाः ।
सर्वप्रवास एवावान्भवता पुण्यशीलिनाम् ।
क्षमावता च युष्माकं शुभोदर्कं भविष्यति ।
इत्याह विदुरो युष्मान्मया सत्कथितं शुभाः ।
युष्मभ्यं यामि भद्रं वो गच्छतारिष्टमार्गगाः ।

वैशंपायनः ।

निवृत्ते खनकेनेत्थं पाण्डवा जनमेजय ।
किमकुर्वत ते सर्वे शृणु राजन्पितामह ।

## 87

**After 1. 143. 15, S ins.:**

महतोऽत्र स्त्रियं कामाद्बाधितां त्राहि मामपि ।
धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधवः ।
तं तु धर्ममिति प्राहुर्मुनयो धर्मवत्सलाः ।
दिव्यज्ञानेन पश्यामि अतीतानागतानहम् ।
तस्माद्वक्ष्यामि वः श्रेय आसन्नं सर उत्तमम् ।
अद्यासाद्य सरः स्नात्वा विश्रम्य च वनस्पतौ ।
श्वः प्रभाते महद्भूतं प्रादुर्भूतं जगत्पतिम् ।
व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ ।
धृतराष्ट्राद्द्विवासश्च दहनं वारणावते ।
त्राणं च विदुरात्तुभ्यं विदितं ज्ञानचक्षुषा ।
आवासे शालिहोत्रस्य स वो वासं विधास्यति ।
वर्षवातातपसहः अयं पुण्यो वनस्पतिः ।
पीतमात्रे तु पानीये क्षुत्पिपासे विनश्यतः ।
तपसा शालिहोत्रेण सरो वृक्षश्च निर्मितः ।
कादम्बाः सारसा हंसाः कुरर्यः कुररैः सह ।
रुवन्ति मधुरं गीतं गान्धर्वस्वनमिश्रितम् ।

वैशंपायनः ।

तस्यास्तद्वचनं श्रुत्वा कुन्ती वचनमब्रवीत् ।
युधिष्ठिरं महाप्राज्ञं सर्वशास्त्रविशारदम् ।
त्वं हि धर्मभृतां श्रेष्ठ मयोक्तं शृणु भारत ।
राक्षस्येषा हि वाक्येन धर्मं वदति साधु वै ।
भावेन दुष्टा भीमं सा किं करिष्यति राक्षसी ।
भजतां पाण्डवं वीरमपत्यार्थं यदीच्छसि ।

## 88

**After 1. 143. 18, S ins.:**

प्राक् संध्यातो विमोक्तव्यो रक्षितव्यश्च नित्यशः ।
पूर्वं रमस्व भीमेन यावद्गर्भस्य वेदनम् ।
एष ते समयो भद्रे शुश्रूष्यश्चाप्रमत्तया ।
नित्यानुकूलया भूत्वा कर्तव्यं शोभनं त्वया ।

Colophon.

वैशंपायनः ।

युधिष्ठिरेणैवमुक्ता कुन्त्या चाङ्केऽधिरोपिता ।
भीमार्जुनान्तरगता यमाभ्यां च पुरस्कृता ।
तिर्यग्युधिष्ठिरे याति हिडिम्बा भीमगामिनी ।

शालिहोत्रसरो रम्यमासेदुस्ते जलार्थिनः ।
तथेति प्रतिज्ञाय हिडिम्बा राक्षसी तदा ।
वनस्पतितलं गत्वा परिमृज्य गृहं यथा ।
पाण्डवानां च वासं सा कृत्वा पर्णमयं तथा ।
आत्मनश्च तथा कुन्त्या एकोद्देशे चकार सा ।
पाण्डवास्तु ततः स्नात्वा शुद्धाः संध्यामुपास्य च ।
तृषिताः क्षुत्पिपासार्ता जलमात्रेण वर्तयन् ।
शालिहोत्रस्तदा ज्ञात्वा क्षुधार्तान्पाण्डवांस्तदा ।
मनसा चिन्तयामास पानीयं भोजनं महत् ।
ततस्ते पाण्डवाः सर्वे विश्रान्ताः पृथया सह ।
यथा जतुगृहे वृत्तं राक्षसेन कृतं च यत् ।
कृत्वा कथा बहुविधाः कथान्ते पाण्डुनन्दनम् ।
कुन्ती राजसुता वाक्यं भीमसेनमथाब्रवीत् ।
यथा पाण्डुस्तथा मान्यस्तव ज्येष्ठो युधिष्ठिरः ।
अहं धर्मविधानेन मान्या गुरुतरी तव ।
तस्मात्पाण्डुहितार्थं मे युवराज हितं कुरु ।
निकृता धार्तराष्ट्रेण पापेनाकृतबुद्धिना ।
दुष्कृतस्य प्रतीकारं न पश्यामि वृकोदर ।
तस्मात्कतिपयाहेन योगक्षेमं भविष्यति ।
क्षेमं दुर्गमिमं वासं वसिष्यामो यथासुखम् ।
इदमद्य महद्दुःखं धर्मकृच्छ्रं वृकोदर ।
दृष्ट्वैव त्वां महाप्राज्ञ अनङ्गेनाभिचोदिता ।
युधिष्ठिरं च मां चैव वरयामास धर्मतः ।
धर्मार्थं देहि पुत्रं त्वं स नः श्रेयः करिष्यति ।
प्रतिवाक्यं [illegible] नेच्छामि ज्ञावाभ्यां वचनं कुरु ।

## 89

**After 1. 143. 26, D4 S ins.:**

यथा च सुकृती स्वर्गे मोदतेऽप्सरसा सह ।
स तथा परमप्रीतस्तया रेमे महाद्युतिः ।
शुभं हि जघनं तस्याः सुवर्णमणिमेखलम् ।
न ततर्प मुदा मृद्नन्भीमसेनो मुहुर्मुहुः ।
रमयन्ती ततो भीमं तत्र तत्र मनोजवा ।
सा रेमे तेन संहर्षादतृप्यन्ती मुहुर्मुहुः ।
अहःसु विचरन्ती सा निशाकालेषु पाण्डवम् ।
आनीय वै स्वके गेहे दर्शयामास मातरम् ।
भ्रातृभिः सहितो नित्यं स्वपते पाण्डवस्तदा ।
कुन्त्याः परिचरन्ती सा तस्याः पार्श्वेऽवसन्निशाम् ।

---

**88**

M om. lines 1–4 and the colophon. — For the details of the colophon cf. v. l. 1. 143. 18. — For lines 5–7, M subst.:

एवमुक्त्वा तदा तत्र हिडिम्ब्या सह भारत ।

**89**

M om. lines 1–6. — (L. 5)=(var.) 1. 143. $27^{ab}$. — (L. 7) G1.2 M रमयंती (for विचरन्ती).

कामांश्च मुखवासादीनानयिष्यति भोजनम् ।
तस्यां रात्र्यां व्यतीतायामाजगाम महाव्रतः ।
पाराशर्यो महाप्राज्ञो दिव्यदर्शी महातपाः ।
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयः सर्वे सस्नुषा चैव माधवी ।

## 90

This passage was found to be only a *repetition* (with v. l.) of 1. 145. 25–37, and is therefore not cited here *in extenso*. The passage is followed by a colophon (*adhy. no.* 61).

## 91

After 1. 148. 5, S ins.:

पुरुषादकेन रौद्रेण भक्ष्यमाणा दुरात्मना ।
अनाथा नगरी नाथं त्रातारं नाधिगच्छति ।
गुहायां च वसंस्तत्र बाधते सततं जनम् ।
स्त्रियो बालांश्च वृद्धांश्च यूनश्चापि दुरात्मवान् ।
अथ मन्त्रैश्च होमैश्च भोजनैश्च स राक्षसः ।
ईडितो द्विजमुख्यैश्च पूजितश्च दुरात्मवान् ।
यदा च सकलानेवं प्रसूदयति राक्षसः ।
अथैनं ब्राह्मणाः सर्वे समये समयोजयन् ।
मास्मान्कामाद्वधी रक्षो वास्यामस्ते सदा वयम् ।
पर्यायेण यथाकाममिह मांसोदनं प्रभो ।
अन्नं मांससमायुक्तं तिलचूर्णसमन्वितम् ।
सर्पिषा च समायुक्तं व्यञ्जनैश्च विभूषितम् ।
स्रजश्चित्रास्तिलान्पिण्डाँल्लाजापूपसुरासवान् ।
शृताशृतान्पानकुम्भान्स्थूलमांसं शृताशृतम् ।
सर्पिःकुम्भांश्च विविधानन्यांश्च विविधान्बहून् ।
अथ सिद्धैः समायुक्तैस्तिलचूर्णैः समाकुलान् ।
कुल्माषकुलत्थ पुरुषं बलीवर्दौ च कालकौ ।
प्राप्स्यसि त्वमसंक्रुद्धो रक्षोभागं प्रकल्पितम् ।
तिष्ठेह समयेऽस्माकमित्ययाचन्त तं द्विजाः ।
बाढमित्येव तद्रक्षस्तद्वचः प्रत्यगृह्णत ।
परचक्राच्च बिभ्यंश्च रक्षणं स करोति च ।
तस्मिन्भागे विनिर्दिष्टे चास्थितः समयं बली ।

## 92

For 1. 151. 1, Ds (see footnotes) S subst.:

वैशंपायनः ।

अथ रात्र्यां व्यतीतायां भीमसेनो महाबलः ।
ब्राह्मणं समुपागम्य वाक्यं चेदमुवाच ह ।

भीमसेनः ।

आपदस्त्वां मोचयेयं सपुत्रं ब्राह्मणप्रिय ।
मा भैषी राक्षसात्तस्मान्मां ददातु बलिं भवान् ।
इह मामाशितं कर्तुं प्रयतस्व द्विजोत्तम ।
अथात्मानं प्रदास्यामि तस्मै घोराय रक्षसे ।
त्वरध्वं किं विलम्बध्वं मा चिरं कुरुतानघाः ।
व्यवस्येयं मम प्राणैर्युष्मात्रक्षितुमद्य वै ।

वैशंपायनः ।

एवमुक्तस्तु भीमेन ब्राह्मणो भरतर्षभ ।
सुहृदां तत्समाख्याय ददावन्नं सुसंस्कृतम् ।
पिशितोदनमाजह्रुस्तस्मै पुरवासिनः ।
सघृतं सोपदंशं च सूपैर्नानाविधैः सह ।
तदशित्वा भीमसेनो मांसानि विविधानि च ।
मोदकानि च मुख्यानि चित्रोदनचयान्बहून् ।
ततोऽपिबद्दधिघटान्सुबहून्द्रोणसंमितान् ।
तस्य भुक्तवतः पौरा यथाशास्त्रमुपार्जितम् ।
अपजह्रुर्भूतभागं संहृष्टमनसस्तदा ।
ततो रात्र्यां व्यतीतायां सव्यञ्जनदधिप्लुतम् ।
समारुह्यान्नसंपूर्णं शकटं स वृकोदरः ।
प्रययौ तूर्यनिर्घोषैः पौरैश्च परिवारितः ।

---

**91**

(L. 1) Hypermetric! T2 G3 पुरुषादेन रौद्रेण ; T2 G4-6 M तेनेयं पुरुषादेन. — (L. 7) M स कुलान्येव. — (L. 8) M (except M3) संन्ययोज°. — G3 M om. lines 11–12. — (L. 13) T1 G1-3 पिण्डाँल्लाजांस्तथापूपान्स्वर्ं बहुविधोदनं. — M om. lines 14–16. — (L. 14) G1,2 °शृतानि मांसानि पानपूर्णघटानपि. — After line 14, G1,2 ins.:

वन्यमाहिषवाराहं माल्लूकं च शृताशृतम् ।

— (L. 17) M °यं सुवानं वरिष्ठं प्रभो. — For lines 18–19 T1 G1-3 subst. एतद्भागं प्रदास्यामः समये यदि तिष्ठसि. — (L. 20) M वचः प्रतिगृहीतवान्. — (L. 21) T1 G1,2 परचक्राट्भीकेभ्यः ; G3 °क्राच्च भूतेभ्यो ; M °क्राटवीभ्यश्च.

**92**

Ds (which has many v. l. mostly ignored here) ins. lines 2–17 of this passage after 1. 151. 1[ab], and lines 19–46 after 1[cd]. — (L. 2) T G (G3 om.) एतत् (for चेदम्). — (L. 5) M °ह मामशितं क°. T1 स्वके गृहे ; G3 M सकृदेव ; G6 मत्कृते (for द्विजो°). — After line 5, Ds ins.:

श्रमेण मे गता रात्रिर्भुक्त्वा च बलवानहम् ।

(L. 17) G4 महाभागं ; M भूते भागं. — (L. 41) G1,2 M °ज्यं हि (G1,2 स्यात्) तावत्पर्यं.

आत्मानमेषोऽप्रभूतो राक्षसाय प्रदास्यति ।
तरुणोऽप्रतिरूपश्च दृढ औदरिको युवा ।
वाग्भिरेवंप्रकाराभिः स्तूयमानो वृकोदरः ।
चुचोद स बलीवर्दौ युक्तौ सर्वाङ्गकालकौ ।
वादित्राणां प्रणादेन सततं पुरुषादकम् ।
अभ्यगच्छत्सुसंहृष्टः स तत्र मनुजैर्वृतः ।
संप्राप्य स च तं देशमेकाकी समुपाययौ ।
पुरुषादभयाद्भीतस्तत्रैवासीज्जनप्रजः ।
स गत्वा दीर्घमध्वानं दक्षिणामभितो दिशम् ।
यथोपदिष्टमुद्देशे ददर्श विटपद्रुमम् ।
केशमज्जास्थिमेदोभिर्बाहूरुचरणैरपि ।
आर्द्रैः शुष्कैश्च संकीर्णमभितोऽथ वनस्पतिम् ।
गृध्रकङ्कबलच्छन्नं गोमायुगणसंकुलम् ।
उग्रगन्धमचक्षुष्यं श्मशानमिव दारुणम् ।
तं प्रविश्य महावृक्षं चिन्तयामास वीर्यवान् ।
यावन्न दृश्यते रक्षो बकस्तु बलदर्पितः ।
आचितं विविधैर्भोज्यैरन्नैर्गिरिनिभैरिदम् ।
शकटं सूपसंपूर्णं यावद्द्रक्ष्यति राक्षसः ।
तावदेव हि भोक्ष्येऽहं दुर्लभं मे पुनर्भवेत् ।
विप्रकीर्येत सर्वं हि मयुद्धे मयि रक्षसा ।
अभोज्यं च इदं स्पृष्ट्वा निगृहीते बके भवेत् ।
स एवं भीमकर्मा तु भीमसेनोऽभिलक्ष्य च ।
उपविष्टः शनैरन्नं प्रभुङ्क्ते स्म परं वरम् ।
ते ततः सर्वतोऽपश्यन्द्रुमानारुह्य नागराः ।
नारक्षो बलिमश्नीयादेवं बहु च मानवाः ।
भुङ्क्ते ब्राह्मणरूपेण बकोऽयमिति चाब्रुवन् ।
स तं हसति तेजस्वी तदन्नमुपयुज्य च ।

93

M ins. after 1. 151. 18; T G, after 1. 151. 20:

जग्राह भीमः पाणिभ्यां गृहीत्वा चैनमाक्षिपत् ।
आक्षिप्तो भीमसेनेन पुनरेवोत्थितो हसन् ।
आलिङ्ग्यापीड्य चैवैनं न्यहनद्वसुधातले ।
भीमो व्यसर्जयच्चैनं समाश्वसिहि चेत्यपि ।
आस्फोटयामास बली उत्तिष्ठेति च सोऽब्रवीत् ।
समुत्पत्य ततः क्रुद्धो रूपं कृत्वा महत्तरम् ।
विरूपः सहसा तस्थौ तर्जयित्वा वृकोदरम् ।
अहसद्भीमसेनोऽथ राक्षसं भीमदर्शनम् ।
भीमसेनस्तु जग्राह ग्रीवायां भीमदर्शनम् ।
भुजाभ्यां जानुनैकेन पृष्ठे समभिपीडयत् ।
ततः क्रुद्धो विसृज्यैनं स भीमस्तस्य रक्षसः ।
स्वां कटीमीषदुत्क्षिप्य बाहू चैव परामृशत् ।
तस्य बाहू समादाय त्वरमाणो वृकोदरः ।
उत्क्षिप्य चावधूयैनं पातयन्बलवान्भुवि ।
तं तु वामेन पादेन क्रुद्धो भीमपराक्रमः ।
उरस्येनं समाजघ्ने भीमस्तु पतितं भुवि ।
स संक्रुद्धः समुत्पत्य भीममभ्यद्रवद्भृशम् ।
व्यात्ताननो दीप्तजिह्वो बाहुमुद्यम्य दक्षिणम् ।
तेनाभिद्रुत्य क्रुद्धेन भीमो मूर्ध्नि समाहतः ।
मुष्टिना जानुना चैव वामपार्श्वे समाहतः ।
एवं निहन्यमानः स राक्षसेन बलीयसा ।
रोषेण महताविष्टो भीमो भीमपराक्रमः ।
ततः क्रुद्धः समुत्पत्य भीमो जग्राह राक्षसम् ।
तावन्योन्यं पीडयन्तौ पुरुषादवृकोदरौ ।
मत्ताविव महानागावन्योन्यं विचकर्षतुः ।
बाहुविक्षेपशब्दैश्च भीमराक्षसयोस्तदा ।
वेत्रकीयपुरी सर्वा वित्रस्ता समपद्यत ।
तयोर्वेगेन महता तत्र भूमिरकम्पत ।
पादपान्वीरुधश्चैव चूर्णयामासतुश्च तौ ।
समागतौ च तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
अश्मभिः पादवेगैश्च चूर्णयामासतुस्तदा ।
अथ तं लोळयित्वा तु भीमसेनो महाबलः ।

93

(L. 3) $T_1$ $G_{1-3}$ M आविध्य (for आपीड्य). — (L. 5) M उत्तिष्ठस्वेति चाम°. — (L. 6) M transp. समुत्पत्य and ततः क्रुद्धः. — (L. 7) M सहसोत्तस्थौ. — (L. 9) $G_{1.3}$ अंसे ($G_3$ असौ) गृहीत्वा पाणिभ्यां पृष्ठतश्च व्यवस्थितः. — (L. 10) M बाहु° (for भुजा°). $G_{1.3}$ जानुभ्यां पीडयित्वाथ पातयामास भूतले. — (L. 11) $G_{1.3}$ राक्षसं क्रोधदीपितम्; M भीमस्तस्य तु रक्षसः. — For lines 17–19 $G_{1.3}$ subst.:

क्रुद्धः सोऽपि समुत्पत्य वेगेन महता रुषा ।
उद्यत्य पाणियुगलं भीमस्योरस्यपातयत् ।
व्यात्ताननेन घोरेण लम्बजिह्वेन रक्षसा ।
दक्षिणं बाहुमुद्यम्य तेनाभिद्रुत्य वेगितः ।
क्रुद्धेन भीमो भीमेन वेगान्मूर्ध्नि समाहतः ।

— (L. 20) $G_{1.2}$ जानुभ्यां चैव मुष्टिभ्यां. $G_{3-6}$ वामे पार्श्वे समर्पितः. — (L. 25) M व्यपकर्षतुः. — (L. 28–29) ~(var.) 1. 151. 20. — After line 30, $G_{1.3.4}$ ins.:

गिरिभिर्गिरिशृङ्गैश्च पाषाणैः पर्वतच्युतैः ।

— (L. 31) $G_{1.3.4}$ अन्योन्यं ताडयन्तौ तौ; M आहतः पादवेगेन. — After line 31, $G_{1.3.4}$ ins.:

आयामविस्ताराभ्यां च परितो योजनत्रयम् ।
निर्महीरुहपाषाणं गिरिकुञ्जलतावधम् ।
चक्रतुर्युद्धदुर्मदौ कूर्मपृष्ठोपमां महीम् ।
मुहूर्तमेवं संयुध्वा समं रक्षःकुरूत्तमौ ।
ततो रक्षोविनाशाय मतिं कृत्वा वृकोदरः ।

अगृह्णात्परिरभ्यैनं बाहुभ्यां भरतर्षभ ।
जानुभ्यां परिजग्राह भीमसेनो बकं बलात् ।
विस्फुरन्तं महाकायं विचकर्ष महाबलः ।
विकृष्यमाणो भीमेन कर्षंश्च युधि पाण्डवम् ।
समयुज्यत तीव्रेण श्रमेण पुरुषादकः ।

94

After adhy. 155, $D_1$ marg. *sec. m.* ins.:

ब्राह्मण उवाच ।
ततः सा ववृधे बाला याज्ञसेनी द्विजोत्तम ।
क्रमेण यौवनं प्राप्ता मन्मथानलदीपिका ।
दृष्ट्वा तामनवद्याङ्गीं द्रुपदो हृष्टमानसः ।
यदृच्छया संचरन्तीमास्थाने समभाषत ।
अर्जुनाय ददामीति हृदयं व्याप्तुगोत्तदा ।
श्रुत्वा द्रुपदराजस्य वचनं व्यथितस्तदा ।
मन्त्री वसुप्रदो नाम शनैरिदमभाषत ।
कुन्त्या सह महेष्वासाः पाण्डवा राजसत्तम ।
दग्धा जतुगृहे सुप्ता दुर्योधनधिया रहः ।
अर्जुनाय कथं दद्याः पाञ्चालीं पृषतात्मजाम् ।
तस्य वाक्यं तु नृपतिः श्रुत्वा प्रव्यथितोऽभवत् ।
व्यथितं द्रुपदं दृष्ट्वा पुरोधा ज्ञानसागरः ।
जानामि शकुनाद्राजन् दग्धान्नेत्यभाषत ।
हृष्टोऽथ नृपतिः प्राह द्रष्टव्यास्ते कथं द्विज ।
ज्ञानसागर उवाच ।
स्वयंवरेण द्रष्टासि तत्कुरुष्व नराधिप ।
तच्छ्रुत्वा सर्वपाञ्चालाः साधु साध्विति चाब्रुवन् ।
ततः संघोषयामास दुहितुश्च स्वयंवरम् ।
फाल्गुने मासि सप्तम्यामितः सप्ततिमेऽहनि ।
मञ्चांश्च कारयामास राजयोग्यान्बहून्नृपः ।
मेरुमन्दरसंकाशान्स्वर्णरत्नपरिच्छदान् ।
द्रुपदश्च धनुश्चित्रं दुरानामं क्षितीश्वरैः ।
कारयामास शुल्कार्थमर्जुनस्य दिदृक्षया ।
मत्स्ययन्त्रं च कृतवान्दूरे वर्णपरिष्कृतम् ।
अनेन धनुषा यो वै शरेणेमं जलेचरम् ।
पातयिष्यति यो जायां पाञ्चालीं स्वां करिष्यति ।
इतस्तदुत्सवदिनं समीपे वर्तते द्विजाः ।
राजानो राजपुत्राश्च पृथिव्यां ये विलासिनः ।
प्रयान्ति च तथा विप्राः सूतमागधवन्दिनः ।
अहं तदुत्सवं द्रष्टुं यामि द्रव्यार्जनाय च ।
भवतां गमने बुद्धिः प्रयतध्वं द्विजोत्तमाः ।
इति वः सर्वमाख्यातं यथादृष्टं यथाश्रुतम् ।

95

After adhy. 155, S ins. the foll. addl. adhy.:

ब्राह्मणः ।
श्रुत्वा जतुगृहे वृत्तं ब्राह्मणाः सपुरोहिताः ।
पाञ्चालराजं द्रुपदमिदं वचनमब्रुवन् ।
धार्तराष्ट्राः सहामात्या मन्त्रयित्वा परस्परम् ।
पाण्डवानां विनाशाय मतिं चक्रुः सुदुष्कराम् ।
दुर्योधनेन प्रहितः पुरोचन इति श्रुतः ।
वारणावतमासाद्य कृत्वा जतुगृहं महत् ।
तस्मिन्गृहे सुविश्वस्तान्पाण्डवान्पृथया सह ।
अर्धरात्रे महाराज दग्धवान्स पुरोचनः ।
अग्निना तु स्वयमपि दग्धः क्षुद्रो नृशंसवत् ।
एतच्छ्रुत्वा तु संहृष्टो धृतराष्ट्रः सबान्धवः ।
श्रुत्वा तु पाण्डवान्दग्धान्धृतराष्ट्रोऽम्बिकासुतः ।
अल्पशोकः प्रहृष्टात्मा शशास विदुरं तदा ।
पाण्डवानां महाप्राज्ञ कुरु पिण्डोदकक्रियाम् ।
एतावदुक्त्वा करुणो धृतराष्ट्रस्तु मारिषः ।
अथ पाण्डुसुतः क्षत्तः पाण्डवानां विनाशने ।
अहो विधिवशादेव गतास्ते यमसादनम् ।
इत्युक्त्वा प्रारुदत्तत्र धृतराष्ट्रः ससौबलः ।
श्रुत्वा भीष्मेण विधिवत्कृतवानौर्ध्वदेहिकम् ।
पाण्डवानां विनाशाय कृतं कर्म दुरात्मना ।
एवं कार्यस्य कर्ता तु न दृष्टो न श्रुतः पुरा ।
एतदुक्तं महाराज पाण्डवान्प्रति नः श्रुतम् ।
श्रुत्वा [illegible] वचनं तेषां यज्ञसेनो महामतिः ।
यथा तज्जनकः शोचेदौरसस्य विनाशने ।

---

दन्तान्कटिकटीकृत्य दष्ट्वा च दशनच्छदम् ।
नेत्रे संवृत्य विकटं तिर्यक्प्रैक्षत राक्षसम् ।
अथ जानुप्रहारैश्च मुष्टिभिर्वज्रसंनिभैः ।
घोरैः पादप्रहारैश्च क्षोभयामास राक्षसम् ।

— After line 33, $G_{1.2}$ ins.:

जानुभ्यां पार्श्वयोः कुक्षौ पृष्ठे वक्षसि जघ्निवान् ।
भग्नोरुपादकूर्चैश्च विस्रंसद्देहबन्धनः ।
प्रस्वेदो दीर्घनिःश्वासो निर्यज्जिह्वाक्षितारकः ।
अजाण्डास्फोटनं कुर्वन्नाक्रोशद्बहुसंचयैः ।
भूमौ निपत्य लुलुठे दण्डाहत इवोरगः ।

Lines 34–37 *repeat* (with v. l.) 1. 151. $17^{cd}$, $18^{ab}$, and 19. — (L. 34) $T_1$ $G_3$ M बाहु° (for जानु°). — (L. 36) $G_{2.3}$ M °माणो वेगेन पाण्डवेन बलीयसा.

95

After line 15, $T_1$ $G_{2.3.5}$ $M_{2-5}$ ins.:

तत्साद्भागीरथीं गत्वा कुरु पिण्डोदकक्रियाम् ।

— (L. 18) $T_1$ $G_{2.3}$ M विदुरः (for विधिवद्). — (L. 34)

तथातप्यत पाञ्चालः पाण्डवानां विनाशने ।
समाहूय प्रकृतयः सहिताः सर्वबान्धवैः ।
कारुण्यादेव पाञ्चालः प्रोवाचेदं वचस्तदा ।
अहो रूपमहो धैर्यमहो वीर्यं च शिक्षितम् ।
चिन्तयामि दिवारात्रमर्जुनं प्रति बान्धवाः ।
भ्रातृभिः सहितो मात्रा सोऽदह्यत हुताशने ।
किमाश्चर्यमितो लोके कालो हि दुरतिक्रमः ।
मिथ्याप्रतिज्ञो लोकेषु किं वदिष्यामि सांप्रतम् ।
अन्तर्गतेन दुःखेन दह्यमानो दिवानिशम् ।
याजोपयाजौ सत्कृत्य याचितौ तु मयानघाः ।
भारद्वाजस्य हन्तारं देवीं चाप्यर्जुनस्य वै ।
लोकस्तद्वेद यच्चैव तथा याजेन नः श्रुतम् ।
याजेन पुत्रकामीयं हुत्वा चोत्पादितावुभौ ।
धृष्टद्युम्नश्च कृष्णा च मम तुष्टिकरावुभौ ।
किं करिष्यामि ते नष्टाः पाण्डवाः पृथया सह ।
इत्येवमुक्त्वा पाञ्चालः शुशोच परमातुरः ।
दृष्ट्वा शोचन्तमत्यर्थं पाञ्चालं चेदमब्रवीत् ।
पुरोधाः सत्वसंपन्नः सम्यग्विद्याविशेषवान् ।
वृद्धानुशासने युक्ताः पाण्डवा धर्मचारिणः ।
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ।
मया दृष्टमिदं सत्यं शृणु त्वं मनुजाधिप ।
ब्राह्मणैः कथितं सत्यं वेदेषु च मया श्रुतम् ।
बृहस्पतिमतेनाथ पौलोम्यापि पुरा श्रुतम् ।
नष्ट इन्द्रो बिसग्रन्थ्यामुपश्रुत्या विदर्शितः ।
उपश्रुतिर्महाराज पाण्डवार्थे मया श्रुता ।
यत्र वा तत्र जीवन्ति पाण्डवास्ते न संशयः ।
मया दृष्टानि लिङ्गानि इहैष्यन्ति पाण्डवाः ।
यन्निमित्तमिहायान्ति तच्छृणुष्व नराधिप ।
स्वयंवरः क्षत्रियाणां कन्यादाने प्रदर्शितः ।
स्वयंवरस्तु नगरे घुष्यतां राजसत्तम ।
यत्र वा निवसन्त्यस्ते पाण्डवाः पृथया सह ।
दूरस्था वा समीपस्थाः स्वर्गस्था वापि पाण्डवाः ।
श्रुत्वा स्वयंवरं राजन्समेष्यन्ति न संशयः ।
तस्मात्स्वयंवरो राजन्घुष्यतां मा चिरं कृथाः ।
श्रुत्वा पुरोहितेनोक्तं पाञ्चालः प्रीतिमांस्तदा ।
घोषयामास नगरे द्रौपद्यास्तु स्वयंवरम् ।
पुष्यमासे तु रोहिण्यां शुक्लपक्षे शुभे तिथौ ।
दिवसैः पञ्चसप्तत्या भविष्यति स्वयंवरः ।
देवगन्धर्वयक्षाश्च ऋषयश्च तपोधनाः ।
स्वयंवरं द्रष्टुकामा गच्छन्त्येव न संशयः ।
तव पुत्रा महात्मानो दर्शनीया विशेषतः ।
यदृच्छया तु पाञ्चाली गच्छेद्वा मध्यमं पतिम् ।
को हि जानाति लोकेषु प्रजापतिविधिं शुभम् ।
तस्मात्सपुत्रा गच्छेथा ब्राह्मणि यदि रोचते ।
नित्यकालं सुभिक्षास्ते पाञ्चालास्तु तपोधने ।
यज्ञसेनस्तु राजासौ ब्रह्मण्यः सत्यसंगरः ।
ब्रह्मण्या नागराः सर्वे ब्राह्मणाश्चातिथिप्रियाः ।
नित्यकालं प्रदास्यन्ति आमन्त्रणमयाचितम् ।
अहं च तत्र गच्छामि समैभिः सह शिष्यकैः ।
एकसार्थाः प्रयातास्मो ब्राह्मण्या यदि रोचते ।

वैशंपायनः ।

एतावदुक्त्वा वचनं ब्राह्मणो विरराम ह ।

Colophon.

96

After adhy. 157, S (except G6) ins.:

वैशंपायनः ।

ते प्रयाता नरव्याघ्रा मात्रा सह परंतपाः ।
ब्राह्मणान्पश्यतोऽपश्यन्पाञ्चालान्सगणान्बहून् ।
अथ ते ब्राह्मणा ऊचुः पाण्डवान्धर्मचारिणः ।
क्व भवन्तो गमिष्यन्ति कुतो वागच्छतेति ह ।

युधिष्ठिरः ।

प्रयातानेकचक्रायाः सोदर्यान्देवदर्शिनः ।
भवन्तो नोऽभिजानन्तु सहितान्मातृचारिणः ।
गच्छतो नस्तु पाञ्चालान्द्रुपदस्य पुरीं प्रति ।
इच्छामो भवतो ज्ञातुं महत्कौतूहलं हि नः ।

ब्राह्मणाः ।

एकसार्थं प्रयाताः स्म वयमप्यत्र गामिनः ।
तत्राप्यद्भुतसंकाश उत्सवो भविता महान् ।
ततस्तु यज्ञसेनस्य द्रुपदस्य महात्मनः ।
यासावयोनिजा कन्या स्थास्यते सा स्वयंवरे ।
दर्शनीयानवद्याङ्गी सुकुमारी यशस्विनी ।

---

G3.5 M तथार्जुने (for अर्जुनस्य वै). — (L. 46) T1 G6 °श्रुतेनाहं; G1.6 M5-8 °मुखेनाथ (for °मतेनाथ). — After line 63, T1 G1 M5-8 ins.:

तत्रस्थस्तदहं श्रुत्वा सगृहोत्सवबान्धवः ।
अर्थार्थी त्वरितो द्रष्टुं यामि यास्यथ सत्तमाः ।

— (L. 71, 73) T1 G1.2.5 M5-8 आमंत्रणम् (for आमन्त्रणाम्), and ब्राह्मणि (for ब्राह्मण्या). Colophon. *Adhy. no.*: T1 162; T2 G3.4.5 115; G1 117; G2 112; G6 M 116.

96

(L. 6) M भवंतो [illegible] (M5 °तोभिः; M6 °तोपि) विजानंतु. — (L. 11) G3.5 M यज्ञसेनस्य दुहिता (for the prior half). — After line 12, G6 ins.:

धृष्टद्युम्नस्य भगिनी द्रोणशत्रो प्रतापिन ।
जातो य पावकाच्छूर सशर सशरासन ।
सुसमिद्धान्महाभाग सोमकाना महारथ ।
तस्मिन्सजायमाने च वागुवाचाशरीरिणी ।
एष मृत्युश्च शिष्यश्च भारद्वाजस्य जायते ।
स्वसा तस्य तु वेद्याश्च जाता तस्मिन्महामखे ।
क्षीरसमसितापाङ्गी श्यामा नीलोत्पल यथा ।
तां यज्ञसेनस्य सुतां द्रौपदीं परमस्त्रियम् ।
गच्छामस्तत्र वै द्रष्टु त चैवास्या स्वयवरम् ।
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणा ।
स्वाध्यायवन्त शुचयो महात्मानो धृतव्रता ।
तरुणा दर्शनीयाश्च बलवन्तो दुरासदा ।
महारथा कृतास्त्राश्च समेष्यन्तीह भूमिपा ।
ते तत्र विविध दान विजयार्थं नरेश्वरा ।
प्रदास्यन्ति धन गाश्च भक्ष्य भोज्य च सर्वश ।
प्रतिलभ्य च तत्सर्वं दृष्ट्वा कृष्णा स्वयवरे ।
य च सा क्षत्रिय रङ्गे कुमारी वरयिष्यति ।
नटा वैतालिकाश्चैव नर्तका सूतमागधा ।
नियोधकाश्च देशेभ्य समेष्यन्ति महाबला ।
एतत्कौतूहल तत्र दृष्ट्वा वै प्रतिगृह्य च ।
सहास्माभिर्महात्मानो मात्रा सह निवर्त्स्यथ ।
दर्शनीयाश्च व सर्वानेकरूपानवस्थितान् ।
समीक्ष्य कृष्णा वरयेत्सगत्यान्यतम पतिम् ।
अयमेकश्च वो भ्राता दर्शनीयो महाभुज ।
नियुध्यमानो विजयेत्सगत्या द्रविण महत् ।
युधिष्ठिर ।
परम भो गमिष्यामो द्रष्टु तत्र स्वयवरम् ।
द्रौपदीं यज्ञसेनस्य कन्यां तस्यास्तथोत्सवम् ।

☞ This passage is really an anticipation (in a variant form) of our *adhy* 175 All S MSS hitherto examined read it in fact at *both* places, here (i e after adhy 157) and in its proper place (i. e after adhy 174) The printed editions of the S recensions however generally avoid this (seemingly unnecessary) repetition by erroneously reading the adhy only at its first occurence in S MSS namely, after adhy 157 only the Grantha edition (Sarfojirajapuram) *repeats* the adhy in its proper place, and is in this respect a more correct representative of the Southern tradition — The remark at the end of the *footnotes* to adhy 156 to the effect that passage No 96 of this App is ins in S (except G6) *after adhy 156* is erroneous and should be deleted

## 97

D5 (marg *sec m*) T2 G (except G5) ins *after* 1 165 40 T1, after 1 165 41[ab]

विश्वामित्रस्ततो दृष्ट्वा क्रोधाविष्ट स रोदसी ।
ववर्ष शरवर्षाणि वसिष्ठे मुनिसत्तमे ।
घोररूपाश्च नाराचान्क्षुद्रान्भल्लान्महाद्युति ।
विश्वामित्रप्रयुक्तांस्तान्वैणवेन व्यमोचयत् ।
वसिष्ठस्य तदा दृष्ट्वा कर्मकौशलमाहवे ।
विश्वामित्रोऽपि कोपेन भूय शत्रुनिपातन ।
दिव्यास्त्रवर्षं तस्मै स प्राहिणोन्मुनये रुषा ।
आग्नेय वारुण चैन्द्र याम्य वायव्यमेव च ।
विससर्ज महाभागे वसिष्ठे ब्रह्मण सुते ।
अस्त्राणि सर्वतो ज्वाला विसृजन्त प्रपेदिरे ।
युगान्तसमये घोरा पतगस्येव रश्मय ।
वसिष्ठोऽपि महातेजा ब्रह्मशक्तिप्रयुक्तया ।
यष्ट्या निवारयामास सर्वाण्यस्त्राणि स स्मयन् ।
ततस्ते भस्मसाद्भूता पतन्ति स्म महीतले ।
अपोह्य दिव्यान्यस्त्राणि वसिष्ठो वाक्यमब्रवीत् ।
निर्जितोऽसि महाराज दुरात्मन्गाधिनन्दन ।
यदि तेऽस्ति पर शौर्यं तद्दर्शय मयि स्थिते ।
विश्वामित्रस्तथा चोक्तो वसिष्ठेन नराधिप ।
नोवाच किंचिद्व्रीडाढ्यो विद्रावितमहाबल ।

☞ In T1 G2 this passage is followed by a *repetition* of 41[ab]

## 98

*After* 1 176 29[ab], D5 (*suppl fol sec m*) ins

मैत्रे मुहूर्ते तत्रस्था राजदारा पुराविद ।
पुत्रवत्य सुवसना प्रतिकर्मोपचक्रमु ।
स्वर्णपात्र च कौशेय दूर्वासिद्धार्थसयुतम् ।
निधाय तैल स्नानार्थं निन्युर्बाला हरिप्रिया ।

---

दर्शनीया पृथुश्रोणी अर्धरूपा बृहत्स्तनी । — (L. 16) M पावकात्तु (for सोम°) — (L. 22) M सगच्छाम वय द्रष्टु — (L. 29) M प्रतिगृह्य — (L. 32) G1-3 M (M4 om) समवेता महा° — (L. 34) M बहुनेकान् (for महात्मानो) — (L. 35) M देवरूपान् (for दर्श°). — (L. 37) M (except M8) °मेतत्परो भ्राता — (L. 38) M निर्भयवानरि जयेत् — Colophon is om in M *Adhy no* T2 G4,5 117, G1 119, G2 136, G3 115

लोध्रकल्कहृताभ्यङ्गतैलं कालेयचन्दनम् ।
चतुष्काभिमुखीं निन्युरभिषेकाय योषितः ।
वैडूर्यमणिपीठेषु निविष्टां द्रौपदीं सदा ।
सतूर्यं स्नापयांचक्रुः स्वर्णकुम्भस्थितैर्जलैः ।
तां निवृत्ताभिषेकां च दुकूलद्वयधारिणीम् ।
निन्युर्मणिस्तम्भयुतां वेदीं वै सुपरिष्कृताम् ।
निवेश्य प्राङ्मुखीं हृष्टां विस्मिताक्षाः प्रसाधिकाः ।
केनानुकारणेनेमामित्यन्योन्यं व्यलोकयन् ।
धूपोष्मणा च केशानामार्द्रभावं व्यपोहयन् ।
बबन्धुरस्या धम्मिल्लं माल्यैः सुरभिगन्धिभिः ।
दूर्वामधूकरचितं माल्यं तस्या ददुः करे ।
चक्रुश्च कृष्णागरुणा पत्रभङ्गं कुचद्वये ।
रेजे सा चक्रवाकाङ्का स्वर्णदीर्घसरिद्वरा ।
अलकैः कुटिलैस्तस्या मुखं विकसितं बभौ ।
आसक्तभृङ्गं कुसुमं शशिबिम्बं जिगाय तत् ।
कालाञ्जनं नयनयोराचारार्थं समादधुः ।
भूषणै रत्नखचितैरलंचक्रुर्यथोचितम् ।
माता च तस्याः पृषती हरितालमनःशिलाम् ।
अङ्गुलीभ्यामुपादाय तिलकं विदधे मुखे ।
अलंकृतां वधूं दृष्ट्वा योषितो मुदमाययुः ।
माता न मुमुदे तस्याः पतिः कीदृग्भविष्यति ।
सौविदल्लाः समागम्य द्रुपदस्याज्ञया ततः ।
पुनरारोपयामासुः करिणीं कुथभूषिताम् ।
ततोऽवाद्यन्त वाद्यानि मङ्गलानि दिविस्पृशन् ।
विलासिनीजनश्चापि प्रवरं करिणीगतम् ।
माङ्गल्यगीतं गायन्त्यः पार्श्वयोरुभयोर्ययुः ।
जनापहरणे यत्ताः प्रतिहार्यः पुरो ययुः ।
*कोलाहलो महानासीत्तस्मिन्पुरवरे तदा ।*
धृष्टद्युम्नो ययावग्रे हयमारुह्य भारत ।
द्रुपदो रङ्गदेशे तु बलेन महता युतः ।
तस्थौ व्यूह्य महानीकं पालितं दृढधन्विभिः ।
तस्यां वराङ्ग्यामायान्त्यां मञ्चस्था नृपसत्तमाः ।
तां दृष्ट्वा मन्मथाविष्टा विलासान्विदधुः किल ।
कश्चिद्भ्रामयदूर्ध्वः कमलं सुमनोहरम् ।
लोलपत्रं चलद्भृङ्गं परिवेष्टितकेसरम् ।
कश्चिद्विलासी गलितं लग्नमङ्गदकोटिभिः ।
प्रालम्बमकरोदंसे साचीकृतमुखाम्बुजम् ।
लिलेख पीठं पादेन हैमं तिर्यङ्मुखत्विषा ।
केतकीदलमन्योऽपि प्रियं कर्णविभूषणम् ।
नखाग्रैः पाटयामास कुशलो लेखविशारदः ।
कश्चित्कमलशोणेन करेण स्वस्तिपाणिना ।
रत्नाङ्गुलीयप्रभया विद्वानक्षानवासृजत् ।
यथाभा तस्य विमला स्वस्थानाच्चलिता तथा ।
कश्चिद्भ्रामयामास कररत्नाङ्गुलीयकम् ।
भूयानेवंविधास्तत्र द्रौपदी कमलेक्षणा ।
नीलोत्पलमयं देशं कुर्वाणेवावलोकयत् ।

99

T3 G2-3 ins. after 1. 181. 25: G6, after 1. 181. 24: D4 (marg. *sec. m.*) T1 G1, after 1. 181. 26[ab]:

ततो राजसमूहस्य पश्यतो वृक्षमारुजत् ।
ततस्तु भीमं संज्ञाभिर्वारयामास धर्मराट् ।
आकारज्ञस्ततो भ्रातुः पाण्डवोऽपि न्यवर्तत ।
धर्मराजश्च कौरव्यं दुर्योधनममर्षणम् ।
एतस्मिन्नन्तरेऽविध्यद्बाणेन नतपर्वणा ।
दुर्योधनमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः ।
ततो दुर्योधनः क्रुद्धो दण्डाहत इवोरगः ।
प्रत्ययुध्यत राजानं यत्नं परममास्थितः ।
छित्त्वा राजा धनुः सज्यं धार्तराष्ट्रस्य संयुगे ।
*अभ्यवर्षच्छरौघैस्तं स हित्वा मदमुद्धतम् ।*
दुःशासनस्तु संक्रुद्धः सहदेवेन पार्थिव ।
युद्ध्वा च सुचिरं कालं धनुषा स महारथः ।
विसृज्य च धनुः संख्ये चर्म चादाय भास्वरम् ।
असिमाकाशसंकाशमभिदुद्राव पाण्डवम् ।

---

99

There appears to have been a short lacuna after line 4 in an exemplar, which has been filled up differently in different MSS. The variant readings follow.

D4 (which om. line 4) ins. after line 3: T2 G1.5, after line 4:

ततस्तु पाण्डवश्रेष्ठो दुर्योधनमयोधयत् ।
ततो दुर्योधनस्तं तु वारयामास च त्रिभिः ।
वरमात्रे जिते तस्मिन्कः कामः स्यान्महत्तरम् ।;

— After line 4, T1 G6 ins.:

सुमहच्चापमादाय द्रुपदस्य निवेशने ।
अनुगौ यमयोर्दत्त्वा योधयामास पाण्डवः ।
ततस्तु पाण्डवश्रेष्ठो राजा तत्र महायशाः ।
भ्रातृरूपप्रतिच्छन्नो राजानं समयोधयत् ।
भीतो दुर्योधन इति वारयामास च त्रिभिः ।;

while G2.4 ins.:

जितमात्रे जिते तस्मिन्कः कामः स्यान्महत्कृतम् ।
आयोधनाद्रणे राजन्पश्यतां च महीभृताम् ।
दुर्योधनो धर्मसुतं तौ यमावप्ययोधयत् ।
कर्णे पराजिते यत्र मया तत्र कथं भवेत् ।
चिन्तयन्निति ज्ञात्वा राजा विप्राकृतिस्तदा ।

विकर्णचित्रसेनाभ्यां निगृहीतश्च कौरवः ।
दुःसहो नकुलाच्चापि अपकृष्टश्च कौरवैः ।
निवर्तन्तां भवन्तो वै कुतो विप्रेषु विग्रहः ।
न चेमे केवलं विप्रा न चैषां मानुषं बलम् ।
द्वावत्र ब्राह्मणौ क्रूरौ द्वाविन्द्रसदृशौ बले ।
ये वा के वा नमस्तेभ्यो गच्छामः स्वपुरं वयम् ।
एवं संभाष्य ते वीरा विनिवर्तन्त कौरवाः ।
प्रजहुर्ब्राह्मणास्तत्र समेतं राजमण्डलम् ।
प्रयातास्ते ततस्तत्र क्षत्रिया रणमूर्धनि ।
ब्राह्मणाश्च जयं प्राप्ताः कन्यामादाय निर्ययुः ।

100

D4 (suppl. fol. *sec m.*) 5 ins. after adhy. 188: K4 (with a few additions, some omissions and many variants), after 1. 189. 49:

व्यासः ।
मा भूद्राजंस्तव तापो मनःस्थः
पञ्चानां भार्या दुहिता ममेति ।
मातुरेषा पार्थिव प्रार्थिता त्वा-
त्पञ्चानां भार्या दुहिता ममेति ।
याजोपयाजौ धर्मरतौ तपोभ्यां
तौ चक्रतुः पञ्चपतित्वमस्याः ।
सा धर्मतः पाण्डुपुत्रैरवाप्ता
भार्या कृष्णा मोदतां वै कुले ते ।
लोके नान्यो माधवांस्त्वद्विशिष्टः
सर्वारीणामप्रधृष्योऽसि राजन् ।
भूयस्तु मे शृणु चेदं त्वं विशोको
यथागमं पञ्चपतित्वमस्याः ।
एषा नाळायनी पूर्वं मौद्गल्यं स्थविरं पतिम् ।
आराधयामास तदा कुष्ठिनं तमनिन्दिता ।
त्वगस्थिभूतं कटुकं लोलमीर्ष्युं सुकोपनम् ।
सुगन्धेतरगन्धाढ्यं वलीपलितधारिणम् ।
स्थविरं विकृताकारं शीर्यमाणनखत्वचम् ।
उच्छिष्टमुपभुञ्जाना पर्युपास्ते महाव्रता ।
ततः कदाचिदङ्गुष्ठो भुञ्जानस्य व्यशीर्यत ।
अन्नादुद्धृत्य तच्चान्नमुपभुङ्क्ते विशङ्किता ।
तेन तस्याः प्रसन्नेन कामव्याहारिणा तदा ।
वरं वृणीष्वेत्यसकृदुक्ता वव्रे वरं तदा ।
ऋषिः ।
नास्मि वृद्धो न कटुको नेर्ष्युर्नैवातिकोपनः ।
न च दुर्गन्धवदनो न कृशो न च लोलुपः ।
कथं त्वां रमयामीह कथं त्वां वासयाम्यहम् ।
वद कल्याणि भद्रं ते यथा त्वं मनसेच्छसि ।
व्यासः ।
सा तमक्लिष्टकर्माणं वरदं सर्वकामदम् ।
भर्तारमनवद्याङ्गी प्रसन्नं प्रत्युवाच ह ।
नाळायनी ।
पञ्चबाणातिविद्धाहं मन्मथस्य महामते ।
पञ्चधा मां विभक्तात्मा भगवाँल्लोकविश्रुतः ।
रमय त्वमचिन्त्यात्मन्पुनश्चैकवपुमास्थितः ।
व्यासः ।
तां तथेत्यब्रवीद्धीमान्ब्रह्मर्षिर्वै महातपाः ।
स पञ्चधानुभूत्वा तां रमयामास सर्वशः ।
नाळायनीं सुकेशान्तां सुदृशश्चारुहासिनीम् ।
आश्रमेष्वधिकं चापि पूज्यमानो महर्षिभिः ।
विचचार यथाकामं कामरूपवपुः पुनः ।
यदा ययौ दिवं चापि तत्र देवर्षिभिः सह ।
सुधामृतरसाहारः सुरलोके चचार ह ।
पूज्यमानस्तथा शच्या शक्रस्य भवनेष्वपि ।
महेन्द्रसेनया सार्धं पर्यधावद्दिरंसया ।
सूर्यस्य च रथं दिव्यमारुह्य भगवान्प्रभुः ।
पर्युपेत्य पुनर्मेरुं मेरौ वासमरोचयत् ।
आकाशगङ्गामाप्लुत्य तया सह तपोनिधिः ।
अंशुजालेषु चन्द्रस्य उवास च यथानिलः ।
गिरिरूपं यदा दध्रे स महर्षिस्तदा पुनः ।
तत्प्रभावेन सा तस्य मध्ये जज्ञे महानदी ।
यदा पुष्पाढ्यः सालः संजज्ञे भगवानृषिः ।
लतात्वमथ संपेदे तमेवाभ्यनुवेष्टती ।
पुपोष च वपुर्यस्य तस्य तस्यानुगं पुनः ।
सा पुपोष समं भर्तुः स्कन्धेनापि चचार ह ।
ततस्तस्य च तस्याश्च तुल्या प्रीतिरवर्धत ।
तथा हि भगवांस्तस्याः प्रसादादृषिसत्तमः ।
विजज्ञुषी च सा तत्र दैवयोगेन भामिनी ।
स च तां तपसा देवीं रमयामास योगतः ।

— After line 9, T2 G6 ins.:

नाराचेन सुतीक्ष्णेन काचावरणभेदिना ।
हृदि विव्याध भूयोऽस्य महोरसि चार्दयत् ।

— (L. 13) D4 T2 G1.3.5 आनुव्यामेव कौरवः (for the posterior half). — (L. 14) D4 T2 G1.3.5 पार्थं त्वभिद्रुताव सोऽपि समरे धर्मं च.

100

D4 G1.3.5 om. (? hapl.) lines 4–6. — (L. 17) T G3.5 नेर्ष्यो वा नाति°; G1 नेर्ष्युर्नैवाति°; G2 नेर्ष्यो नैवाति°. — K4 D4 G1.3.5 M4 om. line 23. — (L. 27) K4 स चैव पंचधा भूत्वा; G2 स पंचधाप्युर्°. — Colophon. *Adhy. no.: D4 (after corr.)* 200; T1 196; D4 (before

एकपत्नी पुरा भूत्वा सदैवाग्रे यशस्विनी ।
अरुन्धतीव सीतेव बभूवातिपतिव्रता ।
दमयन्त्याश्च मातुः सा विशेषमधिकं ययौ ।
एतत्तथ्यं महाराज मा ते भूद्बुद्धिरन्यथा ।
एषा नाळायनी जज्ञे दैवयोगेन केनचित् ।
राजंस्तवात्मजा कृष्णा वेद्यां तेजस्विनी शुभा ।
तस्मिंस्तस्या मनः सक्तं न शशाक कदाचन ।
तथा प्रणिहितो ह्यात्मा तस्यास्तस्मिन्द्विजोत्तमे ।

द्रुपदः ।

ब्रूहि तत्कारणं येन ब्रह्मज्ञाता तपस्विनी ।
सुता ममाध्वरे कृष्णा सर्ववेदविदां वर ।

*Colophon.*

व्यासः ।

शृणु राजन्यथा ह्यस्या दत्तो रुद्रेण वै वरः ।
यदर्थं चैव संभूता तव यज्ञे यशस्विनी ।
अहं ते कथयिष्यामि कृष्णायाः पौर्वदेहिकम् ।
इन्द्रसेनेति विख्याता पुरा नाळायनी शुभा ।
मौद्गल्यं पतिमासाद्य चचार विगतज्वरा ।
मौद्गल्यस्य महर्षेश्च रममाणस्य वै तया ।
संवत्सरगणा राजन्व्यतीयुः क्षणवत्तदा ।
ततः कदाचिद्धर्मात्मा तृप्तः कामाद्व्यरज्यत ।
अन्विच्छन्परमं ब्रह्म त्यागधर्मपरोऽभवत् ।
उत्ससर्ज स तां विप्रः सा तदा चापतद्भुवि ।
मौद्गल्यो राजशार्दूल तपोभिर्भावितः सदा ।
कामभोगातुरामेत्य वचनं चेदमब्रवीत् ।

इन्द्रसेना ।

प्रसीद भगवन्मह्यं न मामुत्स्रष्टुमर्हसि ।
अवितृप्तास्मि ब्रह्मर्षे कामानां कामसेवनात् ।
मारो मां बाधतेऽत्यर्थमनुगृह्णातु मां भवान् ।
तर्पयस्व ममाक्षाणि गुह्यं मां बाधतेऽनिशम् ।

ऋषिः ।

यस्मात्त्वं मयि निःशङ्का ह्यवक्तव्यं प्रभाषसे ।
आचरन्ती तपोविघ्नं तस्माच्छृणु वचो मम ।
भविष्यसि नृलोके त्वं राजपुत्री यशस्विनी ।
पाञ्चालराजस्य सुता द्रुपदस्य महात्मनः ।
भवितारस्तु ते तत्र पतयः पञ्च विश्रुताः ।
तैः सार्धं मधुराकारैश्चिरं रतिमवाप्स्यसि ।

व्यासः ।

सैवं शप्ता तु विमना वनं प्राप्ता यशस्विनी ।
भोगैरतृप्ता देवेशं तपसाराधयत्तदा ।
निराशीर्मारुताहारा निराहारा तथैव च ।
अनुवर्तमाना त्वादित्यं तथा पञ्चतपाभवत् ।
तीव्रेण तपसा तस्यास्तुष्टः पशुपतिः स्वयम् ।
वरं प्रादात्तदा रुद्रः सर्वलोकेश्वरः प्रभुः ।
भविष्यति परं जन्म मानुषेषु वराङ्गने ।
भविष्यन्ति च ते भद्रे पतयः पञ्च सुव्रताः ।
महेन्द्रवपुषः सर्वे महेन्द्रसमविक्रमाः ।
तत्रस्था च महाकर्म सुराणां त्वं करिष्यसि ।

नाळायनी ।

एकः खलु मया भर्ता वृतः पञ्चापि मे कथम् ।
भविष्यन्ति ममैकस्याः पतयस्तद्ब्रवीहि मे ।

महेश्वरः ।

पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः ।
पञ्च ते पतयो भद्रे भविष्यन्ति सुखावहाः ।

नाळायनी ।

धर्म एकः पतिः स्त्रीणां पूर्वमेव प्रकल्पितः ।
बहुपत्नीकता पुंसां धर्मश्च पितृभिः कृतः ।
स्त्रीधर्मः पूर्वमेवायं निर्मितो मुनिभिः पुरा ।
सहधर्मचरी भर्तुरेका एकस्य चोच्यते ।
एको हि भर्ता नारीणां कौमार इति लौकिकः ।
आपत्सु च नियोगेन संतानार्थं परः स्मृतः ।
गच्छेत या तृतीयं तु तस्या निष्कृतिरुच्यते ।
चतुर्थे पतिता धर्मात्पञ्चमे वर्धकी भवेत् ।
एवं गते धर्मपथे न वृणे बहुपुंस्कताम् ।
अलोकाचरितात्तस्मात्कथं मुच्येय संकरात् ।

महेश्वरः ।

अनावृताः पुरा नार्यो ह्यासञ्शुध्यन्ति चार्तवे ।
सकृदुक्तं त्वया नैतत्त्वधर्मस्ते भविष्यति ।

नाळायनी ।

यदि मे पतयः पञ्च वरमिच्छामि तैर्मिथः ।
कौमारं च भवेत्सर्वैः संगमे संगमे च मे ।
पतिशुश्रूषया चैव सिद्धिः प्राप्ता पुरा मया ।
भोगेच्छा च मया प्राप्ता स च भोगश्च मे भवेत् ।

---

corr.) $T_2$ $G_{3-5}$ 148; $G_{1,6}$ 150; $G_2$ 147; $M_6$ 149. — After line 60, $K_4$ ins.:

कृष्णा मतिमतां श्रेष्ठ तव सा पूर्वगीरिता ।

— (L. 66) $D_4$ $T_1$ $G_{2,6}$ $M_6$ तद्धकामो (for तृप्तः कामाद्). $D_4$ $G_{1,2,4,6}$ $M_6$ om. lines 70, 73–74. — After line 111, $G_3$ ins.:

दुर्भगा लप्स्यसे सिद्धिं भोगेन बहुजन्मजाम् ।

— After line 116, $K_4$ ins.

एवं कृत्वा मदत्कार्यं मनुष्येषु वराङ्गना ।
गमिष्यसि हि ताँल्लोकान्सत्यमेतद्ब्रवीमि ते ।

Colophon. *Adhy. no.:* $D_4$ 201; $T_1$ 177; $T_2$ $G_{3-5}$ 149; $G_{1,6}$ 151; $G_2$ 148; $M_6$ 150.

महेश्वर ।

रतिश्च भद्रे सिद्धिश्च न भजेते परस्परम् ।
अभोगा लप्स्यसे सिद्धिं योगेनापि महत्त्वताम् ।
अन्यदेहान्तरे च त्व रूपभाग्यगुणान्विता ।
पञ्चभि प्राप्य कौमार महाभागा भविष्यसि ।
गच्छ गङ्गाजलस्था च नर पश्यसि य शुभे ।
तमानय ममाभ्याश सुरराज शुचिस्मिते ।

व्यास ।

इत्युक्ता विश्वरूपेण रुद्र कृत्वा प्रदक्षिणम् ।
जगाम गङ्गामुद्दिश्य पुण्या त्रिपथगां नदीम् ।

Colophon

## 101

After the (additional) colophon following 1 189 40, D4 (*marg sec m*) *ins the foll addl adhy*

व्यास ।

इद चापि पुरावृत्त तन्निबोध च भूमिप ।
कीर्त्यमान नृपर्षीणा पूर्वेषा दारकर्मणि ।
नितन्तुर्नाम राजर्षिर्बभूव भुवि विश्रुत ।
तस्य पुत्रा महेष्वासा बभूवु पञ्च भूमिपा ।
साल्वेय शूरसेनश्च श्रुतसेनश्च वीर्यवान् ।
तिन्दुसारोऽतिसारश्च क्षत्रिया क्रतुयाजिन ।
नातिचक्रमुरन्योन्यमन्योन्यस्य प्रियवदा ।
एतांस्तत्स्त्ववाप्यत्र शैब्या चात्र स्वयवरे ।
अवाप सा पतीन्वीरान्भौमाश्वी मनुजाधिपान् ।
वीणेव मधुरारावा गान्धारस्वरमूर्छिता ।
उत्तमा सर्वनारीणा भौमाश्वी ह्यभवत्तदा ।
यस्या नैतत्स्तवा पञ्च पतय क्षत्रियर्षभा ।
बभूवु पृथिवीपाला सर्वे समुदिता गुणै ।
तेषामेकाभवद्भार्या राज्ञामौशीनरी नृप ।
भौमाश्वी नाम भद्र ते तदा रूपगुणान्विता ।
पञ्चस्य पञ्चधा पञ्च दायादान्सा व्यजायत ।
तेभ्यो नैतन्स्तवेभ्यस्तु राजशार्दूल ये तदा ।
पृथगाख्यामवत्तेषा मत्स्याना पञ्चधा भुवि ।
यथावत्कीर्त्यमानांस्ताञ्शृणु मे राजसत्तम ।
साल्वेया शूरसेनाश्च श्रुतसेनाश्च पार्थिवा ।
तिन्दुसारातिसाराश्च वशा एषा नृपोत्तम ।
एवमेकाभवद्भार्या भौमाश्वी भुवि विश्रुता ।

Colophon

## 102

After 1 189 46, T2 G3-5 *ins*

सैव नाळायनी भूत्वा रूपेणाप्रतिमा भुवि ।
मौद्गल्य पतिमासाद्य स्त्रिवाद्गरमवाप्य च ।,

which is followed by 1 189 $47^{ab}$ T2 G3-5 cont.

शृणु गुह्य महीपाल वदत सावधानत ।
सश्रद्धस्व वचो मह्य वत पश्यसि पाण्डवान् ।
हत्वा वृत्र सुरपतिस्त्वाष्ट्र स्वर्गात्स च्युत ।
*ब्रह्महत्यामवाप्याथ धर्मादिरहितस्तदा ।*
ऐन्द्रो धर्मो यममगाद्बल वायुमथाविशत् ।
वीर्य वर ज्ञानरूपे नासत्यावभिजग्मतु ।
ह्रीश्च लक्ष्मीश्च कीर्तिश्च सन्ततिर्मतिरेव च ।
एता विनिर्गता इन्द्राद्वाग्देवीं ता समाश्रिता ।
पूर्वेन्द्रवरदानाच्च महेशस्याज्ञया नृप ।
धर्मादीन्पाण्डवान्विद्धि ह्रियाद्या द्रौपदीं तथा ।
तदिमे पाण्डवा राजन्निन्द्र एको न सशय ।
एकैव द्रौपदी राजन्पौलोमी से न सशय ।
शृणु गुह्यतम चान्यद्रहस्य देवनिर्मितम् ।
यच्छ्रुत्वा सशयस्तेऽद्य शतधा विफलिष्यति ।
सद्योजातमुखादीनि मुखानि च महेशितु ।
पाण्डवा पञ्च तानि स्यु पार्वती द्रौपदी स्त्रियम् ।
इदमन्यद्रहस्य ते देवगुह्य सनातनम् ।
भवत प्रत्ययार्थं च त्वि सशयकरं महत् ।
चत्वारश्च भुजा विष्णो शङ्खचक्रादिलाञ्छिता ।
धर्मराजश्च भीमश्च यमौ च नृपसत्तम ।
अर्जुनस्तु स्वय विष्णु पाञ्चाली कमलावती ।
चतस्रो मूर्तयो विष्णो स्वय विष्णुश्च सिन्धुजा ।
चतुर पाण्डवाञ्जिष्णु कृष्णां विद्धि महीश्वर ।
चतुर्मूर्तिश्चतुर्व्यूहो वासुदेवादिभि सह ।
अवतीर्णो महीं विष्णु पाञ्चाली कमला स्वयम् ।
पञ्चायतनसञ्ज्ञश्च पञ्चमूर्ति सदाशिव ।
निवृत्त्यादिकलान्पञ्च पाञ्चालीं विद्धि भूमिप ।
*तस्मात्ते सशयो मा भूत्पाण्डवेभ्य प्रदीयताम् ।*
कृष्णा तव सुता राजन्पञ्चभि पूर्वसभवात् ।
पञ्चास्य पाण्डवा स्यु स्वाहर कृष्णा प्रकीर्तिता ।

☞ The passage is followed by a *repetition* of 1 189 $47^{ab}$ (v 1 ततो for हि सा), a sure *indication* that the passage is interpolated!

---

## 101

In the footnotes to 1 189 40 the number of lines in this passage is *erroneously* stated to be 25, the correct number is 22. — *Colophon.* *Adhy no* D4 200, T1 199, T2 G3-5 151, G1.2 153, G3 150, M2 152.

## 103

After 1. 193. 7, K4 D5 (both on suppl. fol; *sec. m.*) E ins.:

धार्मिकान्वृत्तसंपन्नान्मातुः प्रियहिते रतान् ।
यदा तानीदृशान्पार्थानुत्सादयितुमर्हति ।
वैशंपायनः ।
ततः स्वयंवरे वृत्ते धार्तराष्ट्राः स्म भारत ।
मन्त्रयन्ते ततः सर्वे कर्णसौबलदूषिताः ।
शकुनिः ।
कश्चिच्छत्रुः कर्शनीयः पीडनीयस्तथा परः ।
उत्सादनीयाः कौन्तेयाः सर्वे क्षत्रस्य मे मताः ।
एवं पराजिताः सर्वे यदि यूयं गमिष्यथ ।
अकृत्वा संविदं कांचित्तद्वस्तप्स्यत्यसंशयम् ।
अयं देशश्च कालश्च पाण्डवोद्धरणाय नः ।
न चेदेवं करिष्यध्वं लोके हास्या भविष्यथ ।
यमेते संश्रिता वस्तुं कामयन्ते च भूमिपम् ।
सोऽल्पवीर्यबलो राजा द्रुपदो वै मतो मम ।
यावदेतान्न जानन्ति जीवतो वृष्णिपुंगवाः ।
चैद्यश्च पुरुषव्याघ्रः शिशुपालः प्रतापवान् ।
एकीभावं गता राज्ञा द्रुपदेन महात्मना ।
दुराधर्षतरा राजन्भविष्यन्ति न संशयः ।
यावदचलतां सर्वे प्राप्नुवन्ति नराधिपाः ।
तावदेव व्यवस्यामः पाण्डवानां वधं प्रति ।
मुक्ता जतुगृहाद्भीमादाशीविषमुखादिव ।
पुनर्यदिह मुच्यन्ते महन्नो भयमाविशेत् ।
तेषामिहोपयातानामेषां च पुरवासिनाम् ।
अन्तरे दुष्करं स्थातुं मेषयोर्महतोरिव ।
हलधरप्रगृहीतानि बलानि बलिनां स्वयम् ।
यावन्न कुरुसेनायां पतन्ति पतगा इव ।
तावत्सर्वाभिसारेण पुरमेतद्विनाश्यताम् ।
एतदत्र परं मन्ये प्राप्तकालं नरर्षभाः ।
वैशंपायनः ।
शकुनेर्वचनं श्रुत्वा भाषमाणस्य दुर्मतेः ।
सौमदत्तिरिदं वाक्यं जगाद परमं ततः ।
प्रकृतीः सप्त वै ज्ञात्वा आत्मनश्च परस्य च ।
तथा देशं च कालं च षड्विधांश्च नयेद्गुणान् ।
स्थानं वृद्धिं क्षयं चैव भूमिं मित्राणि विक्रमम् ।
समीक्ष्याथाभियुञ्जीत परं व्यसनपीडितम् ।
ततोऽहं पाण्डवान्मन्ये मित्रकोशसमन्वितान् ।
बलस्थान्विक्रमस्थांश्च स्वकृतैः प्रकृतिप्रियान् ।
वपुषा भुवि भूतानां नेत्राणि च मनांसि च ।
श्रोत्रं मधुरया वाचा रमयत्यर्जुनो नृणाम् ।
न तु केवलदैवेन प्रजा भावेन भेजिरे ।
यद्बभूव मनःकान्तं कर्मणा न चकार तत् ।
न ह्ययुक्तं न चासक्तं नानृतं न च विप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य भारती ।
तानेवं गुणसंपन्नान्संपन्नान्राजलक्षणैः ।
न तान्पश्यामि ये शक्ताः समुच्छेत्तुं यथाबलात् ।
प्रभावशक्तिर्विपुला मन्त्रशक्तिश्च पुष्कला ।
तथैवोत्साहशक्तिश्च पार्थेष्वभ्यधिका सदा ।
मौलमित्रबलानां च कालज्ञो वै युधिष्ठिरः ।
साम्ना दानेन भेदेन दण्डेनेति युधिष्ठिरः ।
अमित्रं यतते जेतुं न रोषेणेति मे मतिः ।
परिक्रीय धनैः शत्रूनिमत्राणि च धनानि च ।
मूलं च सुदृढं कृत्वा हन्त्यरीन्पाण्डवस्ततः ।
अशक्यान्पाण्डवान्मन्ये देवैरपि सवासवैः ।
एषामर्थे सदा युक्तौ कृष्णसंकर्षणावुभौ ।
श्रेयश्च यदि मन्यध्वं मन्मतं यदि वो मतम् ।
संविदं पाण्डवैः सार्धं कृत्वा याम यथागतम् ।
गोपुराट्टालकैरुच्चैरुपतल्पशतैरपि ।
गुप्तं पुरवरं श्रेष्ठमेतदद्भिश्च संवृतम् ।
तृणधान्येन्धनरसैस्तथा यन्त्रायुधौषधैः ।
युक्तं बहुकपाटैश्च द्रव्यागारतुषादिकैः ।
भीमोच्छ्रितमहाचक्रं बृहदट्टालसंवृतम् ।
दृढप्राकारनिर्यूहं शतघ्नीजालसंवृतम् ।
ऐष्टको दारवो वप्रो मानुषश्चेति यः स्मृतः ।
प्राकारकर्तृभिर्वीरैर्नृगर्भस्तत्र पूजितः ।
तदेतन्नरगर्भेण पाण्डरेण विराजते ।
सालेनानेकतालेन सर्वतः संवृतं पुरम् ।
अनुरक्ताः प्रकृतयो द्रुपदस्य महात्मनः ।
दानमानार्चिताः सर्वे बाह्याश्चाभ्यन्तराश्च ये ।
प्रतिरुद्धानिमाञ्ज्ञात्वा राजभिर्भीमविक्रमैः ।
उपयास्यन्ति दाशार्हाः समुदग्रोच्छ्रितायुधाः ।
तस्मात्संधिं वयं कृत्वा धार्तराष्ट्रस्य पाण्डवैः ।
स्वराष्ट्रमेव गच्छामो यद्याप्तं वचनं मम ।
एतन्मम मतं सर्वैः क्रियतां यदि रोचते ।
एतच्च सुकृतं मन्ये क्षेमं चापि महीक्षिताम् ।

Colophon.

वैशंपायनः ।
सौमदत्तेर्वचः श्रुत्वा कर्णो वैकर्तनो वृषा ।
उवाच वचनं काले कालज्ञः सर्वकर्मणाम् ।
नीतिपूर्वमिदं सर्वमुक्तं वचनमर्थवत् ।

---

103

(L. 17) T1 यावत्प्रबलतां; G3.6 यावदलतरतां; M6 यावद्बलवतां. T1 G3.4 M6 नाघु°. Colophon. *Adhy. no.:* D5 205; T1 203; T3 G4-6 155; G1.2 157; G3 153; M6 156.

वचनं नाभ्यसूयामि श्रूयतां मद्वचःस्थितिः ।
द्वैधीभावो न गन्तव्यः सर्वकर्मसु मानवैः ।
द्विधाभूतेन मनसा ह्यन्यत्कर्म न सिध्यति ।
संप्रयाणासनाभ्यां कर्शनेन तथैव च ।
नैतच्छक्यं पुरं हन्तुमाक्रन्दोऽस्याप्यशोभनः ।
अवमर्दनकालोऽत्र मतश्चिन्तयतो मम ।
यावन्नो वृष्णयः पार्ष्णिं न गृह्णन्ति रणप्रियाः ।
प्रभयन्तो हृष्टतुष्टाः स्वबाहुबलशालिनः ।
प्राकारमवमृद्नन्तु परिघाः पूरयन्त्वपि ।
प्रस्रावयन्तु सलिलं क्रियतां विषमं समम् ।
तृणकाष्ठेन महता खातमस्य प्रपूर्यताम् ।
घुष्यतां राजसैन्येषु परेषां यो हनिष्यति ।
नागमश्वं पदातिं वा दानमानं स लप्स्यते ।
नागे दश सहस्राणि पञ्च चाश्वपदातिषु ।
रथे वै द्विगुणं नागाद्वसु दास्यन्ति पार्थिवाः ।
यश्च कामसुखे सक्तो बालश्च स्थविरश्च यः ।
अयुद्धमनसो ये च ते तु तिष्ठन्तु भीरवः ।
प्रहरश्च न दातव्यो न गन्तव्यमचोदितैः ।
यशो रक्षत भद्रं वो जेष्यामो वै वयं पुरम् ।
अनुलोमाश्च नो वाताः सर्वतो मृगपक्षिणः ।
अग्नयश्च विराजन्ते शस्त्राणि कवचानि च ।
ततः कर्णवचः श्रुत्वा धार्तराष्ट्रप्रियैषिणः ।
निर्ययुः पृथिवीपालाश्चालयन्तः पराङ्गणे ।
न हि तेषां मनःसक्तिरिन्द्रियार्थेषु सर्वशः ।
यथा पुनररिघ्नानां प्रसवो युद्ध एव च ।
वैकर्तनपुरोवातः सैन्धवोर्मिमहास्वनः ।
दुःशासनमहामत्स्यो दुर्योधनमहाग्रहः ।
स राजसागरो भीमो भीमघोषप्रदर्शनः ।
अभिदुद्राव वेगेन पुरं तदुपसव्यतः ।
तदनीकमनाधृष्यं शस्त्राग्निज्वालदीपितम् ।
समुत्फुल्लितमाज्ञाय कुरुशार्दूलपदात्मजाः ।
ते मेघसमनिर्घोषैर्बलिनः स्यन्दनोत्तमैः ।
निर्ययुर्नगरद्वाराद्भासयन्तः पराङ्गणे ।
धृष्टद्युम्नः शिखण्डी च सुमित्रः प्रियदर्शनः ।
चित्रकेतुः सुकेतुश्च ध्वजसेनश्च वीर्यवान् ।
पुत्रा द्रुपदराजस्य बलवन्तो जयैषिणः ।
द्रुपदश्च महावीर्यः पाण्डरोष्णीषकेतनः ।
पाण्डरव्यजनच्छत्रः पाण्डरध्वजवाहनः ।
सपुत्रगणमध्यस्थः शुशुभे राजसत्तमः ।
चन्द्रमा ज्योतिषां मध्ये पौर्णमास्यामिवोदितः ।
अथोद्धूतपताकाग्रमजिह्मगतिमव्ययम् ।
द्रुपदानीकमायान्तं कुरुसैन्यमभिद्रवत् ।
तयोरुभयतो जज्ञे भैरवस्तुमुलः स्वनः ।
बलयोः संप्रहरतोः स्रवन्त्योः सरितोरिव ।
प्रकीर्णरथनागाश्वैस्तान्यनीकानि सर्वशः ।
ज्योतींषि विप्रकीर्णानि सर्वतः प्रचकाशिरे ।
उत्कृष्टभेरीनिनदे संप्रवृत्ते महारवे ।
अमर्षिता महात्मानः पाण्डवा निर्ययुस्ततः ।
रथान्वै मेघनिर्घोषान्युक्तान्परमवाजिभिः ।
धन्विनो ध्वजिनः शुभ्रानास्थाय भरतर्षभाः ।
ततः पाण्डुसुतान्दृष्ट्वा रथस्थानात्तकार्मुकान् ।
नृपाणामभवत्कम्पो वेपथुर्हृदयेषु च ।
निर्यातेष्वथ पार्थेषु द्रौपदं तद्बलं रणे ।
आविशत्परमो हर्षः प्रमोदश्च जयं प्रति ।
स मुहूर्तं व्यतिकरः सैन्यानामभवद्भृशम् ।
ततो द्वन्द्वमयुध्यन्त मृत्युं कृत्वा निवर्तनम् ।
जघ्नतुः समरे तस्मिन्सुमित्रप्रियदर्शनौ ।
जयद्रथश्च कर्णश्च पश्यतः सव्यसाचिनः ।
अर्जुनः प्रेक्ष्य निहतौ सुमित्रप्रियदर्शनौ ।
जयद्रथसुतं तत्र जघान पितुरन्तिके ।
वृषसेनादवरजं सुबाहुं वै धनंजयः ।
कर्णपुत्रं महावीर्यं रथनीडादपातयत् ।
तौ सुतौ निहतौ दृष्ट्वा राजसिंहौ तरस्विनौ ।
नामृष्येतां महाबाहू प्रहारमिव सद्गजौ ।
तौ जग्मतुरसंभ्रान्तौ फल्गुनस्य रथं प्रति ।
प्रतिमुक्ततलत्राणौ त्रायमाणौ परस्परम् ।
संनिपातस्तयोरासीत्फल्गुनेन महामृधे ।
वृत्रशम्बरयोः संख्ये वज्रिणेव महारणे ।
त्रीन्हयाञ्जघ्नतुस्तत्र फल्गुनस्य नरर्षभौ ।
ततः किलिकिलाशब्दः कुरूणामभवत्तदा ।
वाहयाभिहतान्दृष्ट्वा भीमसेनः प्रतापवान् ।
निमेषान्तरमात्रेण रथमश्वैरयोजयत् ।
उपयातं रथं दृष्ट्वा दुर्योधनपुरःसरौ ।
सौबलः सौमदत्तिश्च समेयातां परंतपौ ।
तैः पञ्चभिरदीनात्मा भीमसेनो महाबलः ।
अयुध्यत बलैर्वीरैरिन्द्रियार्थैरिवेश्वरः ।
तैर्निरुद्धो न संत्रासं जगाम समितिंजयः ।
पञ्चभिर्द्विरदैर्मत्तैर्निरुद्ध इव केसरी ।
तस्य ते युगपत्पञ्च पञ्चभिर्निशितैः शरैः ।
सारथिं वाजिनश्चैव निन्युर्वैवस्वतक्षयम् ।
हताश्वात्स्यन्दनश्रेष्ठादवरुह्य महारथः ।
चचार विविधान्मार्गानसिमुद्यम्य पाण्डवः ।
अश्वस्कन्धेषु चक्रेषु युगेष्वीषासु चैव ह ।
व्यचरत्पातयञ्शत्रून्सुपर्ण इव भोगिनः ।

— (L. 99) K4 D4 T2 G2 M6 यथा परपुरस्थानां. K4 D4 G6 प्रसभो; T1 प्रभवं; G1 प्रभवं; G6 प्रसरो; M6 प्रसंगो.

विधनुष्कं विकवचं विरथं च समीक्ष्य तम् ।
अभिपेतुर्नरव्याघ्रमर्जुनप्रमुखा रथाः ।
धृष्टद्युम्नः शिखण्डी च यमौ च युधि दुर्जयौ ।
तस्मिन्दाशरथे युद्धे प्रवृत्ते शरवृष्टिभिः ।
रथा ध्वजाः पताकाश्च सर्वमन्तरधीयत ।
तत्प्रवृत्तं चिरं कालं युद्धं समभिवाभवत् ।
रथेनाथ महाबाहुरर्जुनोऽभ्यपतत्पुनः ।
समापतन्तं दृष्ट्वैव महाबाहुर्धनुर्धरः ।
कर्णोऽस्त्रविदुषां श्रेष्ठो वारयामास सायकैः ।
स तेनाभिहतः पार्थो वासविर्वज्रसंनिभान् ।
त्रीञ्शरान्संदधे क्रुद्धो वधे कर्णस्य पाण्डवः ।
तैः शैराहतं कर्णं ध्वजयष्टिमुपाश्रितम् ।
अपोवाह रथेनाशु सूतः परपुरंजयम् ।
ततः पराजिते कर्णे धार्तराष्ट्रान्महद्भयम् ।
विवेश समुदग्रांश्च पाञ्चालान्प्रसमीक्ष्य च ।
तत्प्रकम्पितमत्यर्थं दृष्ट्वा वै सौबलो बलम् ।
गिरा गम्भीरया धीरः समाश्वासयतासकृत् ।
धार्तराष्ट्रैस्ततः सर्वैर्दुर्योधनपुरःसरैः ।
धृतं तत्पुनरेवासीद्बलं पार्थप्रकम्पितम् ।
ततो दुर्योधनं दृष्ट्वा भीमो भीमपराक्रमः ।
अक्रुध्यत्स महाबाहुरगारं जातुषं स्मरन् ।
ततः संग्रामशिरसि ददर्श विपुलद्रुमम् ।
आयामभूतं तिष्ठन्तं स्कन्धपञ्चाशदुन्नतम् ।
महास्कन्धं महोत्सेधं शक्रध्वजमिवोच्छ्रितम् ।
चित्रमाल्याम्बरधरं पताकाशतशोभितम् ।
तालमुद्यम्य पाणिभ्यामुद्धृत्य च रणे बली ।
अभिपेदे परान्संख्ये वज्रपाणिरिवासुरान् ।
भीमसेनप्रमार्तानि फल्गुनाभिहतानि च ।
न शेकुस्तान्यनीकानि धार्तराष्ट्राभिरक्षितुम् ।
तानि संभ्रान्तयोधानि श्रान्तवाजिगजानि च ।
दिशः प्राकालयद्भीमो दिवीवाभ्राणि मारुतः ।
ताञ्जित्वा तत्र राजेन्द्रान्हतवारणवाजिनः ।
नानुसस्रुर्न चाजघ्नुर्नोचुः किंचिच्च दारुणम् ।
स्वमेव शिबिरं जग्मुः क्षत्रियाः शरविक्षताः ।
परेऽप्यभिययुर्हृष्टाः पुरं पौरसुखावहाः ।
मुहूर्तमभवद्वैरं तेषां वै पाण्डवैः सह ।
यावत्तद्युद्धमभवन्महद्देवासुरोपमम् ।
सुवृत्तं चक्रिरे सर्वे सुप्रासाममुवन्वधूम् ।
कृतार्थं द्रुपदं चोचुर्धृष्टद्युम्नं च पार्षतम् ।
शकुनिः सिन्धुराजश्च कर्णदुर्योधनावपि ।
तेषां तदभवद्दुःखं हृदि वाचा तु नाब्रुवन् ।
ततः प्रयाता राजानः सर्वे एव यथागतम् ।
धार्तराष्ट्रा हि ते सर्वे गता नागपुरं तदा ।
प्रागेव पुरोधास्तु पाण्डवैरश्वसादिनः ।
प्रेषिता गच्छतारिष्टानस्मानाख्यात शौरये ।
ते स्वदीर्घेण कालेन गत्वा द्वारवतीं पुरीम् ।
ऊचुः संकर्षणोपेन्द्रौ वचनं वचनक्षमौ ।
कुशलं पाण्डवाः सर्वानाहुः सान्धकवृष्णयः ।
आत्मनश्चाक्षतानाहुर्विमुक्ताञ्जातुषाद्गृहात् ।
समाजे द्रौपदीं लब्धामाहुर्लब्धां राजीवलोचनाम् ।
आत्मनः सदृशीं सर्वैः शीलवृत्तसमाधिभिः ।
तच्छ्रुत्वा वचनं कृष्णस्तानुवाचोत्तरं वचः ।
सर्वमेतदहं जाने यथा तस्य [illegible] रक्षसः ।
तत उद्योजयामास केशवश्चतुरङ्गिणीम् ।
सेनां समुपयात्तूर्णं पाञ्चालनगरं प्रति ।
ततः संकर्षणश्चैव केशवश्च महाबलः ।
यादवैः सह सर्वैश्च पाण्डवानभिजग्मतुः ।
पितृष्वसारं संपूज्य द्रुपदं च यथाविधि ।
द्रौपदीं भूषणैः शुभ्रैर्भूषयित्वा महाधनैः ।
न्यायतः पूजिता राज्ञा द्रुपदेन महात्मना ।
रेमिरे पाण्डवैः सार्धं पाञ्चालनगरे तदा ।

Colophon.

104

After I. 197. 29, T2 G2–4 ins.:

अजय्याः पाण्डवा युद्धे हरेण हरिणापि वा ।
त्रैलोक्येनापि भूपाल किमु तैः खलु मानवैः ।
दैवानुकूलाः कौन्तेया दैवं तेषां परायणम् ।
प्रत्यक्षमेतत्सर्वेषां मुक्ता जतुगृहानलात् ।
जित्वा गन्धर्वराजानं धौम्यं प्राप्य पुरोहितम् ।
पाञ्चालनगरं प्राप्य हत्वा लक्ष्यममानुषम् ।
अनर्घ्यं धनुरानाम्य शिरोभिः सह भूभृताम् ।
चैद्यमागधकर्णाद्यैः किं कृतं तत्र भूमिपैः ।
आरूढमूलाः पार्थाश्च दरिद्रा निर्धना इति ।
जेतुं शक्या न मन्येथा अजय्याः पाण्डवाः सुरैः ।
यावत्तिष्ठति लोकेऽस्मिन्कृष्णो यादववंशजः ।
मुरारिः केशिहन्ता च लीलामानुषविग्रहः ।
प्रणतार्तिहरो योगी केशवः क्लेशनाशनः ।
भक्तानुवत्सलो भक्तस्वान्तवेश्मगृही तथा ।
चतुःसागरपर्यन्तां केवलं पृथिवीं न हि ।
धर्मात्मजो महाराज तावत्त्रैलोक्यमर्हति ।
अलं कर्णानया बुद्ध्या नोत्साहय सुयोधनम् ।
शकुने गच्छ मा गाधं निरयं कौरवैः सह ।
पाण्डवाश्च वयं सर्वे भूमिपाला सबान्धवाः ।

Colophon of No. 103. Adhy. no.: K4 D4 206; T1 204; T2 G1–3 156; G1 158; G2 154; G3 M3 157.

वृष्ण्यन्धकपुरोगाश्च यादवाः सहकेशवाः ।
सर्वे संभूय जीवाम सपुत्रपशुबान्धवाः ।
बोधयध्वं तथा भूप तथैव शरदां शतम् ।
मा पुत्रवशगो भूप तव पुत्रः सुदुर्मतिः ।
आनीय पाण्डवान्साधून्पुत्रांश्च सह सर्वशः ।
अभेदेन निरीक्षस्व न भेदं चक्षुषो कुरु ।
मनसा स्नेहपूर्णेन निर्भेदो नस्समासवत् ।

धृतराष्ट्र ।

पार्थिवार्थे प्रियं ब्रूहि नाप्रियं सूतनन्दन ।
पुत्रं त्वं च न मे ब्रूहि पार्थानामहितं क्वचित् ।
दुर्योधनमसन्मार्गान्निवर्तय महामते ।

## 105

After 1 199 9, D4 (marg *sec m* ) S ins

वैशंपायन ।

पृथायास्तु तथा वेश्म प्रविवेश महाद्युतिः ।
पादौ स्पृष्ट्वा पृथायास्तु शिरसा च महीं गतः ।
दृष्ट्वा तु देवरं कुन्ती शुशोच च मुहुर्मुहुः ।

कुन्ती ।

वैचित्रवीर्य ते पुत्राः कथंचिज्जीवितास्तथा ।
त्वत्प्रसादाज्जतुगृहे त्राता प्रत्यागतास्तव ।
कर्मभिश्चिन्तयसे पुत्रान्यत्र वा तत्र वा गतः ।
चिन्तया वर्धयेत्पुत्रान्यथा कूर्मालिनस्तथा ।
तव पुत्रास्तु जीवन्ति त्वं त्राता भरतर्षभ ।
यथा परभृतः पुत्रानरिष्टा वर्धयेत्सदा ।
तथैव तव पुत्रास्तु मया तात सुरक्षिताः ।
दुःखास्तु बहवः प्राप्तास्तथा प्राणान्तिका मया ।
अतः परं न जानामि कर्तव्यं ज्ञातुमर्हसि ।

वैशंपायन ।

इत्येवमुक्त्वा तु आर्ता शुशोच परमातुरा ।
प्रणिपत्याब्रवीत्क्षत्ता मा शोच इति भारत ।

विदुर ।

न विनश्यन्ति लोकेषु तव पुत्रा महाबलाः ।
अचिरेणैव कालेन स्वराज्यस्था भवन्ति ते ।
बान्धवैः सहिताः सर्वैर्मा शोकं कुरु माधवि ।

## 106

After 1 199 11, D4 (marg *sec m* ) S ins

सुवर्णकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ।
जाम्बूनदपरिष्कारान्प्रभिन्नकरटामुखान् ।
अधिष्ठितान्महामात्रैः सर्वशस्त्रसमन्वितान् ।
सहस्रं प्रददौ राजा गजानां वरवर्मिणाम् ।
रथानां च सहस्रं वै सुवर्णमणिचित्रितम् ।
चतुर्युजां भानुमच्च पाञ्चालः प्रददौ तदा ।
सुवर्णपरिबर्हाणां वरचामरमालिनाम् ।
जात्यश्वानां च पञ्चाशत्सहस्रं प्रददौ नृपः ।
दासीनामयुतं राजा प्रददौ वरभूषणम् ।
ततः सहस्रं दासानां प्रददौ वरधन्विनाम् ।
हैमानि शय्यासनभाजनानि
द्रव्याणि चान्यानि च गोधनानि ।
पृथक्पृथक्चैव ददौ स कोटिं
पाञ्चालराजः परमप्रहृष्टः ।
शिबिकानां शतं पूर्णं वाहान्पञ्चशतं वरान् ।
एवमेतानि पाञ्चालो जन्यार्थे प्रददौ धनम् ।
हरणं तत्र पाञ्चाल्या ज्ञातिदेयं तु सौमकिः ।
धृष्टद्युम्नो ययौ तत्र भगिनीं गृह्य भारत ।
नादयमानो बहुभिस्तूर्यशब्दैः सहस्रशः ।

*Here follows a colophon, which is followed by* वैशंपायन

## 107

After the additional colophon following 1 199 22, D4 (marg *sec m* ) S ins

वैशंपायन ।

दुर्योधनस्य महिषी काशिराजसुता तदा ।
धृतराष्ट्रस्य पुत्राणां वधूभिः सहिता तदा ।
पाञ्चालीं प्रतिजग्राह द्रौपदीं श्रीमिवापराम् ।
पूजयामास पूजार्हां शचीं देवीमिवागताम् ।
ववन्दे तत्र गान्धारीं माधवी कृष्णया सह ।
आशिषश्च प्रयुक्त्वा तु पाञ्चालीं परिषस्वजे ।
परिष्वज्य च गान्धारी कृष्णां कमललोचनाम् ।
पुत्राणां मम पाञ्चाली मृत्युरेवेत्यमन्यत ।
सा चिन्त्य विदुरं प्राह युक्तितः सुबलात्मजा ।

### 105

In the footnotes to 1 199 9 the passage is erroneously stated as containing 18 lines, the correct number is 17 — (L. 5) D4 T2 G1 2 M गता (for त्राता) — (L. 8) D4 G1.2 M त्वद्रूपया (for त्वं त्राता) — G1 M om lines 13–17

### 106

Line 11—(var ) 1931* — (L. 15) Some MSS सौमकि — Colophon om in T1 G1 M1 Adhy no D4 214, T2 G4 165, G3 162, G1 166, G2 4 164

### 107

(L. 3) G3–4 M2.3 श्रीं सिद्धिमिवापराम्

कुन्तीं राजसुतां क्षत्तः सवधूं सपरिच्छदाम् ।
पाण्डोर्निवेशनं शीघ्रं नीयतां यदि रोचते ।
करणेन मुहूर्तेन नक्षत्रेण तिथौ शुभे ।
यथा सुखं तथा कुन्ती रंस्यते स्वगृहे सुतैः ।
तथेत्येव तदा क्षत्ता कारयामास तत्तदा ।
पूजयामासुरत्यर्थं बान्धवाः पाण्डवांस्तदा ।
नागराः श्रेणिमुख्याश्च पूजयन्ति स्म पाण्डवान् ।
भीष्मद्रोणौ तथा कर्णो बाह्लीकः ससुतस्तदा ।
शासनाद्धृतराष्ट्रस्य अकुर्वन्प्रतिपत्क्रियाम् ।
एवं विहरतां तेषां पाण्डवानां महात्मनाम् ।
नेता सर्वस्य कार्यस्य विदुरो राजशासनात् ।

108

☞ In entire supercession of the remarks in the footnotes (p. 789) to 1. 199. 24-25 regarding this passage, substitute the following.

After 1. 199. 25, $D_4$ (marg. *sec. m.*) S ins.:

केशवो यदि मन्येत तत्कर्तव्यमसंशयम् ।;

and after 1. 199. $26^{ab}$:

वासुदेवेन संमन्त्र्य पाण्डवाः समुपाविशन् ।

धृतराष्ट्रः ।

अभिषेकस्य संभारान्क्षत्तरानय मාचिरम् ।
अभिषिक्तं करिष्यामि अद्यैव कुरुनन्दनम् ।
ब्राह्मणा नैगमश्रेष्ठाः श्रेणिमुख्याश्च सर्वशः ।
आहूयन्तां प्रकृतयो बान्धवाश्च विशेषतः ।
पुण्याहं वाच्यतां तात गोसहस्रं [illegible] दीयताम् ।
ग्राममुख्याश्च विप्रेभ्यो दीयन्तां सहदक्षिणाः ।
अङ्गदे मकुटं क्षत्तर्हस्ताभरणमेव च ।
मुक्तावलीं च हारं च निष्कादीन्कुण्डलानि च ।
कटिबन्धं च सूत्रं च तथोदरनिबन्धनम् ।
अष्टोत्तरसहस्रं च ब्राह्मणाधिष्ठिता गजाः ।
जाह्नवीसलिलं शीघ्रमानयन्तां पुरोहिताः ।
अभिषेकोदकक्लिन्नं सर्वाभरणभूषितम् ।
औपवाह्योपरिगतं दिव्यचामरवीजितम् ।
सुवर्णमणिचित्रेण श्वेतच्छत्रेण शोभितम् ।
जयेति द्विजवाक्येन स्तूयमानं नृपैस्तथा ।
दृष्ट्वा कुन्तीसुतं श्रेष्ठमाजमीढं युधिष्ठिरम् ।
प्रीताः प्रीतेन मनसा प्रशंसन्तु पुरे जनाः ।
पाण्डोः कृतोपकारस्य राज्यं दत्त्वा ममैव च ।
प्रतिक्रिया कृतमिदं भविष्यति न संशयः ।

वैशंपायनः ।

भीष्मो द्रोणः कृपः क्षत्ता साधु साध्वित्यभाषत ।

श्रीवासुदेवः ।

युक्तमेतन्महाराज कौरवाणां यशस्करम् ।
शीघ्रमद्यैव राजेन्द्र यथोक्तं कर्तुमर्हसि ।

वैशंपायनः ।

इत्येवमुक्त्वा वार्ष्णेयस्त्वरयामास तं तदा ।
यथोक्तं धृतराष्ट्रेण कारयामास कौरव ।
तस्मिन्क्षणे महाराज कृष्णद्वैपायनस्तदा ।
आगम्य कुरुभिः सर्वैः पूजितः ससुहृद्गणैः ।
मूर्धावसिक्तैः सहितो ब्राह्मणैर्वेदपारगैः ।
कारयामास विधिवत्केशवानुमते तदा ।
कृपो द्रोणश्च भीष्मश्च धौम्यश्च व्यासकेशवौ ।
बाह्लीकः सोमदत्तश्च चातुर्वैद्यपुरस्कृताः ।
अभिषेकं तदा चक्रुर्भद्रपीठे सुसंयतम् ।
जित्वा [illegible] पृथिवीं कृत्स्नां वशे कृत्वा नरर्षभान् ।
राजसूयादिभिर्यज्ञैः क्रतुभिर्भूरिदक्षिणैः ।
स्नात्वा ह्यवभृथस्नानं मोदन्तां बान्धवैः सह ।
एवमुक्त्वा तु ते सर्वे आशीर्भिः प्रत्यपूजयन् ।
मूर्धाभिषिक्तः कौरव्यः सर्वाभरणभूषितः ।
जयेति संस्तुतो राजा प्रददौ धनमक्षयम् ।
सर्वमूर्धावसिक्तैश्च पूजितः कुरुनन्दनः ।
औपवाह्यमथारुह्य दिव्यच्छत्रेण शोभितः ।
राज्ञामनुगतो राजा महेन्द्र इव दैवतैः ।
ततः प्रदक्षिणीकृत्य नगरं नागसाह्वयम् ।
प्रविवेश तदा राजा नागरैः पूजितो भृशम् ।
मूर्धावसिक्तं पाण्डुसुतमभ्यनन्दन्त पाण्डवाः ।
गान्धारिपुत्राः शोचन्तः सर्वे ते सह बान्धवैः ।
ज्ञात्वा शोकं तु पुत्राणां धृतराष्ट्रोऽब्रवीन्नृपम् ।
समक्षं वासुदेवस्य कुरूणां च समक्षतः ।
अभिषेकं त्वया प्राप्तं दुष्प्रापमकृतात्मभिः ।
गच्छ त्वमद्यैव नृप कृतकृत्योऽसि कौरव ।
आयुः पुरूरवा राजन्नहुषश्च ययातिना ।
तत्रैव निवसन्ति स्म खाण्डवाख्ये नृपोत्तम ।
राजधानी तु सर्वेषां पौरवाणां महाभुज ।
विनाशितं मुनिगणैर्लोभान्मुनिसुतस्य [illegible] ।
तस्मात्त्वं खाण्डवप्रस्थं पुरं राष्ट्रं च वर्धय ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतनिश्चयाः ।
त्वद्भक्तया जन्तवश्चान्ये भजन्त्येव पुरं शुभम् ।
पुरं राष्ट्रं समृद्धं वै धनधान्यैः समावृतम् ।

108

(L. 41) $D_4$ $G_1$ $M_{6-8}$ स्वराज राजानुगतैः. — (L. 44) $T_2$ $G_{3-4}$ मूर्धाभिषिक्तं पांडोस्तु सुतमभ्यर्णपांडवाः ($G_{3.4}$ °बांधवाः). — (L. 53) $T_1$ G (except $G_{3.5}$) बुध° (for मुनि°). — Line 59 is a *repetition* of 1. 199. $26^{ab}$.

तस्माद्रक्षस्व कौन्तेय भ्रातृभिः सहितोऽनघ ।
वैशंपायनः ।

Then follows a *repetition* of 1. 199. 26ab; and finally:

रथैर्नागैर्हयैश्चापि सहितास्तु पदातिभिः ।

## 109

*After* 1. 199. 35ab, *S ins.*:

पुरीं सर्वगुणोपेतां निर्मितां विश्वकर्मणा ।
पौरवाणामधिपतिः कुन्तीपुत्रो युधिष्ठिरः ।
कृतमङ्गलसत्कारो ब्राह्मणैर्वेदपारगैः ।
द्वैपायनं पुरस्कृत्य धौम्यस्यानुमते स्थितः ।
भ्रातृभिः सहितो राजन्केशवेन महाभिभूः ।
तोरणद्वारसुमुखां द्वात्रिंशद्द्वारसंयुताम् ।
वर्धमानपुरद्वारां प्रविवेश महाद्युतिः ।
शङ्खदुन्दुभिनिर्घोषाः श्रूयन्ते बहवो भृशम् ।
जयेति ब्राह्मणगिरः श्रूयन्ते च सहस्रशः ।
संस्तूयमानो बहुभिः सूतमागधवन्दिभिः ।
औपवाह्यगतो राजा राजमार्गमतीत्य च ।
कृतमङ्गलसत्कारं प्रविवेश गृहोत्तमम् ।
प्रविश्य भवनं राजा सत्कारैरभिपूजितः ।
पूजयामास विप्रेन्द्रान्केशवेन यथाक्रमम् ।
ततस्तु राष्ट्रं ववृधे नरनारीगणायुतम् ।
गोधनैश्च समाकीर्णं सस्यवृद्धिस्तदाभवत् ।

## 110

*After* 1. 199. 49, D4 (*marg. sec. m.*) S *ins.*:

ततस्तु विश्वकर्माणं पूजयित्वा विसृज्य च ।
द्वैपायनं च संपूज्य विसृज्य च नराधिप ।
वार्ष्णेयमब्रवीद्राजा गन्तुकामं कृतक्षणम् ।
तव प्रसादाद्वार्ष्णेय राज्यं प्राप्तं मयानघ ।
प्रसादादेव ते वीर शून्यं राष्ट्रं सुदुर्गमम् ।
तवैव तत्प्रसादेन राज्यस्यास्य भवामहे ।
गतिस्त्वमन्तकाले च पाण्डवानां तु माधव ।
मातास्माकं पिता देवो न पाण्डुं विद्महे वयम् ।
ज्ञात्वा तु कृत्यं कर्तव्यं पाण्डवानां त्वयानघ ।
श्रीवासुदेवः ।
त्वत्प्रभावान्महाभाग राज्यं प्राप्तं स्वधर्मतः ।
पितृपैतामहं राज्यं कथं न स्यात्तव प्रभो ।
धार्तराष्ट्रा दुराचाराः किं करिष्यन्ति पाण्डवान् ।
यथेष्टं पालय महीं सदा धर्मधुरं वह ।
धर्मोपदेशः संक्षेपाद्ब्राह्मणान्भर कौरव ।
अद्यैव नारदः श्रीमानागमिष्यति सत्वरः ।
आदत्स्व तस्य वाक्यानि शासनं कुरु तस्य वै ।
वैशंपायनः ।
एवमुक्त्वा ततः कुन्तीमभिवाद्य जनार्दनः ।
उवाच श्लक्ष्णया वाचा गमिष्यामि नमोऽस्तु ते ।
कुन्ती ।
जातुषं गृहमासाद्य मया प्राप्तं च केशव ।
आर्येणापि तव ज्ञातं कुन्तिभोजेन चानघ ।
त्वया नाथेन गोविन्द दुःखं प्राप्तं महत्तरम् ।
किं पुनस्त्वमनाथानां दरिद्राणां विशेषतः ।
सर्वदुःखानि शाम्यन्ति तव संदर्शनान्मम ।
स्मरस्येतान्महाप्राज्ञ तेन जीवन्ति पाण्डवाः ।
वैशंपायनः ।
करिष्यामीति चामन्त्र्य अभिवाद्य पितृष्वसाम् ।
गमनाय मतिं चक्रे वासुदेवः सहानुगः ।

## 111

*After* 1. 200. 9ab, D4 (*marg. sec. m.*) S *ins.*:

आययौ धर्मराजं [illegible] द्रष्टुकामोऽथ नारदः ।
तथा नक्षत्रजुष्टेन सुपर्णचरितेन च ।
चन्द्रसूर्यप्रकाशेन सेवितेन महर्षिभिः ।
नभःस्थलेन दिव्येन दुर्लभेनातपस्विनाम् ।
भूतार्चितो भूतधरो राष्ट्रं नगरमालिनीम् ।
अवेक्षमाणो द्युतिमानाजगाम महातपाः ।
सर्ववेदान्तगो विप्रः सर्वविद्यासु पारगः ।
परेण तपसा युक्तो ब्राह्मेण तपसा वृतः ।
नये नीतौ च नियतो विश्रुतश्च महामुनिः ।
परात्परतरं प्राप्तो धर्मात्समभिजग्मिवान् ।
भावितात्मा गतरजाः शान्तो मृदुरृजुर्द्विजः ।
धर्मेणाभिगतः सर्वैर्देवदानवमानवैः ।
क्षीणकर्मसु पापेषु भूतेषु विविधेषु च ।
सर्वथा कृतमर्यादो वेदेषु विविधेषु च ।
दातारः सोमपा यज्ञे पुण्यकर्मदृढनिश्चितः ।
ऋक्सामयजुषां वेत्ता न्यायवृत्तान्तकोविदः ।

---

### 109

In the footnotes to 1. 199. 35ab the number of lines in this passage is erroneously stated to be 18; the correct number is 16.

### 110

(L. 20) D4 G2.3 °त चापि न द°; T1 °न्ति च न द°; C4 M3 °त च न चान°.

### 111

(L. 13) D4 T1 G2.3 M1-3 भूतेषु; G1 वेदेषु (*for* भू°).

ऋजुरारोहवान्शुक्लो भूयिष्ठपथिकोऽनघः ।
श्लक्ष्णया शिखयोपेतः संपन्नः परमत्विषा ।
अवदाते च सूक्ष्मे च दिव्ये च रुचिरे शुभे ।
महेन्द्रदत्ते महती बिभ्रत्परमवाससी ।
जाम्बूनदमये दिव्ये गण्डूपदमुखेन वै ।
अध्यर्कसदृशे दिव्ये धारयन्कुण्डले शुभे ।
राजतच्छत्रमुच्छ्रित्य चित्रं परमवर्चसम् ।
प्राप्य दुष्प्रापमन्येन ब्रह्मवर्चसमुत्तमम् ।
भवने भूमिपालस्य बृहस्पतिरिवाप्लुतः ।
संहितायां च सर्वेषां स्थितस्योपस्थितस्य च ।
द्विपदस्य च धर्मस्य क्रमधर्मस्य पारगः ।
गाथासामानुसामज्ञः साम्नां परमवल्गुनाम् ।
आत्मना सर्वमोक्षिष्यः कृतिमान्कृत्यवित्तथा ।
योक्ता धर्मे बहुविधे मनो मतिमतां वरः ।
विदितार्थः स्वसमयच्छेत्ता निगमसंशयान् ।
अर्थनिर्वचने नित्यं संशयच्छिदसंशयः ।
प्रकृत्या धर्मकुशलो नानाधर्मविशारदः ।
लोपेनागमधर्मेण संक्रमेण च वृत्तिषु ।
एकशब्दांश्च नानार्थानेकार्थांश्च पृथक् श्रुतीन् ।
पृथगर्थाभिधानं च प्रयोगाणामवेक्षिता ।
प्रमाणभूतो लोकस्य सर्वाधिकरणेषु च ।
सर्ववर्णविकारेषु नित्यं सकलपूजितः ।
स्वरे स्वरे च विविधे वृत्तेषु विविधेषु च ।
समस्थानेषु सर्वेषु समाम्नायेषु धातुषु ।
उद्देश्यानां समाख्याता सर्वमाख्यातमुद्दिशन् ।
अभिसंधिषु तत्त्वज्ञः पदान्यङ्गान्यनुस्मरन् ।
कालधर्मेण निर्दिष्टं यथार्थं च विचारयन् ।
चिकीर्षितं च यो वेत्ता यथा लोकेन संवृतम् ।
विभाषितं च समयं भाषितं हृदयंगमम् ।
आत्मने च परस्मै च स्वरसंस्कारयोगवान् ।
एषां स्वराणां ज्ञाता च बोद्धा प्रवचनस्वरान् ।
विज्ञाता उक्तवाक्यानामेकतां बहुतां तथा ।
बोद्धा च परमार्थांश्च विविधांश्च व्यतिक्रमान् ।
अभेदतश्च बहुशो बहुशश्चापि भेदतः ।
वचनानां च विविधानादेशांश्च समीक्षिता ।
नानार्थकुशलस्तत्र तद्धितेषु च कृत्स्नशः ।
परिभूषयिता वाचां वर्णतः स्वरतोऽर्थतः ।
प्रत्ययांश्च समाख्याता नियतं प्रतिधातुकम् ।
पञ्च चाक्षरजातानि स्वरसंज्ञानि यानि च ।

☞ In the footnotes to 1. 200. 9, in the remarks regarding the present passage, for "27 lines" read "55 lines"; deleting "— [illegible]) [illegible] आययौ धर्मराजं तु द्रष्टुकामोऽथ नारदः", as well as the *wavy line* under 9[cd] of the constituted text.

## 112

After 1. 209. 24[abc], Ñ2 D4 (marg. sec. m.) S ins.:

चित्रवाहनमब्रवीत् ।
चित्राङ्गदायाः शुल्कं च गृहेमं बभ्रुवाहनम् ।
अनेन तु भविष्यामि ऋणान्मुक्तो जनाधिप ।
चित्राङ्गदां पुनर्वाक्यमब्रवीत्पाकशासनिः ।
इहैव भव भद्रे त्वं बभ्रुवाहनवर्धना ।
इन्द्रप्रस्थनिवासं मे आगता तत्र रंस्यसे ।
कुन्तीं युधिष्ठिरं भीमं भ्रातरौ मे कनीयसौ ।
आगता तत्र पश्येथा अन्यानपि च बान्धवान् ।
बान्धवैः सहिता भद्रे नन्दसे त्वमनिन्दिते ।
धर्मे स्थितः सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
जित्वा तु पृथिवीं सर्वां राजसूयं करिष्यति ।
तत्रागच्छन्ति राजानः पृथिव्यां नृपसंज्ञिताः ।
बहूनि रत्नान्यादाय आगमिष्यति ते पिता ।
एकसार्थं प्रयातासि चित्रवाहनसेनया ।
द्रक्ष्यामि राजसूये त्वां पुत्रं पालय मा शुचः ।
बभ्रुवाहननाम्ना तु मम प्राणो बहिश्चरः ।
तस्माद्भरस्व पुत्रं वै पुरुवंशविवर्धनम् ।
चित्रवाहनदायादं धर्मात्पौरवनन्दनम् ।
पाण्डवानां प्रियं पुत्रं तस्मात्पालय सर्वदा ।
विप्रयोगेन संतापं मा कृथास्त्वमनिन्दिते ।
चित्राङ्गदामेवमुक्त्वा.

## 113

After 1. 210. 2, D4 (marg. sec. m.) [illegible] ins.:

चिन्तयामास रात्रौ [illegible] गदेन कथितां कथाम् ।

— (L. 14) Some MSS. वेदेषु (for देवेषु). — (L. 27) D4 G3.6 M6–8 सर्वस्य (for धर्मस्य). — (L. 44) D4 G3.6 द्र(D4 व)र्कंरिवेन (for यथा लोकेन). — (L. 51) D4 G3.5.6 वनानां विविधानां च देशानां च समी°.

112

(L. 2) Ñ2 D4 T1 M (except M8) त्वं (for च). — (L. 3) D4 T1 M ऋणमुक्तो. — (L. 10) Ñ2 D4 G1 M कौंतेयोथ (for कुन्ती°). — (L. 11) D4 G1 M कृत्स्नां (for सर्वां). — After line 21, D4 T2 G3.6 ins.:

सागरानुपमाश्रितः ।
स्नानं दूरं समाप्लुत्य दत्त्वा बहुधनं तदा ।
केरलान्समतिक्रम्य.

सुभद्रायाश्च माधुर्यं रूपसंपद्गुणानि च ।
प्राप्तुं तां चिन्तयामास क उपायो भवेदिति ।
वेषवैकृतमापन्नः परिव्राजकरूपधृक् ।
कुकुरान्धकवृष्णीनामज्ञातो वेषधारणात् ।
भ्रममाणश्चरन्भैक्षं परिव्राजकवेषवान् ।
येन केनाप्युपायेन प्रविश्य च गृहं महत् ।
दृष्ट्वा सुभद्रां कृष्णस्य भगिनीमेकसुन्दरीम् ।
वासुदेवमतं ज्ञात्वा करिष्यामि हितं शुभम् ।
एवं विनिश्चयं कृत्वा दीक्षितस्तु तदाभवत् ।
त्रिदण्डी मुण्डितः कुण्डी अक्षमालाङ्गुलीयकः ।
योगभारं वहन्पार्थो वटवृक्षस्य कोटरम् ।
प्रविश्यैव बीभत्सुर्वृष्टिं वर्षति वासवे ।
चिन्तयामास देवेशं केशवं क्लेशनाशनम् ।
प्रणतार्तिहरं शंभुं मायारूपेण वञ्चकम् ।
केशवश्चिन्तितं ज्ञात्वा दिव्यज्ञानेन दृष्टवान् ।
शयानः शयने धन्ये सत्यभामासहायवान् ।
केशवः सहसा राजञ्जहास च ननन्द च ।
पुनः पुनः सत्यभामा चाब्रवीत्पुरुषोत्तमम् ।

सत्यभामा ।

भगवंश्चिन्तयाविष्टः शयने शयितः सुखम् ।
भवान्बहुप्रकारेण जहास च पुनः पुनः ।
श्रोतव्यं यदि वा कृष्ण प्रसादो यदि चेन्मयि ।
वक्तुमर्हसि लोकेश तच्छ्रोतुं कामये ह्यहम् ।

श्रीभगवान् ।

पितृष्वसायाः पुत्रो मे भीमसेनानुजोऽर्जुनः ।
तीर्थयात्रां गतः पार्थः कारणात्समयात्तदा ।
तीर्थयात्रासमाप्तौ तु निवृत्तो निशि भारतः ।
सुभद्रां चिन्तयानस्तु तदर्थे चापि मां पुनः ।
चिन्तयन्नेव तां भद्रां यतिरूपधरोऽभवत् ।
यतिरूपप्रतिच्छन्नो द्वारकां प्राप्य माधवीम् ।
येन केनाप्युपायेन दृष्ट्वा तु वरवर्णिनीम् ।
वासुदेवमतं ज्ञात्वा प्रयतिष्ये मनोरथम् ।
एवं व्यवसितः पार्थो यतिलिङ्गेन पाण्डवः ।
छायायां वटवृक्षस्य वृष्टिं वर्षति वासवे ।
योगभारं वहन्नेव मानसं दुःखमास्थवान् ।
ईदृशं मां विजानाति माधवो यदि मां स्मरन् ।

वैशंपायनः ।

भ्रातरं तव पश्येति सत्यभामामदर्शयत् ।
तत उत्थाय शयनात्प्रस्थितो मधुसूदनः ।

## 114

S ins. after 1. 212. 1[cd] (T2 G3.4 after 7[ab]): M (suppl. fol. *sec. m.*), after 2[ab]:

चिन्तयानस्ततो भद्रामुपविष्टः शिलातले ।
रमणीये वनोद्देशे बहुपादपसंवृते ।
सालतालाश्वकर्णैश्च बकुलैरर्जुनैस्तथा ।
चम्पकाशोकपुंनागैः केतकैः पाटलैस्तथा ।
कर्णिकारैरशोकैश्च अङ्कोलैरतिमुक्तकैः ।
एवमादिभिरन्यैश्च संवृते स शिलातले ।
पुनः पुनश्चिन्तयानः सुभद्रां भद्रभाषिणीम् ।
यदृच्छया चोपपन्नान्वृष्णिवीरान्ददर्श ह ।
बलदेवं च हार्दिक्यं साम्बं सारणमेव च ।
प्रद्युम्नं च गदं चैव चारुदेष्णं विदूरथम् ।
भानुं च निशठं चैव पृथुं विपृथुमेव च ।
तथान्यांश्च बहून्पश्यन्हृदि शोकमधारयत् ।
ततस्ते सहिताः सर्वे यतिं दृष्ट्वा समुत्सुकाः ।
कृष्णयो विनयोपेताः परिवार्योपतस्थिरे ।
ततोऽर्जुनः प्रीतमनाः स्वागतं व्याजहार सः ।
आस्यतामास्यतां सर्वे रमणीये शिलातले ।
इत्येवमुक्ता यतिना प्रीतास्ते यादवर्षभाः ।
उपोपविविशुः सर्वे सुस्वागतमिति ब्रुवन् ।
ततस्तेषु निविष्टेषु वृष्णिवीरेषु पाण्डवः ।
आकारं गूहमानस्तु कुशलप्रश्नमब्रवीत् ।
सर्वेश्च कुशलं चोक्त्वा बलदेवोऽब्रवीदिदम् ।
प्रसादं कुरु मे विप्र कुतस्त्वं चागतो ह्यसि ।
त्वया दृष्टानि पुण्यानि वदस्व वदतां वर ।
पर्वतांश्चैव तीर्थानि वनान्यायतनानि च ।

वैशंपायनः ।

तीर्थानां दर्शनं चैव पर्वतानां च भारत ।
आपगानां वनानां च कथयामास यादवे ।
ताः कथाः कथयन्नेव कथान्ते जनमेजय ।
कथां धर्मसमायुक्तां वृष्णिवीरे न्यवेदयत् ।
श्रुत्वा धर्मकथां पुण्यां वृष्णिवीरोऽभ्यपूजयत् ।
ततस्तु यादवाः सर्वे प्रशंसन्ति स्म भारत ।
अयं देवातिथिः श्रीमान्यतिलिङ्गधरो द्विजः ।
आयासं कमुपाश्रित्य वसेत निरुपद्रवः ।
इत्येवमनुमन्त्रे वै रौहिणेयं तु यादवाः ।
ददृशुः कृष्णमायान्तं सर्वे यादवनन्दनम् ।
एहि केनाथ तातेति रौहिणेयोऽब्रवीद्वचः ।

---

### 113

D5 T2 G1 M6-8 om. line 35. — After line 35, G3.6 ins.:

त्रिपिष्टापगतस्येव आर्षैः परिपदैर्नैः ।

### 114

(L. 40) D5 दारय; T1 M6 मारयः (*for* मां यद्). — (L. 47) T1 G1.2 M6-8 यामी. — After line 51, T1 ins.:

[illegible] ।

यतिलिङ्गधरो विद्वान्देशातिथिरयं द्विजः ।
वर्षरात्रनिवासार्थमागतो नः पुरं प्रति ।
स्थाने यस्मिन्निवसति तन्मे ब्रूहि जनार्दन ।
श्रीभगवान् ।
त्वयि स्थिते महाभाग परवानस्मि धर्मतः ।
स्वयं तु रुचिरे स्थाने वसतामिति मां वद ।
वैशंपायनः ।
सुप्रीतस्तेन वाक्येन परिष्वज्य जनार्दनम् ।
बलदेवोऽब्रवीद्वाक्यं चिन्तयित्वा महाबलः ।
आरामे [illegible] वसेद्धीमांश्चतुरो वर्षमासकान् ।
कन्यापुरे सुभद्राया भुक्त्वा भोजनमिष्टतः ।
लतागृहेषु वसतामिति मे धीयते मतिः ।
लब्धानुज्ञास्त्वया तत्र मन्यन्ते सर्वयादवाः ।
वासुदेवः ।
बलवान्दर्शनीयश्च वाग्मिच्छ्रीमान्बहुश्रुतः ।
कन्यापुरसमीपे तु न युक्तमिति मे मतिः ।
गुरुः शास्ता च नेता च शास्त्रज्ञो धर्मवित्तमः ।
त्वयोक्तं न विरुध्येऽहं करिष्यामि वचस्तव ।
शुभाशुभस्य विज्ञाने नान्योऽस्ति भुवि कश्चन ।
बलदेवः ।
अयं देशातिथिः श्रीमान्सर्वधर्मविशारदः ।
धृतिमान्विनयोपेतः सत्यवाग्विजितेन्द्रियः ।
यतिलिङ्गधरो ह्येष को विजानाति मानसम् ।
त्वमिमं पुण्डरीकाक्ष नीत्वा कन्यापुरं शुभम् ।
निवेद्य सुभद्रायै मद्वाक्यपरिचोदितः ।
भक्ष्यैर्भोज्यैश्च पानैश्च अन्यैरिष्टैश्च पूजय ।

Colophon.

वैशंपायनः ।
स तथेति प्रतिज्ञाय सहितो यतिना हरिः ।
कृत्वा तु संविदं तेन महृष्टः केशवोऽभवत् ।
पर्वते तौ विहृत्यैव यथेष्टं कृष्णपाण्डवौ ।
तां पुरीं प्रविवेशाथ गृह्य हस्ते च पाण्डवम् ।
प्रविश्य च गृहं रम्यं सर्वभोगसमन्वितम् ।
पार्थमावेदयामास रुक्मिणीसत्यभामयोः ।
हृषीकेशवचः श्रुत्वा ते उभे ऊचतुर्भृशम् ।
मनोरथो महानेष हृदि नः परिवर्तते ।
कदा द्रक्ष्याम बीभत्सुं पाण्डवं गृहमागतम् ।
इति चिन्तयमानानां पार्थो दुःखमपानुदत् ।
प्राप्तमज्ञातपूजाभिरुत्तमाभिरपूजयत् ।
स तं प्रियातिथिश्रेष्ठं समीक्ष्य यतिमागतम् ।
सोदर्यां भगिनीं कृष्णः सुभद्रामिदमब्रवीत् ।
अयं देशातिथिर्भद्रे संयतो व्रतवानृषिः ।
प्राप्नोतु सततं पूजां तव कन्यापुरे वसन् ।
आर्येण च परिज्ञातः पूजनीयो यतिः सदा ।
तस्माद्वरस्व वार्ष्णेयि भक्ष्यैर्भोज्यैर्यतिं सदा ।
एष यद्यदभिब्रूयात्कार्यमेव न संशयः ।
सखीभिः सहिता भद्रे भवास्य वशवर्तिनी ।
पुरापि यतयो भद्रे ये भैक्षार्थमनुव्रताः ।
ते बभूवुर्दशार्हाणां कन्यापुरनिवासिनः ।
तेभ्यो भोज्यानि भक्ष्याणि यथाकालमतन्द्रिताः ।
कन्यापुरगताः कन्याः प्रयच्छन्ति यशस्विनि ।
सा तथेत्यब्रवीत्कृष्णं करिष्यामि यथात्थ माम् ।
तोषयिष्यामि वृत्तेन कर्मणा च द्विजर्षभम् ।
एवमेतेन रूपेण कंचित्कालं धनंजयः ।
उवास भक्ष्यैर्भोज्यैश्च भद्रया परमार्चितः ।
तस्य सर्वगुणोपेतां वासुदेवसहोदराम् ।
पश्यतः सततं भद्रां प्रादुरासीन्मनोभवः ।
गूहयन्निव चाकारमालोक्य वरवर्णिनीम् ।
दीर्घमुष्णं निशश्वास पार्थः कामवशं गतः ।
स कृष्णां रूपतो मेने वासुदेवसहोदराम् ।
प्राप्तां हृदीन्द्रसेनां वा साक्षाद्वा वरुणात्मजाम् ।
अतीतसमये काले सोदर्यायां धनंजयः ।
न सस्मार सुभद्रायाः कामाङ्कुशनिवारितः ।
क्रीडारतिपरां भद्रां सखीजनशतैर्वृताम् ।
प्रीयते स्मार्जुनः पश्यन्स्वाहामिव हुताशनः ।
पाण्डवस्य सुभद्रायाः सकाशे तु यशस्विनः ।
समुत्पत्तिः प्रभावश्च गदेन कथितः पुरा ।
श्रुत्वा चाशनिनिर्घोषं केशवेनापि धीमता ।
उपमामर्जुनं कृत्वा विस्तरः कथितः पुरा ।
कुद्धमत्तप्रलापश्च वृष्णीनामर्जुनं प्रति ।
पौरुषाण्युपमां कृत्वा प्रावर्धन्त धनुष्मताम् ।
अन्योन्यकलहे चापि विवादे चापि वृष्णयः ।
अर्जुनोऽपि न मे तुल्यः कुतस्त्वमिति तेऽब्रुवन् ।
जातांश्च पुत्रान्गृह्णन्त आशिषो वृष्णयोऽब्रुवन् ।
अर्जुनस्य समो वीर्ये भव तात धनुर्धरः ।
तस्मात्सुभद्रा चकमे पौरुषाद्भरतर्षभम् ।
सत्यसंधस्य रूपेण चातुर्येण च मोहिता ।
चारणातिथिसंघानां गदस्य च निशम्य सा ।

---

बलवानिन्द्रियग्रामो न जाने किं भविष्यति ।
— After line 55, $T_1$ (which om. lines 56–57) ins.:
कृष्णः ।
कन्यापुरे भवेद्वासः सुखोदर्कोऽथवा भवेत् ।
सुखोदर्को भवेद्वापि नाहं जाने यदुद्वह ।
भवता परवानस्मि यावदाचन्द्रतारकम् ।
Colophon om. in $T_1$. *Adhy. no.:* $D_4$ 229; $T_2$ $G_1$ 180; $G_{3.4.5}$ $M_8$ 179; $G_2$ 177; $G_6$ 181. — (L. 129)

आचार्यैः सुकृतं गूढैर्दुर्योधनवशानुगैः ॥ १७
भीम उवाच ।
यदिदं गृहमाग्नेयं विहितं मन्यते भवान् ।
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम् ॥ १८
युधिष्ठिर उवाच ।
इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये ।
नष्टैरिव विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः ॥ १९
यदि विन्देत चाकारमस्माकं हि पुरोचनः ।
शीघ्रकारी ततो भूत्वा प्रसह्यापि दहेत नः ॥ २०
नायं बिभेत्युपक्रोशादधर्माद्वा पुरोचनः ।
तथा हि वर्तते मन्दः सुयोधनमते स्थितः ॥ २१
अपि चेह प्रदग्धेषु भीष्मोऽस्मासु पितामहः ।
कोपं कुर्यात्किमर्थं वा कौरवान्कोपयेत सः ।
धर्म इत्येव कुप्येत तथान्ये कुरुपुंगवाः ॥ २२ C 1 5791 B 1 145 45 K 1 153 42

°वान्पुरा) (G1 सद्यः प्रतिबोधित ) — After 16, K2 ins

1464* आग्नेयं दचिरं वेश्म कारितं दृश्यते शुभम् ।,

while G1 ins

1465* अस्माकं भागधेयेन विदुरेण महात्मना ।

17 After 17ᵃ, Ñ2 V1 B D (except D5) T1 ins

1466* नित्यमस्माद्धितैषिणा ।
पित्रा कनीयसा स्नेहात्

— ᵇ) Ś1 K1 Ñ1 2 V1 B D G2 6 बुद्धिम(D5 G3.6 °व)तो, M3 5 बुध्यतो न, M6-8 बुध्यामो न — ᶜ) K0 D5 शिल्पिभि , K3 4 Ñ3 V1 B D3 D6 D2 3 4 अनार्यै (B3 D4 °र्यैः) G3 सुहृद (for सुकृ°) K2 शूरै , K3 4 B1 D4 मूढै , G6 गूढै — ᵈ) D1 ते न दुर्योधने यथा — A passage of 32 lines given in App I (No 84) is ins in G1 2 after 17, in T2 G4 after 18

18 Ś1 K1.2 4 Ñ1 2 V1 D (except D5) भीमसेन Ś1 K1 S om उ°. — ᵃ) K3 5 Ñ V1 B (except B3) D (except D4 D1) M3 3 यदीदं — ᵇ) B2 (m as in text) G3 5 विदित K1 मन्यते विहित (by transp ) — After 18ᵃᵇ, K2 ins

1467* पुरोचनमिमं दग्ध्वा गम्यते वारणावतात् ।

— ᶜ) V1 Dn तथैव — After 18, T2 G4 ins a passage given in App I (No 84), cf v 1 17

19 Ś1 K1 S om उवाच (G1 6 om the ref ) — ᵃ) K0 4 Ñ1 V1 D1 3 T2 G3 यत्तैरद्, Cd as in text. — ᵇ) Ś1 K0 3 4 अपि (for इति) G1 कुतोऽस्मासु वृकोदर — After 19ᵃᵇ, G1 ins

1468* इति किं स्वयमेतावा कस्तत परमापतत् ।
विचारयन्तो जाग्रन्त प्राणिमिर्हितकाङ्क्षिभि ।
इहैव वस्तव्यमिति मन्मनो रोचतेऽनुज ।

— ᶜ) K3 Ñ2 B Dn D1 2 4 T1 अप्रमत्तैर्, Ñ1 नष्टैरपि, V1 सुसैरपि, D5 T2 G1-6 M दुष्टैरिव, G1 दृष्टैरिह, G2 3 दुष्टैरिव, Cd as in text. — ᵈ) S गतिमन्यां K1 दिवा गति (sic), K3 D1 T2 G3 4 5 M मवीमि च (G5 sup lin च ); K4 T2 G3 ध्रुवामिव, B1 D5 ध्रुवामिति, B5 धुरादिस , G1 सुखप्रदां, G3 ध्रुवा मति — After 19, G1 ins

1469* इत पर ते किं कुर्युजिज्ञासद्भिरभीतवत् ।

20 ᵃ) D5 विंदति, T1 विद्येत G (except G5) आकार (G3 कारण) यदि जानीयाद् — ᵇ) Ś1 K1 तु, K2 च, K3 Ñ2 V1 B D M3 5 स, T1 नु (for हि) — G5 om 20ᶜᵈ — ᶜ) Ñ2 V1 B D T2 क्षिप्रकारी — ᵈ) K2 दहेत्स न , T2 G (G6 om ) दहेतु न , M3 5 दहेत स K3 प्रसह्य विदहेत्तत ; M6-8 प्रदह्यादपि हेतुत

21 ᵃ) Ś1 K1 Cd उपाक्रोशाद्, V1 अनु° M नैव बिभ्य(M3 5 नैव बिभ्र)त्युक्रो° — ᵇ) Ś1 माधर्माद्वा, K4 G (except G3 5) अधर्माच, M अधर्मात्मा — Ñ1 2 V1 om 21ᶜᵈ — ᶜ) Ś1 M5 तथापि, D5 T2 G3 स तथा, G1-4.6 तथा च B3 5 मूढ (for मन्द ) — ᵈ) Ś1 K (except K1) Ñ3 B3 D (except D4) T1 सुयोधनवशे, T2 G M दुर्योधनमते (M3 °वशे)

22 ᵃ) Ś1 K Ñ1 V1 अपि चापीह (K3 चात्र हि ), Ñ3 अग्निना ह प्र , B3 6 D5 4 5 अथवापीह, Dn T1 अपि चाप प्र ; G (except G5) अपि चास्मासु — ᵇ) K2 [ऽ]स्माक, G (except G5) कुरु (for ऽस्मासु) — K2 om 22ᶜᵈ — ᶜ) Ñ1 कोप कृत्वा, T1 G (except G5) न कुप्येत — ᵈ) Ñ V1 B D (except D5) कोपयीत स , T2 G5 कोपयेतस , G1-4 6 M कोपये(G2 °य)त्र स (G2 °सर ) — After 22ᶜᵈ, K3 4 Ñ V1 Dn D1 2 S ins

1470* अथवापीह दग्धेषु भीष्मोऽस्माक पितामह ।

[ Cf 22ᵃᵇ V1 अथवा नेह K3 4 Dn [ऽ]स्मासु S तथा (T1 मात्रा) हि (T2 G2 4 5 पि, G1 मि ) सह दग्धेषु विदुर सर्पि ]

— ᵉ) V1 B D (except D5) कुप्येरन् K0 5 D1 4 T1 अ(T1 न)धर्म इति कु°, T2 G1 3-6 धर्मो नेदे(G5 न ही)ति कु°, G2 द्रोण कृपश्च बाह्लीका , M धर्मो नेत्येव कु° — ᶠ) Ñ3 V1 B D (except D5) T1 ये चान्ये — After 22, G (except G5) ins

वयं तु यदि दाहस्य बिभ्यतः प्रद्रवेम हि ।
स्पशैर्नो घातयेत्सर्वान्राज्यलुब्धः सुयोधनः ॥ २३

अपदस्थान्पदे तिष्ठन्नपक्षान्पक्षसंस्थितः ।
हीनकोशान्महाकोशः प्रयोगैर्घातयेद्ध्रुवम् ॥ २४

तदस्माभिरिमं पापं तं च पापं सुयोधनम् ।
वञ्चयद्भिर्निवस्तव्यं छन्नवासं क्वचित्क्वचित् ॥ २५

ते वयं मृगयाशीलाश्चराम वसुधामिमाम् ।
तथा नो विदिता मार्गा भविष्यन्ति पलायताम् ॥ २६

भौमं च बिलमद्यैव करवाम सुसंवृतम् ।
गूढोच्छ्वासान्न नस्तत्र हुताशः संप्रधक्ष्यति ॥ २७

वसतोऽत्र यथा चास्मान्न बुध्येत पुरोचनः ।
पौरो वापि जनः कश्चित्तथा कार्यमतन्द्रितैः ॥ २८

इति श्रीमहाभारते आदिपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

---

1471* उपपन्न तु दग्धेषु कुलवशानुकीर्तिता ।
कुर्युरन्यदि धर्मज्ञास्तथान्ये कुरुपुंगवा ।
[ (L. 1) G3 दग्धेष्वथ, G5 दग्धेषु G1 °नुकीर्तना — (L. 2) G3 येतिधर्मज्ञा Posterior half = 22$^{cd}$ ]

23 $^{a}$) T2 G यदि दाहाद्धि (G3 यदिहापद्य) — $^{b}$) K4 G1-4 M6-8 बिभ्यत K (except K1) D2 4 5 S (except T1 M5 8) प्राद्रवे° — $^{c}$) Ś1 K1 स्पष्ट, K2 सरैद्, K4 चारैर्, Ñ3 पाशैर्, D4 धूरैर्, D5 परैर्, G3 4 स्वय, Cd as in text Ñ2 3 Dn D1 निर्घातयेत् (for नो घात°) Ś1 K (except K2) D5 राजा (for सर्वान्) N1 सर्वैर्न्यैर्घातयेत्स° — $^{d}$) G3 राज्यबुद्धि

24 $^{b}$) K0 3.4 °संवृत, K3 Ñ3 3 T2 G2-5 M °संश्रित — $^{c}$) A few MSS कोष- (for कोश) — $^{d}$) Ś1 स्पष्ट नो, K0 3 3 N3 स्पर्शैर्नो (Ñ3 °नौ), K3 दृष्टना, K4 शत्रैर्नो; Ñ1 समतो, D5 सर्वैर्नो, G3 प्रयत्नाद्, M प्रायो वै (for प्रयोगैर्) G5 घातयेद्ध्रुव

25 $^{a}$) K0 3 B1 sm 6 Da इदं पाप — $^{c}$) K2 विवञ्चद्भिर् K0 3 4 Ñ1 3 G1 M7 8 विवस्तव्य, T2 G3 5 हि व° K1 (corrupt) वञ्चशद्भिरिवस्तव्य — $^{d}$) K1 छन्न वास, N1 सन्न, B D (except D5) T1 छन्ना°, T2 G1 4 5 जन°, G1 3 6 छन्न वीर (G2 °र)

26 $^{a}$) G3 6 मृगया (G5 °या) वीरा — $^{b}$) K0 3 4 D4 5 चराम, Ñ3 चरतो, T2 G5 चरम K3 G1 3 6 पृथिवीमिमा — $^{c}$) K2 यथा, G1 ततो, G3 तदा — $^{d}$) K4 D5 G6 पलायिनां

27 $^{a}$) G1 भूमौ च — $^{b}$) K2 T G (except G3) कारयाम, D5 M करिष्याम — $^{c}$) Ñ3 B3 Dn2 n3 G1 गूढश्वासान्, T1 M गूढोच्छ्वास, G1 3 गूढाश्वासान्, G2 गूढवास (sic), Cd as in text. G2 M ततस्तत्र K2 गूढानस्मानतो नात्र, T2 G5 भौम च बिल्मासीनान् — $^{d}$) S प्र(T2 G5 M3 6 8 न)धक्ष्यति हुताशन (M5 हुताशो न प्रध°)

28 $^{a}$) D5 वसामो, G (except G3) द्रवतो Ś1 K (except K3) अथ (for अत्र) — $^{b}$) D5 न बुध्यति — $^{cd}$) Ñ1 3 V1 [S]पि वा (by transp), M8 चात्र K0 पौराश्चापि तथा कार्यं वस्तव्य वसुसवृतै

Colophon *Major parvan* T2 G M सभव° (for आदि°) — *Sub-parvan* Ñ V1 B3 6 Da Dn1 n3 D1 जतुगृह, B1 3 जातुष, T1 सभव — *Adhy name* Ś1 K1.3 4 D5 M3 जतुगृहदाह, K0 युधिष्ठिरवाक्य, Ñ1 3 V1 भीमसेनयुधिष्ठिरसवाद, M8 युधिष्ठिरभीमसेनसवाद — *Adhy no* (figures words or both) B1 143, Dn3 145, D4m 148, T1 141, T2 G4 5 92, G2 3 93, G5 6 M 91 — *Sloka no* Da M3 30 — *Aggregate sloka no* Dn3 5802

## 135

1 Ś1 K1-3 D2 5 S om उवाच — $^{a}$) M5 सुहृदस्य (for विदुर°) K0 4 सखा कश्चित् K3 (hapl) om 1$^{b}$ 2$^{a}$ — $^{b}$) D2 खनक सुहृद, T2 G3 4 कुशल खन° (by transp) Ś1 K0.4 शुचि, K3 तदा; Ñ3 B D T1 G3 नर V1 अभवत् (for कश्चित्) — $^{c}$) K0 आगम्य (for विवि°),

2 K2 om 2$^{a}$ (cf v 1 1) Before S M (except M3) ins खनक — $^{a}$) K2 M (except M3) प्रेषितो K3 अहं (for अस्मि) — $^{b}$) Ñ3 Dn °लोकाद् — $^{c}$) G2 हृद, G4 हित (for प्रिय)

3 Ś1 K3 4 M3 (hapl) om 3 — $^{a}$) D4 T2 G4 5 M6-8 उक्त — $^{b}$) K0 Ñ1 3 V1 B3.5 Da D2 5 M6-8 त्वमसि, K4 त्वमथ, B6 तु मयि G1 भारत, M3 5 पाडव T2 G2-6 पाडवान् (T2 G3 6 °व; G4 श्रेयस्त्व) म्लेच्छभाषया (cf 6$^{ab}$) — For 3$^{ab}$ K3 subst. तेनाह प्रहितस्तूर्णं यथा रक्षस्व पाडवान् — For 3$^{cd}$, T2 G4 5 read 6$^{cd}$

4 G3 6 om 4$^{a}$-6$^{b}$ — $^{a}$) T G4 कृष्णपक्षे Ś1 K3 त्रयोदश्या — $^{b}$) K3 T1 G1 4 5 रात्र्यां K1 अस्ति, K4 Ñ3 B3 Dn अस्या, D5 अत्र, T2 G1 4 5 आशु (for अस्य) G2 माद्रायां च पुरो° — $^{c}$) K0 4 M तदा; G (G3 6 om)

## १३५

वैशंपायन उवाच ।
विदुरस्य सुहृत्कश्चित्खनकः कुशलः क्वचित् ।
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् ॥ १
प्रहितो विदुरेणास्मि खनकः कुशलो भृशम् ।
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ॥ २
प्रच्छन्नं विदुरेणोक्तः श्रेयस्त्वमिह पाण्डवान् ।
प्रतिपादय विश्वासादिति किं करवाणि वः ॥ ३
कृष्णपक्षे चतुर्दश्यां रात्रावस्य पुरोचनः ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥ ४
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः ।
इति व्यवसितं पार्थ धार्तराष्ट्रस्य मे श्रुतम् ॥ ५
किंचिच्च विदुरेणोक्तो म्लेच्छवाचासि पाण्डव ।
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ॥ ६
उवाच तं सत्यधृतिः कुन्तीपु...
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै
शुचिमाप्तं प्रियं चैव सदा च दृढभक्तिकम् ।
न विद्यते कवेः किंचिदभिज्ञानप्रयोजनम् ॥
यथा नः स तथा नस्त्वं निर्विशेषा वयं त्वयि
भवतः स यथा तस्य पालयास्मान्यथा कविः
इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् ॥ १०
स पापः कोशवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च दुष्टात्मा नित्यकालं प्रबाधते ॥ ११
स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः ॥ १२
समृद्धमायुधागारमिदं तस्य दुरात्मनः । C. 1. 5810 B. 1. 147. 13 K. 1. 152. 12

---

निशि (for तव).

5 G5.6 om. 5 (cf. v. l. 4). — b) K3 भरतर्षभाः; D4.5 °र्षभ. — c) Ñ3 B D T1 तस्य (for पार्थ). — d) K3 Ñ3 B D दुर्मतेः (for मे श्रुतम्).

6 T2 G3–6 om. 6ab (cf. v. l. 4); G2 om. 6. — a) K3 तेनासि; Ñ1.3 कश्चिच्च; M किंचित्वं (M3 प्रच्छन्नं). D5 उक्तं. — b) Ñ1 V1 B5 °भाषासि; D4 प्रच्छन्नं चासि; Cd as in text. K3 छन्नं किंचिद्वचः पथि; G1 पाडवो म्लेच्छभाषया. — T2 G4.5 (om. it here) read 6cd for 3cd; cf. v. l. 4. — c) K0.2 Ñ1 तथा वित्तं (for तथे°). D5 तथेति च त्वया ज्ञातं. — d) Da1 इति (for एतद्). K3 विश्वासकारकं; Ñ1 T2 G6 M आश्वासकारकं (Ñ1 °णं).

7 Before 7, T2 G ins. वैशं°. — a) D4 तथाभूतं (for सत्य°). — After 7ab, M7.8 ins. युधिष्ठिरः. — c) G3 अनुजानामि. — d) K3 हि; M च (for वै).

8 a) G1 स्निग्धमाप्तं; G3.6 प्रथमाप्तं. T2 G भक्तं (for चैव). — b) Ś1 प्रियभक्तिकं; K0 T2 M °भक्तिनं; Ñ1 °रक्षिणं. T2 G सदा (G3 तथा) प्रियहितैषिण (G1.2 °तैषिणं; G3 °ते रत). — c) Ś1 कविः कश्चिद्; K3 कथं भीतिः; G3 [ऽ]त्र वः किंचिद्. Cd cites कवेः (as in text). — d) K0.2 Ñ3 B3 Dn D4 T1 G3.6 अविज्ञातं (G6 °ज्ञ-) प्रयो°; K3 किमिह स्याद्यथोचितं; D5 T2 G1–4 M3.5 अभिज्ञानं (D4 G4 °तं) प्रयो°.

9 a) K0.4 स नः (by transp.); Ñ V1 B D T1 तस्य. K0.4 त्वं च; K3 च त्वं; T2 G असि त्वं (G1 आह त्वा; G3 अपि त्वं) (for नस्त्वं). — b) K3 निर्विशंका. K4 G3 त्वया; T2 G3 त्वयि. — c) Ś1 K3 G3 त्वं; K0 G3.4 तु; Ñ1 अस्माद्; Ñ3 V1 B D (except D4) T1 च (for स). T2 G3.4.6 स(G6 त)थात्वं. — d) Ñ3 पारयास्मान्.

10 b) D4 G6 श्रुतं; T2 श्रुतिः (for मतिः). — d) G (except G3.5) धृतराष्ट्रस्य.

11 a) Ñ V1 B Da कोपवान्; D4 G3.5.6 M कोपवान्. Da चापि (for चैव). — b) K0 सहामात्यः; Ñ1 सुसहायः. T1 तु; M3 सु- (for च). — c) Ñ3 एव (for अपि). Ñ3 B D (except D4) T1 पापात्मा. K3 वयं च कोशरहिताः. — d) K3 तेनास्मान्स; B3 नित्यमेव (m as in text); D4 नित्यं चैव.

12 a) K3 G1 मोचयत्वस्माद्; T2 G4–6 मोचयत्वस्माद्; G2 मोचयित्वास्माद्; G3 मोचयेदस्माद्. — b) K3 जतुवेश्महुता°; S (except T1) उत्पन्ना(M2.5 उल्बणा)द्धि हुता°. — c) K0.4 अस्मास्वपि. K3 T1 वि; K3 नि-; T2 G (except G3.6) च; M4 अरि-; M6–8 अभि- (for हि). — d) K3 कृतार्थः स्यात्.

13 b) K0 M3.5 महात्मनः. — c) Ñ B3 Dn G (except G3.6) M3 वप्रांतं; D5 दुष्प्रापं; Cd as in text. — d) K3 Ñ2.3 V1 B D G3.6 M आश्रित्य (for °श्लिष्य).

ततः प्रतापः सुमहाञ्शब्दश्चैव विभावसोः ।
प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः ॥ १०

पौरा ऊचुः ।

दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना ।
गृहमात्मविनाशाय कारितं दाहितं च यत् ॥ ११
अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी ।
यः शुचीन्पाण्डवान्बालान्दाहयामास मन्त्रिणा ॥१२
दिष्ट्या त्विदानीं पापात्मा दग्धोऽयमतिदुर्मतिः ।
अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् ॥ १३

वैशंपायन उवाच ।

एवं ते विलपन्ति स्म वारणावतका जनाः ।
परिवार्य गृहं तच्च तस्थू रात्रौ समन्ततः ॥ १४
पाण्डवाश्चापि ते राजन्मात्रा सह सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्गूढमलक्षिताः ॥ १५
तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः ।
न शेकुः सहसा गन्तुं सह मात्रा परंतपाः ॥ १६
भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम भ्रातॄनादाय सर्वान्मातरमेव च ॥ १७
स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।
पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलौ ॥१८
तरसा पादपान्भञ्जन्महीं पद्भ्यां विदारयन् ।
स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥ १९

इति श्रीमहाभारते आदिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

below) ins after 9

1478* पूर्वमेव बिलं शोध्य भीमसेनो महामतिः ।
पाण्डवैः सहितां कुन्तीं प्रावेशयत तद्बिलम् ।
दत्त्वाग्निं सहसा भीमो निर्जगाम बिलेन सः ।

[ T1 ins lines 1–2 before 1477* and line 3 after 1477* — (L 1) T1 सर्वमेव — (L 2) M5 °वैः सहिता कुन्ती प्रविष्टा च बिलं महत् — (L 3) After the prior half G1 ins

1479* गृहे तत्परितः सुधीः ।
गृहस्थं द्रव्यसंजातं ]

10 a) T2 G प्रवाते (G1 °भाते, G3 °चन्ने), M2 3 °यातः, M7 8 °पातः — b) K0 2 D5 चापि (for चैव) — c) K Ñ1 D5 ततस्तेन, S (except T1) ततः सर्वो (G3 °र्वे) — d) K3 स जनोऽखिलः, D4 स जनः पुरः, D5 सकलो जनः, G1 नागरो जनः — After 10, Ñ2 3 V1 B D T1 ins

1480* तदवेक्ष्य गृहं दीप्तमाहुः पौराः कृशानना ।
[ Dn2 n3 D5 कृशानुना ]

11 S om उवाच (G3 om the ref) — After the ref, D4 marg sec m ins

1481* अहो धिक्पाण्डवाः सर्वे दह्यन्त इति चुक्रुशुः ।
चक्रुश्च परमं यत्नं नरास्तेषां प्रमोक्षणे ।
ततस्तं जातुषं वेश्म दहशू रोमहर्षणम् ।
पाण्डवानां विनाशाय विहितं क्रूरकर्मणा ।

— d) All MSS except Ś1 K2–4 D4 5 M च तत् — After 11, D4 marg sec m ins

1482* पुरोचनेन पापेन दुर्योधनहितेप्सया ।

12 a) D4 हा हा (for अहो) — b) Ñ3 V1 Da D1 °समञ्जसा — c) Ñ3 V1 B D (except D5) T1 पाण्डुदायादान् (for पाण्डवान्बा°) — d) K3 M शत्रुभिः, K3 Ñ1 3 V1 B D T1 शत्रुवत् (D5 मन्त्रिणः), Ñ2 वह्निभिः, T2 G निर्घृणः

13 b) Ś1 K2 D5 अपि, K2 3 Ñ1 Da1 D1 T1 इति (for अति) T2 G M दृष्ट्वा दग्धं पुरोचनं

14 Ś1 K1 D2 S om उवाच, Ñ2 3 B1 om the ref — a) K3 4 विलपन्तो वै — cd) K3 D5 transp तच्च and तस्थु S (except T1) °ह सर्वे रात्रौ तस्थुः सम°

15 a) N1 2 V1 B D (except D5) T G सर्वे (for राजन्) — b) K0 1 3 Ñ1 3 V1 B D T1 G3 सह मात्रा परंतपा (cf 16d) (by transp) K3 S (except T1) महता, — c) K3 निष्क्रम्य, Ñ1 ते जग्मुः, S (except T1) महता, — d) N1 2 तत्र, B3 4 ययुर् (for जग्मुर्) B D (except Da) T1 द्रुतम्, T2 G M वनम् (for गूढम्)

16 a) S (except T1 M3) ते तु Ś1 K D5 निद्रोपरो° Ñ3 तेभ्योपरो°, T2 G निद्राविं(G2 3 5 °नि)रो° Cd as in text — b) Ś1 (by corr) K1 तु (for च) — c) K0 2 S (except T1) त्वरितं (K0 2 G3 5 M3 °ता) — d) K0 3 Ś1 K1 4 निद्रया (Ś1 Ñ3 D1 मात्रा सह (by transp) Ś1 K1 4 निद्रया (Ś1 सहसा) च प्रवृद्धया, S (except T1) सह कुन्त्या नराधिप (cf v l 15)

17 cd) M om 17cd T2 G transp भ्रातॄन् and सर्वान्

18 G2 om 18, G4 reads it in marg — c) K3 Ñ V1 B D (m as in text) G3 अंसेन (for अङ्के°) — d) Ñ V1 B D (except D5) T G3 4 सुमहाबल, G1 °महद्बली — After 18 T1 ins 1483*, G2 4 only line 4 thereof

19 a) V1 B (except B3) D (except Da 4) T1 उरसा — b) B3 विचालयन् — T1 G2 4 (the two

# १३७

वैशंपायन उवाच ।
अथ रात्र्यां व्यतीतायामशेषो नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् ॥ १
निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः ।
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् ॥ २
नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।
पाण्डवानां विनाशाय इत्येवं चुक्रुशुर्जनाः ॥ ३
विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान्पाण्डुदायादान्न ह्येनं प्रतिषिद्धवान् ॥ ४
नूनं शांतनवो भीष्मो न धर्ममनुवर्तते ।
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ॥ ५
ते वयं धृतराष्ट्रस्य प्रेषयामो दुरात्मनः ।
संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि ॥ ६
ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम् ।   C.1 5662, B.1 150.7, K.1 152.9

---

latter om lines 1–3) ins after 18 G1 after 19ab

1483* चिलेन योजन दूर गत्वा सिद्धपदे शुभे ।
निश्चेरुर्वटमूले ते निद्रामुद्रितलोचना ।
चिलान्निर्गत्य सहसा भ्रातृन्मातरमेव च ।
गङ्गातीरवन प्राप्य वहन्प्रायास मारुति ।,

G1 thereafter *repeating* 19ab — c) Ñ1 अथ, Da G3 सु॰ (for आशु) K3.4 जगामाशु (K4 ॰थ) स ते॰ — d) Ś1 K4 Dn3 n3 G1 ॰रहो — After 19, G1 ins

1484* अव्यक्तवनमार्गं सन्भञ्जन्गुल्मलतागुरून् ।

Colophon *Major parvan* T2 G M सभव॰ (for आदि॰) — *Sub-parvan* Ś1 K Ñ3 Da2 D1.5 M3.5 जतुगृह(D1 om गृह)दाह (K3 ॰हदीपन), Ñ1.2 V1 Da1 Dn1 n3 T1 जतुगृह, B D4 जातुष — *Adhy name* K0.4 भीमसेनविक्रम — *Adhy no* (figures, words or both) B1 145, Dn3 147, D3m 150, T1 143, T2 G3.5 94, G1.2 95, G2.4 M 93 — *Śloka no* Dn M3 22 — *Aggregate śloka no* Dn2 5843

☞ After adhy 136 K4 Ñ V1 B D M ins an additional adhy given in App I (No 85), T G ins this passage (*without* the colophon) after 1 137 17 (*repeating* at the end 17cd), but Cd (like Ś1 K0-3) ignores the adhy *completely*

[ The details of the colophon (om in D5) of this *additional* adhy are as follows *Major parvan* M सभव॰ (for आदि॰) — *Sub parvan* Ñ1.2 V1 Dn D1.2 जतुगृह; Ñ3 Da M3.5 जतुगृहदाह, B D4 जातुष — *Adhy name* Ñ1.2 V1 गङ्गोत्तरण — *Adhy no* (figures, words or both) B1 146, Dn3 148, D3m 151, M 94 — *Śloka no* Dn1 n3 M3 14 — *Aggregate śloka no* Dn2 5857 ]

## 137

1 Ś1 K1.2 D3 S (except G3) om उवाच (G4 om. the ref) — a) B3 रात्र्यामसी॰ — b) K0.4 स सर्वो; K3 सशेषो, Ñ3 सर्वशो, S (except T1 G3) सशोको (for अशेषो)

2 a) M6-8 निर्वाण॰ — b) K4 G1 तदा (for जना) K3 Ñ3 S तथा (G3 जना, T1 as in text)

3 Before 3, B3 ins पौरा ऊचु — a) G3 एव (for इद) — b) K3 कारित (for विहि॰) — cd) G4 विनाशार्थं, M3 विघासाय Ś1 K3.4 Ñ V1 B (B3 marg) D (except D3) T1 M ॰शायेत्येव ते (Ś1 च, K4 तत्) (for ॰शाय इत्येव)

4 a) D2 विदितो, S (except T1) ॰त — b) M6-8 धार्तराष्ट्रैर् — c) M6-8 पाडवान् (for दग्धवान्) K3 पाडुतनयान्, T2 G पाडवान्बालान् Ś1 दग्धान्पाडवदायादान् — d) B3 Da T1 एव, D3 एते, T2 G एतत् (for एन)

5 a) Ñ1.2 M3.5 ॰नवो धीमान्, Ñ3 V1 B D (except D3) T1 ॰नवोऽपीह — b) Ś1 K [ऽ]प्यधर्मम् (K3 अधर्मम्) — cd) Ś1 द्रोणश्चैव कृपश्चैव Ś1 विदुरोऽन्ये च कौरवा , K3 कृपश्चान्येऽपि बान्धवा — After 5, G1.2 ins

1485* नावेक्षन्ते हत धर्मं धर्मज्ञा अप्यहो विधे ।
श्रुतवन्तोऽपि विद्वांसो धनवद्वशगा अहो ।
साधूननाथान्धर्मिष्ठान्सत्यव्रतपरायणान् ।
नावेक्षन्ते महान्तोऽपि दैव तेषा परायणम् ।

6 a) T2 G धृतराष्ट्राय — b) D3 M प्रेषयाम T2 G दुरात्मने — After 6ab, K3 reads 9cd (v l अग्निनिर्दग्धान्), repeating it in its proper place — c) K0.2 सम्भृतस्ते, G3 ॰त ते Ś1 महा-काम , G3.5 पर कामं K1 समवृत्तो महाकाम

7 a) G1.2 ततो व्यपोह्य॰, G3 तथाप्यपोह्य॰, Cd as in text — b) K4 दह्यमाना हुताशने — d) K3.4 D1

निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ॥ ७
खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः प्रत्यपिहितं पुरुषैस्तैरलक्षितम् ॥ ८
ततस्ते प्रेषयामासुर्धृतराष्ट्रस्य नागराः ।
पाण्डवानग्निना दग्धानमात्यं च पुरोचनम् ॥ ९
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम् ।
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः ॥ १०
अद्य पाण्डुर्मृतो राजा भ्राता मम सुदुर्लभः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥ ११
गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतम् ।
सत्कारयन्तु तान्वीरान्कुन्तिराजसुतां च ताम् ॥१२
कारयन्तु च कुल्यानि शुभ्राणि च महान्ति च ।
ये च तत्र मृतास्तेषां सुहृदोऽर्चन्तु तानपि ॥ १३
एवंगते मया शक्यं यद्यत्कारयितुं हितम् ।
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः ॥१४
एवमुक्त्वा ततश्चक्रे ज्ञातिभिः परिवारितः ।
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः ॥ १५
चुक्रुशुः कौरवाः सर्वे भृशं शोकपरायणाः ।

---

अनागसीं, S (except T1 G3) °सीं — G1-4 (G3 om line 2) ins after 7, T1 after 8:

1486* हन्त पश्यत कुन्तीयं दग्धा शेते यशस्विनी ।
पुत्रैः सहैव वार्ष्णेयी हन्त पश्यत नागराः ।

8 a) Ś1 K0 1 च (for तु) — b) Ś1 K3 वेश्म शोधयता, K0 तदेवाच्छादितं — c) Some MSS पांसुभि Ś1 K1 4 G3 M8 प्रत्यभि(K1 °वि)हितं, Ñ2 V1 B D (except D4 5) T1 पिहितं सद्य (B Da सद्य, D5 स तु), G3 प्रेक्ष्य पिहितं, Cd as in text — d) K0 Ñ1 2 V1 B D T2 G2 स (for अ) — After 8, T1 ins 1486*, while K4 ins

1487* इत्येवं सर्वे प्रोचन्त पृथक्चैव तथाब्रुवन् ।

9 a) Ñ3 स (for ते) N3 V1 B D ज्ञापया° — b) B6 °राष्ट्रं च — K3 reads 9cd (for the first time) after 6ab repeating it here — c) K3 (both times) अग्निनिर्दग्धान्

10 a) Ś1 K1 च (for तु) K3 Dn3 D1 °राष्ट्रस्य B3 D5 G2 M6 8 तु, G1 अपि, G6 त, M6 स (for तद्) — c) D5 निधनं, M विनाशे T2 G पाण्डवेयानां (G6 पांडवानां तु) — After 10, T2 G1 2 4 ins

1488* अन्तर्हृष्टमनाश्चासौ बहिर्दुःखसमाकुलः ।
अन्तः शीतो बहिश्चोष्णो ग्रीष्मेऽगाधह्रदो यथा ।

11 Before 11 G1 M8 ins धृतराष्ट्र — ab) Ñ3 भ्राता राजा (by transp) Ñ3 V1 Dn मम भ्राता (by transp) B6 D (except D2 4 5) महायशाः (for सुदु°) — c) G2 3 4 5 दग्धे° वीरे° (by transp) — d) K3 सह मात्रा (by transp) Ś1 K (except K3) D5 महात्मसु

12 c) K3 Ñ2 Dn3 D4 S सत्कारयतु K4 तान्सर्वान् — d) Ñ2 B (except B6) Da D1 2 4 कुन्तिभोज°, S कुन्ती राज° K0 Ñ3 तथा, B4 G5 तु ता, G1 अपि

13 T2 G transp 13ab and 13cd — a) G1 कार्याणि, M दारूणि, Cd कुल्या° (as in text) — b) Ñ3 5 V1 B D (except D5) T1 G3 M शुभानि K3 Ñ V1 B D T1 G3 5 सुहृदि — c) K1 अपि तु, Ñ3 V1 B Da Dn D1 3 4 T2 यान्तु, G1 तास्तु, G3 यान्तु (for अर्चन्तु) D6 सुहृदानां च सर्वदा — After 13 T G ins

1489* मम दग्धा महात्मानः कुलवंशविवर्धनाः ।

14 b) K4 यथा कारयितुं, G3 यथाकार्यं प्रियं G6 परं, M6 हि तत् — c) D6 कुन्त्या वा — d) Ś1 K1 सर्वं तत् (by transp) M इति (for धनैः) — After 14, D4 (marg sec m) S ins

1490* वैशंपायन ।
समेतास्तु ततः सर्वे भीष्मेण सह कौरवाः ।
धृतराष्ट्रः सपुत्रश्च गङ्गामभिमुखा ययुः ।
एकवस्त्रा निरानन्दा निराभरणवेष्टनाः ।
उदकं कर्तुकामा वै पाण्डवानां महात्मनाम् ।

[T1 M om वैश° — After line 1, G1 2 ins

1491* सपुत्रदारा-धयामात्यास्त्यक्तमङ्गलवाहनाः ।
अचक्षुषाश्चान्तरा राजन्गङ्गामभिमुखा ययुः ।,

the last pada *repeating* the posterior half of line 2 ]

15 a) S (except G3) एवं गत्वा — b) K3 स्वसुतैः, G2 बन्धुभिः — c) T2 G °पुत्रेभ्यो — d) G1 °राष्ट्रो महामनाः

16 a) K0 1 2 Ñ1 3 D5 T2 G (except G1 5) M (except M8) °शुः कुरवः, Ñ2 V1 B Da Dn D1 2 4 T1 रुरुदुः सहिता — After 16ab, K4 N V1 B D T1 ins

1492* हा युधिष्ठिर कौरव्य हा भीम इति चापरे ।
हा फाल्गुनेति चाप्यन्ये हा यमाविति चापरे ।
कुन्तीमार्तांश्च शोचन्त उदकं चक्रिरे जनाः ।
अन्ये पौरजनाश्चैवमन्वशोचन्त पाण्डवान् ।

[(L 1) N1 कौन्तेय (for कौर°) — (L 2) K4 हा धनंजय हा कुन्ति D4 फल्गुनेति (by corr) — After line 2, K4 ins

1493* अहो रूपं च लावण्यमथ विद्यावलं मुहुः ।
औचित्यमथवा प्रेम किं किं शोचामहे वयम् ।

विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः ॥ १६
पाण्डवाश्चापि निर्गत्य नगराद्वारणावतात् ।
जवेन प्रययू राजन्दक्षिणां दिशमाश्रिताः ॥ १७
विज्ञाय निशि पन्थानं नक्षत्रैर्दक्षिणामुखाः ।
यतमाना वनं राजन्गहनं प्रतिपेदिरे ॥ १८
ततः श्रान्ताः पिपासार्ता निद्रान्धाः पाण्डुनन्दनाः ।
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ॥ १९
इतः कष्टतरं किं नु यद्वयं गहने वने ।
दिशश्च न प्रजानीमो गन्तुं चैव न शक्नुमः ॥ २०
तं च पापं न जानीमो यदि दग्धः पुरोचनः ।
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ॥ २१
पुनरस्मानुपादाय तथैव व्रज भारत ।
त्वं हि नो बलवानेको यथा सततगस्तथा ॥ २२
इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।
आदाय कुन्तीं भ्रातॄंश्च जगामाशु महाबलः ॥ २३ C 1 5881 B 1 130 23 K 1 101

इति श्रीमहाभारते आदिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

---

इत्येव बहु भाषन्तो रुरुदुर्नागरा भृशम् ।]
— $^{cd}$) T2 G °स्त्वल्पशोक च (G3 4 °कश्च) चक्रे T2 G3-6 M3 5 वेद हि तत्पर, G1 M6-8 वेद हित्त पर — After 16, S (except G1 2) ins a passage given in App I (No 86)

17 $^{a}$) K3 om च Ś1 K1 निष्क्रम्य, K0 2 4 Ñ1 3 D5 G2 6 M8 °र्गस्य — After $17^{ab}$, K4 Ñ V1 B D (except D5) ins

1494* नदीं गङ्गामनुप्राप्ता मातृषष्ठा महाबलाः ।
दाशानां भुजवेगेन नद्याः स्रोतोजवेन च ।
वायुना चानुकूलेन तूर्णं पारमवाप्नुवन् ।

[(L 1) K4 °मनुप्राप्य मात्रा सह परंतपा (cf 1 136 $16^{d}$) — (L 2) B6 पचाना (m दाशाना), Da D2 दासाना K4 भुजवीर्येण ]
— $^{cd}$) K4 T G repeat $17^{cd}$ (K4 with v l ) T2 G वीरा (for राजन्) G1 2 °माश्रिता K4 (first time) त्यक्त्वा नाथ ययु पार्थो (for $^{c}$) Ñ2 3 V1 B D (except D5) ततो नाथ परित्यज्य ययुर्दक्षिणां दिश — After 17, T G ins a passage given in App I (No 85) followed by a repetition of $17^{cd}$, cf the note at the end of the previous adhy

18 $^{a}$) Ś1 K (except K4) Ñ1 D5 M निदाघे, T G (except G1 2) विहाय (for विज्ञा°) T निद्रा (for निशि) — $^{b}$) K1 T2 G3 6 °मुखै Ñ2 3 V1 B D T1 नक्षत्रगणसूचित (D5 नाविंदन्दक्षिणामुखा ) — K3 om $18^{c}$–$19^{b}$ — $^{c}$) T2 G3 6 गाहमाना, G3 जानमाना G1 2 वनाद्वन तदा राजन् — $^{d}$) G4 गह्वर, M6-8 गत्तु न (for गह°)

19 K3 om $19^{ab}$ (cf v l 18) — $^{a}$) T2 G4 5 तत्र श्राता ; G1 (by transp ) श्रांतास्तत — $^{b}$) Ñ1 2 निद्रार्ता ; T2 G4 5 प्रस्थिता ; G3 निषण्णा , G6 M नि सृता G1 2 क्षुधिता भयकातरा — $^{d}$) K0 D5 °सेनमरिंदम

20 $^{a}$) K0 4 D2 T2 G4-6 अत , Ñ2 D5 इद (for इत ) K2 3 Ñ V1 Da1 Dn D1 G1 2 किं नु, K4 किंचिद्, D5 वीर — $^{c}$) B D T1 विजानीमो Ś1 K1 दिशश्चैव न जा°, G4 देशा-यय प्रजा° — $^{d}$) G1 2 चैते (for चैव)

21 $^{b}$) Ś1 K1 यदि दग्ध प्ररोचन, G1 2 दग्धो (G2 दह्वो) वा न पुरो° — $^{c}$) Ś1 न, K1 3 Ñ2 V1 B (except B5) D (except Da2) T1 M7 तु, K4 Ñ1 च (for नु) Ś1 प्रतिमुच्येम, K4 विप्रमुच्येरम् — $^{d}$) Ñ1 3 वयम् (for भयाद्)

22 $^{a}$) T2 G शीघ्रम् (G3 भ्रातान्) (for पुनर्) — $^{b}$) G1 2 त्वरावान् (for सर्वे°) — $^{d}$) G3 अस्मात्त्रातुमिहार्हसि

23 $^{ab}$) K3 °क्तो भीमसेनस्तु धर्मराजेन सहल — $^{c}$) Ś1 K1 2 4 पृष्ठमारोप्य बलवान् — $^{d}$) B3 महाजव , G1 2 स पावनि K1 जगाम भरतर्षभ, K3 D5 M5 जगाम सु(M8 5 स)महा°

Colophon *Major parvan* T2 G M संभव° (for आदि°) — *Sub parvan* Ś1 K0-2 4 Ñ3 Da D5 M5 जतुगृहदाह, Ñ1 2 V1 B3 Dn1 n2 D1 2 T1 जतुगृह (T1 int lin संभव), B1 5 जातुष — *Adhy name* K0 4 वनप्रवेश , K3 पाण्डवपलायन, Ñ2 3 V1 पाण्डववनप्रवेश , M6 8 वनगमन — *Adhy no* (figures words or both) B1 147, Dn3 149, D4m 152 T1 146 T2 G3 6 M 96 G1 2 97 G3 4 95 — *S'loka no* Dn 26, M8 7 — *Aggregate s'loka no* Dn2 5883

## 138

1 Ś1 K1 3 D2 5 S om उवाच The sequence of 1–2 in K4 is $1^{cd}$, $2^{cd}$, $1^{ab}$, $2^{ab}$ — $^{a}$) Ś1 K तस्य विक्रमतस्तूर्णम्, Ñ2 V1 B D G5 तेन विक्रममाणेन (D5

# १३८

वैशंपायन उवाच ।
तेन विक्रमता तूर्णमूरुवेगसमीरितम् ।
प्रववावनिलो राजञ्शुचिशुक्रागमे यथा ॥ १
स मृद्नन्पुष्पितांश्चैव फलितांश्च वनस्पतीन् ।
आरुजन्दारुगुल्मांश्च पथस्तस्य समीपजान् ॥ २
तथा वृक्षान्भञ्जमानो जगामामितविक्रमः ।
तस्य वेगेन पाण्डूना मूर्छेव समजायत ॥ ३
असकृच्चापि संतीर्य दूरपारं भुजप्लवैः ।
पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ॥ ४
कृच्छ्रेण मातरं त्वेकां सुकुमारीं यशस्विनीम् ।
अवहत्तत्र पृष्ठेन रोधःसु विषमेषु च ॥ ५
आगमंस्ते वनोद्देशमल्पमूलफलोदकम् ।
क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभाः ॥ ६
घोरा समभवत्संध्या दारुणा मृगपक्षिणः ।

---

तस्यातिक्रमतस्तूर्णम्) — ᵇ) Ko 3-4 Ñ1 D5 T2 G1-6 M °समीरित Ś1 K1 उरु(K1 मद)वेगसमन्वित — After 1ᵃᵇ, K4 Ñ2 3 V1 B D (except D5) T1 ins

1495* वन सवृक्षविटपं व्याघूर्णितमिवाभवत् ।

— ᶜ) D2 मारुतो (for अनिलो) Ñ2 3 V1 B Da Dn D1, 4 T1 जघावातो ययौ चास्य — ᵈ) G1-3 M6 8 शुचि Ś1 K3 D5 Cd °शुक्रागमे, Ko 3 °शमा° — After 1, K4 Ñ2 3 V1 B D (except D5) T1 ins

1496* आवर्जितलतावृक्षं मार्गं चक्रे महाबलः ।

2 For K4 of v l 1 also — ᵃ) K4 Ñ1 समृद्नन्; Ñ2 B1 m 3, 5 D2 4 5 समृद्ना(B3 m °द्गा)न्; B1 6 स मृद्नन् Ko D5 वृक्षान् (for चैव) — ᵇ) T2 G (except G3) फलिनश्च Ko D4 समतत (for वन°) — ᶜ) K3 अभजन् (for आरुजन्) Ś1 मध, Ko 3 4 यातिं, K1 घन, K2 पुष, D5 अथ (for दारु) T2 G4 5 °गुल्म च Ñ3 V1 B Da Dn D1 3 4 T1 अवरुज्य (Ñ3 B1 5 6 Da D1 3 °ह्य) ययौ गुरुमान् — ᵈ) G3 पार्श्वे, M8 पल (for पथ°) Ko D5 T2 G M8 समीपगान् — After 2, Ñ2 3 V1 B D (except D5, D3 om line 2) T1 ins

1497* स रोषित इव क्रुद्धो वने भञ्जन्महाद्रुमान् ।
त्रिप्रस्रुतमदः शुष्मी षष्टिवर्षी मतङ्गराट् ।
[ (L 2) B5 यथा त्रिप्रस्रुतमद (for the prior half) ]

3 ᵃᵇ) G1 2 वृक्षास्तथा (by transp), G3 तदा वृक्षान् Ñ1 2 V1 B D (except D5) T1 गच्छतस्तस्य वेगेन तार्क्ष्ये मारुतरंहस — After 3ᵃᵇ G1, 2 4 ins

1498* तस्य कक्षद्वयोद्भूतपवनध्वनिरुत्थित ।
गुम्भिताशापदिग्भाग शुश्रुवेऽतिभयंकर ।

— ᶜ) T2 G M पचाना (for पाण्डु°) Ñ2 3 V1 B D (except D5) T1 भीमस्य पाण्डुपुत्राणां — ᵈ) D5 मूर्छा च

4 ᵃ) G1, 2 च समुत्तीर्य, M चापि संतार्य — ᵇ) K D5 दूरपारा (see below) T2 G3-6 पारावर भुजप्लवा, G1 2 भुजप्लावो (G1 °वा) नदीश्चैव — After 4ᵃᵇ, Ś1 K D5 ins

1499* उत्ततार नदीं गङ्गां विहगासगवाग्मिनीम् ।
[ Ko 3 4 °सगमालिनीं, D5 °सगपत्रिणीं ]

On the other hand, G1 2 ins after 4ᵃᵇ

1500* मातरं च वहन्भ्रातॄनश्रमेण समीरज ।

— ᶜ) T2 G पार्थाः (G2 6 पथा) (for पथि) T2 G4 प्रच्छन्नमापेदु, G1 °था चेरु, G3 °मावेदे, G3 °रूपे द्रु, G4 6 °मापेदु ; M °मासाद्य — ᵈ) K3 D5 °भयार्दिता

5 ᵃ) Ko 3 Ñ1 3 चैकां, Ñ2 V1 B D T1 चैव, T2 G3-6 M6 8 ह्येकां, M8 3 ह्येना — ᶜ) Ś1 Ko 1 4 आ(Ko 4 अ)वहन् Ñ2 V1 B D T1 G3 स तु (for तत्र) — ᵈ) D5 समेषु, Cd रोधःसु (as in text)

6 ᵃ) Ñ2 V1 B D T1 अगम(D3 °च्छ)च्च, T2 G आगम्य च Ñ1 3 M आगमस्तथ चोद्देश — ᵈ) Ś1 K (except Ko) पुरुषर्षभा, Ñ2 V1 B D T1 देश T2 G साय समुपचक्रमु

7 ᵃ) K3 काष्ठा (for संध्या) — ᶜ) K2 4 अभ्रसभा दि° — ᵈ) Ko D2 4 तथार्तवै, K3 तथाविधे, G3 तत्र सदा (for अनार्तवै) T2 G1-6 शनैरासंस्ततस्तदा (G4 °स); G1 2 अंधकारे द्रुत यथा — K4 Ñ2 3 V1 B D (except D5) T1 ins after 7 T2 G, after 8

1501* शीर्णपर्णफलै राजन्बहुगुल्मक्षुपैर्द्रुमैः ।
भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः ।

[ (L 1) T2 G वृक्षैः (for राजन्) B5 °गुल्मफलैर्द्रुमैः; T2 G4 5 °गुल्मावृत°, G1 2 °गुल्मलता°, G3 °गुल्मक्षुर°; G3 °गुल्मक्षुप° — (L 2) K4 B (except B1) Da D1 भग्नावभग्न°, T1 भग्नायतन°, T2 G4 6 प्रभग्नायन°; G1, 2 प्रभग्नशाखा° T G अ(G1, 2 आ)दृष्टबहुलैः (T G3 5 6 °ले) तदा (T1 G1 2 4 6 सदा) (for नाना°) For G1, 2 4

अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ॥ ७
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः ।
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ॥ ८
ततो भीमो वनं घोरं प्रविश्य विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयमुपाद्रवत् ॥ ९
तत्र निक्षिप्य तान्सर्वानुवाच भरतर्षभः ।
पानीयं मृगयामीह विश्रमध्वमिति प्रभो ॥ १०
एते रुवन्ति मधुरं सारसा जलचारिणः ।
ध्रुवमत्र जलस्थायो महानिति मतिर्मम ॥ ११
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत ।
जगाम तत्र यत्र स्म रुवन्ति जलचारिणः ॥ १२
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ ।
उत्तरीयेण पानीयमाजहार तदा नृप ॥ १३
गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति । C. 1. 5901 B. 1. 151. 20 K. 1. 163. 25

cf. v. l. 8 also. ]

8 ᵃ) G3 ते क्रमेण. G3 M6-8 तु (for च). D5 T3 G2-6 कौंतेयास. Ñ1 तेन श्रमेण कौ°; G1.2 श्रमेण महता चैव. — ᵇ) K0 Dn3 T3 G2.5.6 M8.5 तृषया. G1.3 क्षुत्तृष्णाभ्यां च पीडिताः. — ᶜ) K3.4 तथा; T2 G (except G3) ततो. — ᵈ) G1.2 सु- (for च). K3 चात्यनल्पया (for च प्र°). — After 8, T2 G ins. 1501*. — G1.2.4 cont.:

1502* अतीव गहनं घोरं दुर्विज्ञेयपथं क्वचित् ।

— K4 Ñ2.3 V1 B D T1 (om. lines 5–6) M ins. after 8: T2 G3.5.6, after 1501*: G1.2.4, after 1502*:

1503* न्यविशन्त हि ते सर्वे निरास्वादे महावने ।
ततस्तृषापरिक्षामा कुन्ती पुत्रानथाब्रवीत् ।
माता सती पाण्डवानां पञ्चानां मध्यतः स्थिता ।
तृष्णया हि परीतास्मि पुत्रान्भृशमथाब्रवीत् । [5]
तच्छ्रुत्वा भीमसेनस्य मातृस्नेहात्प्रजल्पितम् ।
कारुण्येन मनस्तप्तं गमनायोपचक्रमे ।

[ (L. 1) D5 ततः; G3 वने; M तदा (for हि ते). T2 G4-6 M तत्र (for सर्वे). K4 प्राविशंस्तत्र ते सर्वे; G1.2 तत्र ते प्राविशन्घोरे. G3 घने तदा (for महा°). — T2 G ins. after line 1: T1, after line 4:

1504* शय्यामेव गतास्तूर्णं चतुर्विंशतियोजनम् ।

— (L. 2) Ñ3 Dn D1 G1 °परिक्षांता; T2 G2-6 M °ग्लाना. T2 G M कुंती वचनमब्रवीत्. — (L. 4) Cf. line 2 above. Dn1 G3.6 तृषया. S (except T1) परितप्ता(G5 °वीता)स्मि (G1.2 °हं). K4 पुत्रका भृशमत्र वै; S अ(T1 ह्य; M वि)नाथेव (G3 अकाले च) महावने. — After line 4, T1 ins. 1504*; while T2 G ins.:

1505* इतः परमहं शक्ता न गन्तुं च पदात्पदम् ।
शयिष्ये वृक्षमूलेऽत्र धार्तराष्ट्रा हरन्तु माम् ।
शृणु भीम वचो मह्यं तव बाहुबलात्पुरः ।
स्थातुं न शक्ताः कौरव्याः किं बिभेषि वृथा सुत ।

— (L. 5) D1 °सेनश्च; D5 T2 G °सेनस्तु (G1.2 °नः स). D5 मातुर्दुःखेन दुःखितः; T2 G मातृवाक्यप्रकंपितः; M मातृवाक्यमुदीरितं. — (L. 6) D5 परीतात्मा; T2 G मनश्चक्रे (for मनस्तप्तं). T2 G4-6 गमनायाथ सत्वरं; G1.2 गमनाय वृकोदरः; M दुःखेन च विशेषतः. — After line 6, G1.2.4 ins.:

1506* अन्येऽरयो न मे सन्ति भीमसेनादृते भुवि ।
धार्तराष्ट्राद्वृथा भीरो न मां स्प्रष्टुमिहेच्छसि ।
भीमपृष्ठस्थिता चेयं दूयमानेन चेतसा ।
साश्रुध्वनि रुदन्ती सा निद्रावशमुपागता । ]

9 T1 om. 9ᵃᵇ. — ᵇ) D5 G5 विपिनं म°. — ᵈ) K3 उपाश्रयत्; Ñ1 °वहत्; Ñ2.3 V1 B D ददर्श ह.

10 ᵇ) K0 स नरर्षभः; K1.2 B3.6 S (except T G5 M5) °र्षभ. — ᶜᵈ) T2 G °यं मृगये यावत्तावद्विश्रम्यतामिह.

11 ᵃ) Ñ3 B1 मुवंति. G3 रुचिरं. — ᵇ) M6-8 वनचारिणः. — ᶜ) K2 Cd (before corr.) जलच्छायो; K3 जलाधारो; Ñ3 जलं स्यायि; Ñ1 V1 B (except B5) D T G जल(G4 °ला)स्थानं. — ᵈ) Ñ1.2 V1 B (except B6) D (except Da) T1 महच्चेति; T2 G अर्ह(G3 भव)तीति. M भविष्यति न संशयः.

12 ᵃ) K0.2 च; M6 तु (for स). — ᶜ) Dn3 G1 M8 यत्र तत्र स्म (by transp.), T1 तत्र यतस्तात; G6 तत्र तत्र स्म. D1 स जगाम वनात्तस्मात्. — ᵈ) Ñ1 V1 B D T1 M8 सारसा; Ñ3 ब्रुवंति. M6-8 वनचारिणः.

13 ᵃ) G1.2 तत्र पीत्वा च पा°. — ᵇ) K0.1 B1 Da1 Dn3 D1 T G3.6 M5.6 °र्षभः; K3 पुरुषर्षभः; G1 विगतश्रमः. G3 स्नात्वा भूत्वा गतक्लमः. — After 13ᵃᵇ, V1 B (except B1) D (except D2) T1 ins.:

1507* तेषामर्थे च जग्राह भ्रातॄणां भ्रातृवत्सलः ।

T1 ins. after 1507*. M, after 13ᵃᵇ: T2 G, after 13ᶜᵈ:

1508* पङ्कजानामनेकैश्च पत्रैर्बद्ध्वा जलाशयात् ।

— ᵈ) Ñ3 स जहार. K0.2 m S परंतपः; Ñ1.2 नरोत्तमः; D5 स भारत. K3 जहार भरतर्षभ; Ñ2 V1 B D T1 आनयामास भारत.

14 ᵃ) K0 Ñ3 G1 गव्यूतिमात्रम्; G2 °मार्गाद्. K (except K4) Ñ1.2 T2 G2.4-6 M आगम्य. — ᵇ) G3 त्वरया. — After 14ᵃᵇ, N (Ś1 K1 hapl. om. the

स सुप्तां मातरं दृष्ट्वा भ्रातॄंश्च वसुधातले ।
भृशं दुःखपरीतात्मा विललाप वृकोदरः ॥ १४
शयनेषु परार्ध्येषु ये पुरा वारणावते ।
नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले ॥ १५
स्वसारं वसुदेवस्य शत्रुसंघावमर्दिनः ।
कुन्तिभोजसुतां कुन्तीं सर्वलक्षणपूजिताम् ॥ १६
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
प्रासादशयनां नित्यं पुण्डरीकान्तरप्रभाम् ॥ १७
सुकुमारतरां स्त्रीणां महार्हशयनोचिताम् ।
शयानां पश्यताद्येह पृथिव्यामतथोचिताम् ॥ १८
धर्मादिन्द्राच्च वायोश्च सुषुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेते ह्यद्यातथोचिता ॥ १९
किं नु दुःखतरं शक्यं मया द्रष्टुमतः परम् ।
योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले ॥ २०
त्रिषु लोकेषु यद्राज्यं धर्मविद्योऽर्हते नृपः ।
सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत्कथम् ॥ २१
अयं नीलाम्बुदश्यामो नरेष्वप्रतिमो भुवि ।
शेते प्राकृतवद्भूमावतो दुःखतरं नु किम् ॥ २२

---

posterior half) T1 ins

1509* शोकदुःखपरीतात्मा निःश्वासोरगो यथा ।,

while G1 3 4 ins

1510* भ्रातॄंश्च मातरं चैव जलं शीतमपाययत् ।
पीतोदकास्ते सर्वेऽपि परिश्रमवशात्पुनः ।
निद्रापहृतधैर्याश्च सुषुपुर्भृशविह्वलाः ।

— S1 K1 (hapl.) om $14^{cde}$ — c) D5 G3 4 प्रसुप्तां T2 G3 5 6 M प्रेक्ष्य, G1 2 4 आह्वन् (for दृष्ट्वा) — d) G1 2 4 निद्राविगतचेतसः — After $14^{cd}$, G1 3 4 ins

1511* महारौद्रे वने घोरे वृक्षमूले सुशीतले ।
विक्षिप्तकरपादांश्च दीर्घोच्छ्वासमहारवान् ।
ऊर्ध्ववक्त्रान्महाकायान्पक्षीन्द्रानिव भूतले ।
अज्ञातवृक्षनिलयप्रेतराक्षससाध्वसान् ।

— ef) Ñ3 V1 B D T1 शोकपरी° G1 3 4 दृष्ट्वैव भृशशोकार्तो विललापानिलात्मजः — After 14, K4 N V1 B D T1 ins

1512* अतः कष्टतरं किं नु द्रष्टव्यं हि भविष्यति ।
यत्पश्यामि महीसुप्तान्भ्रातॄनद्य सुमन्दभाक् ।
[(L. 2) K4 °तॄंश्च वसुधातले ]

15 Before 15, T2 G1 2 6 ins भीम उ°, K0 3 4 भीम उ° — a) K3 महार्हेषु (for परा°) — b) T2 G प्रसुप्ता, M शयाना (for ये पुरा) — c) K1 G3 M6–8 नाभि°, M5 नाति° (for नाधि°) — d) K3 धरातले

16 b) K0 3 D1 °संघातमर्दिनः, K3 T2 G °संघविमर्दि(G2 °र्दे)नः, K4 °संघातभेदिनः — c) K2 Ñ V1 B Da Dn D1 2 4 T1 कुन्तिराज°, D5 T2 G M भोजराज° — d) Ś1 K1 दिव्य°, K3 °संयुतां, D5 °लक्षितां

17 b) K3 Ñ3 T2 G4 6 M पाण्डोर्भार्यां (by transp.) Ś1 मनस्विनीं (for महा°) — c) Ñ2 3 V1 B D T1 तथैव चास्मज्जननीं — d) Ñ V1 B D T1 पुण्डरीकोदर° (N1 °कानन°)

18 a) Ñ3 V1 B D (except D5) T1 पुनः (for स्त्रीणां) — b) Ś1 K Ñ1 2 अना(K4 परा)गसमनर्हंतीं — c) Ś1 K1–4 Ñ1 2 पश्यताद्येमा (Ś1 °नां), D5 तां तथाप्येव, S अद्य पश्यामि K0 शयनार्तां तथाप्येनां — d) T2 G3–6 असुखोचितां, G3 तां तथाविधे K0 D5 पश्य कालविपर्यये

19 Ś1 (hapl.) om 19 — a) Ñ2 3 V1 B D (except D5) T1 वाताच्च — b) G3 च (for या) — c) K1 इह श्रांता — T3 om $19^{d}$, G6 M (hapl.) om $19^{d}$–$21^{c}$ — d) K1 Ñ1 2 D5 ह (for हि) K4 नाहीं (for ह्यद्य) K0 3 4 अयथोचिता Ñ3 T1 G1 3 शेते प्राकृतवत् कथं (G1 विधे, G3 सदा) (=$21^{d}$), V1 B Da Dn D1 2 4 T1 शेते प्रासादशायिनी

20 G6 M om 20 (cf. v. l. 19), T3 (hapl. om them here) reads 20 21 after 23 — ab) K3 किंचित् (for किं नु) D5 दु खम् (for द्रष्टुम्) T2 G1–5 द्रष्टुं (G3 दृष्टं) मया शक्यम् (T3 दु खम्) (by transp.) — c) Ś1 इमानद्य, K1 4 इमान्योध, Ñ2 G1 2 सोऽहमद्य K0 2 D5 यानहं पुरुषव्याघ्रान् — d) T2 G (G6 om) पश्यामि धरणीगतान् (G1 2 °शयान्)

21 G6 M om $21^{abc}$ (cf. v. l. 19), for T3 cf. v. l. 20 23 also — a) Ś1 K Ñ V1 B5 6 Dn D1 2 T1 यो राज्य, T2 G3 5 वै राज्य, G1 2 राजत्व — b) K3 च (for य) V1 B6 Dn D1 4 T G3 5 धर्मनित्यो, G2 3 धर्मपुत्रो K2 4 T2 G1–5 [ऽ]र्हति प्रभु K1 अर्हते धर्मवित्रृप. K1 इह श्रांत धर्मतोऽर्हति वै नृप — c) G1 3 सोयमद्य — d) M तथा (M5 यथा) (for कथम्)

22 a) K1 अयं भूमाविह श्रांतः; T2 G अयं नीलाम्बुदप्रख्यो, M इमौ नीलोत्पलश्यामौ — b) M6 8 °प्रतिमौ G3 Ś1 Ñ2 V1 B D (except D5) T1 [ऽ]र्जुन (for भुवि) G3 (? hapl.) नीलोत्पलसमो भुवि — M om $22^{cd}$ — G5 (? hapl.)

अश्विनाविव देवानां याविमौ रूपसंपदा ।
तौ प्राकृतवदद्येमौ प्रसुप्तौ धरणीतले ॥ २३
ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः ।
स जीवेत्सुसुखं लोके ग्रामे द्रुम इवैकजः ॥ २४
एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः ।
चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः ॥ २५
येषां च बहवः शूरा ज्ञातयो धर्मसंश्रिताः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ॥ २६
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥ २७
वयं तु धृतराष्ट्रेण सपुत्रेण दुरात्मना ।
विवासिता न दग्धाश्च कथंचित्तस्य शासनात् ॥ २८
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः ।
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् ॥ २९
नातिदूरे च नगरं वनादस्माद्धि लक्षये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ॥ ३०
पास्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः ।
इति भीमो व्यवस्यैव जजागार स्वयं तदा ॥ ३१ C. 1. 5626 B. 1. 151. 45 K. 1. 163. 54

इति श्रीमहाभारते आदिपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ समाप्तं जतुगृहदाहपर्व ॥

---

om. 22ᵈ–23ᵉ. — ᵈ) Ñ2 V1 B D (except D5) T1 ततो (for अतो). Ko भुवि; G1.2 तु मे. — After 22, T G (except G3) ins.:

1513* इमौ नीलोत्पलश्यामौ नरेष्वप्रतिमौ भुवि ।
(cf. 22ᵃᵇ and v. l.).

23 G3 om. 23ᵃᵇᶜ (cf. v. l. 22). — ᵃ) G3 अपि (for इव). — ᵇ) T2 G3.4.6 M अ(G3 M6.7 आ)श्विनौ; G1.2 अन्वितौ (for याविमौ). — ᶜ) Ñ1 °वदद्यैतौ; K3 प्राकृताविवाद्येमौ; D5 T2 G3.4.6 M तु (G3 च) प्राकृतवत् चेमौ (D5 भीमौ; T2 G3 भूमौ; G4.6 चोभौ; M8 हीमौ). G1.2 माद्रेयौ सुकुमाराङ्गौ. — ᵈ) G1 शयाते; G3 शेरते (for प्रसु°). — After 23, T2 (wrongly) reads 20–21, having (hapl.) om. them in their proper place.

24 ᵃ) K3.4 जीवेद्विसु(K4 °सु)खं; Ñ2 V1 B D T1 जीवेत सुखं (Da जीवेत्सुखसं-); T2 G M जीवेत्सुखितो. — ᵈ) Ś1 Ñ V1 B Dn D1.3.4 T1 G2.3 ग्रामद्रुम; K1 ग्रामे वृक्ष. Ś1 K1 D3 इवैकक:; K3 Ñ2 इवौकस:; Cd as in text.

25 ᵃ) Ś1 K1 एकवृक्षेपि; Ko.4 Ñ1.2 एकवृक्षो हि; Da एको हि वृक्षो. — ᵇ) Ko Ñ2 D5 G1.2 पुष्प°; Ñ1 पूर्ण°; D4 फल्गु° (for पर्ण°). G3 फलैःपत्रफला°. — D1 om. 25ᶜᵈ. — ᵈ) B5 वचनीय:; T2 G1.2.4.5 अर्चनीयै:. G1 स पूजित:; M6–8 तथैव स:.

26 ᵇ) Ko °संमता:; K3 °संहिता:; K4 °संस्थिता:; Ñ2 V1 B D T1 °माश्रिता:; T2 G M °वत्सला:. — ᶜ) T2 G3–6 चिरं (for सुखं).

27 ᵃ) Ñ2 सुसिद्धार्था. — ᵇ) G1.2 M पितृ°. — ᶜ) Ko D5 आसाद्य (for आश्रित्य). — ᵈ) G1.2 वंशा: (for द्रुमा:). K3 वनभया इव.

28 ᵇ) G1.2 दुष्पुत्रेण. — After 28ᵃᵇ, T1 G1.2.4 ins.:

1514* राज्यलुब्धेन मूर्खेण दुर्मन्त्रिसहितेन च ।
दुष्टेनाधर्मशीलेन स्वार्थैकनिष्ठबुद्धिना ।

— ᶜ) Ñ1 G6 च (for न). M तु (for च). — ᵈ) K3 हि पुरोदिता:; Ñ2 V1 B D (except D5) T1 दैवसंश्रयात् (for तस्य शा°). T2 G M क्षत्तुर्बुद्धिपराक्रमात्.

29 ᵈ) Ś1 क्लेशं प्राप्ता: (by transp.). — After 29, K4 Ñ V1 B D T1 ins.:

1515* सकामो भव दुर्बुद्धे धार्तराष्ट्राल्पदर्शन ।
नूनं देवाः प्रसन्नास्ते नानुज्ञां मे युधिष्ठिरः ।
प्रयच्छति वधे तुभ्यं तेन जीवसि दुर्मते ।
नन्वद्य ससुतामात्यं सकर्णानुजसौबलम् ।
गत्वा क्रोधसमाविष्टः प्रेषयिष्ये यमक्षयम् ।
किं नु शक्यं मया कर्तुं यत्ते न क्रुध्यते नृपः ।
धर्मात्मा पाण्डवश्रेष्ठः पापाचार युधिष्ठिरः ।
एवमुक्त्वा महाबाहुः क्रोधसंदीप्तमानसः ।
करं करेण निष्पिष्य निःश्वसन्दीनमानसः ।
पुनर्दीनमना भूत्वा शान्तार्चिरिव पावकः ।
भ्रातॄन्महीतले सुप्तानवैक्षत वृकोदरः ।
विश्वस्तानिव संविष्टान्पृथग्जनसमानिव ।

[ (L. 2) K4 B1.2.5 D5 नाज्ञां मम युधि°. — (L. 4) B (except B3) न त्वाद्य. B5 Da D4 त्वां सहामात्यं. — (L. 8) K4 Da क्रोधसंदीप्त(K4 °रक्त)लोचन:. — (L. 9) K4 Ñ2 B1.3 m.5 D3 संस्पृश्य; Ñ1.2 B3 संपिष्य. K4 दीनमातुर:; Ñ1.2 D1.4 T1 दीप्तमानस:; B5 दीप्तलोचन:. ]

30 ᵃ) V1 B1.5 Dn D1 °दूरेण; B3 G3 °दूरेति. — ᵇ) Ś1 K1 च; Ñ वि-; G3 तु (for हि). D5 G1–3 लक्ष्यते. — ᶜ) B (except B3) Da D2.4 जागृतव्ये. — ᵈ) Ñ1.2 जागर्म्येतामहं क्षपां.

## १३९

वैशंपायन उवाच ।
तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात्तस्माच्छालवृक्षमुपाश्रितः ॥ १
क्रूरो मानुषमांसादो महावीर्यो महाबलः ।
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः ।
पिशितेप्सुः क्षुधार्तस्तानपश्यत यदृच्छया ॥ २
ऊर्ध्वाङ्गुलिः स कण्डूयन्धुन्वन्रूक्षाञ्शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनः पुनरवेक्ष्य च ॥ ३
दुष्टो मानुषमांसादो महाकायो महाबलः ।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ ४
उपपन्नश्चिरस्याद्य भक्षो मम मनःप्रियः ।
स्नेहस्रवान्प्रस्रवति जिह्वा पर्येति मे मुखम् ॥ ५
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ।
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥ ६

---

31 a) Ñ2 V1 प्राइयंतीमे; Cd as in text. — b) K (except K1) गतक्लमाः; G1.2.4 च शेषितं; G5 जितश्रमाः; Cd as in text. T2 G3 प्रबुद्धा विजितक्लमाः. — c) Ś1 K1 विवस्यैव; K0 D1 °स्येदं; K2.4 M2.3 Cd °स्यैवं; K3 °स्याथ; T2 G विनिश्विस्य. — d) S जागर्ति स्म (for जजा°). T2 G पतापवान्. — Cd cites the *entire* line 31cd (v. l. एवं for एव).

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K1.3 Ñ V1 B Da Dn1.n3 D1.2.4.5 T1 जतुगृह(D1 om. गृह)दाह (Ñ1.2 V1 जतुगृह; B1.3 जातुष); to it K2.3 Ñ2 B6 Dn1.n3 D1.2.4.5 add समाप्त. — *Adhy. name:* K0.4 भीमसेनप्रलापः; K3 पांडवप्रवासः; Ñ1.2 V1 भीमजलाहरणं; M2-3 हिडिंबवन-प्रवेशः (M2.3 °दानं). — *Adhy. no.* (figures, words or both): B1 148; Dn3 150; D4m 153; T1 147; T2 G5.6 M 97; G1.3 98; G2.4 96. — *S'loka no.:* Dn 45; M3 33. — *Aggregate s'loka no.:* Dn3 5913.

### 139

1 Ś1 K1.3 D2.4.5 S om. उवाच. — a) Ñ2 तेषु तत्र (by transp.); T2 G2.3 ततस्तेषु. — b) A few MSS. हिडंबो. — c) K3 नातिदूरे. — d) S सालवृक्षं. Ñ V1 B2.6 D (except D5) G1 समाश्रितः.

2 b) K0 महाकायो (for °वीर्यो). Ñ2 V1 B D (except D5) T1 महावीर्यपराक्रमः. — After 2ab, Ñ (Ñ3 om. lines 1–2; Ñ1.2 om. lines 4–5) V1 B D (except D5) T1 ins.:

1516* प्रावृड्जलधरश्यामः पिङ्गाक्षो दारुणाकृतिः ।
दंष्ट्राकरालवदनः पिशितेप्सुः क्षुधार्दितः ।
लम्बस्फिग्लम्बजठरो रक्तश्मश्रुशिरोरुहः ।
महावृक्षगलस्कन्धः शङ्कुकर्णो विभीषणः ।
यदृच्छया तानपश्यत्पाण्डुपुत्रान्महारथान् ।

[ (L. 4) B3m Da महापृष्ठगल°. Ñ3 transp. विभीषणः and यदृच्छया (in line 5). — With line 5 cf. 2ef. ]

— G1.2.6 (hapl.) om. 2c–4b. — d) T2 G1.5 M भीमदर्शनः. — e) K0.4 T2 G5 M6–8 सन्; Ñ2 V1 B D (except D5) G4 च; T1 G1 M3.4 स (for तान्). — f) K3 Ñ1.3 D5 अपश्यत्स; K4 अपश्यतान्; Ñ2 V1 B Da Dn D1.2.4 T1 तानपश्यद्; T2 G1.4.5 M जिघ्रन्तं(M2.3 °घ्रं)धं.

3 G2.3.6 om. 3 (cf. v. l. 2). — b) Some MSS. धून्वन्. Ñ1 चैव (for रूक्षान्). — c) Ñ1 महद्वक्त्रः. — d) Ś1 K1-3 Ñ1.2.3 (by corr.) ह (for च). K0.4 D1.2 अवेक्षत; D5 उद्वेक्षत.

4 G1–2.6 om. 4ab (cf. v. l. 2). — a) K1 लब्धो; Ñ2.3 V1 B D (except D5) T हृष्टो; B3m कृष्णो; G4.5 M सुष्टो (M3 तुष्टो). K1 Ñ3 V1 B1.6 Dn1.n3 D1.2 T G3 M °मांसस्य; B3.5 Da Dn3 D5 G4 °मांसाशी. — After 4ab, Ś1 K B3 D5 read 1. 140. 2cd, repeating it in its proper place.

5 Before 5, M ins. हिडिंबः. — b) Some MSS. भक्ष्यो. K4 मे मनसेप्सितः; Ñ2 V1 B D (except D5) T2 [ऽ]यं मम सुप्रियः (Ñ3 तुष्टिदः). — c) Ñ2 स्नेहस्रवं; Ñ3 °स्रवः; D2 °स्रावान्; T1 °स्रावं. Ś1 K प्रस्त्र(K0.2.3 °स्र)वंती; B3 Da प्रसर°; D2 प्रसव°. D5 स्नेहास्त्रावातिप्रवणा; T2 G जिघ्रतः प्रस्रुतस्नेहा; M स्नेहास्त्रावं विसृजति. — d) M G1 वै (for मे). K2 Ñ2.3 V1 B1m.3 Da Dn1.n3 सुखं; K3 सुखे.

6 a) G5 दंताः (for दंष्ट्राः). S (except T1) सिता(G1.2 समा)स्तीक्ष्णाः (G4 सुतीक्ष्णाश्च also). — b) T1 M यतः; T2 G3 हंत; G1.2 मम (for आपात-). — G3 om. 6c–8b. — c) K3 पातयिष्यामि; G4 M °यिष्यंति. — d) K0.3

आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि ।
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ॥ ७
गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः ।
मानुषो बलवान्गन्धो घ्राणं तर्पयतीव मे ॥ ८
हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम् ।
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ॥ ९
एषां मांसानि संस्कृत्य मानुषाणां यथेष्टतः ।
भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम ॥ १०
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ।
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ ॥ ११
ददर्श तत्र गत्वा सा पाण्डवान्पृथया सह ।
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् ॥ १२
दृष्ट्वैव भीमसेनं सा शालस्कन्धमिवोद्गतम् ।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ १३
अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ।
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ॥ १४
नाहं भ्रातृवचो जातु कुर्यां क्रूरोपसंहितम् ।
पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदम् ॥ १५ C. 1. 6044 B. 1. 152. 19 K. 1. 154. 23

---

Ñ1 स्वेदेषु पि°.

7 G3 om. 7 (cf. v. l. 6). — a) K0 D5 आछिद्य (for आक्रम्य). Ñ1 मूर्ध्नि; Ñ3 मूर्ध्नं; G1.3 कर्णं. — b) Ś1 K0.3.4 D5 उच्छिद्य. K2 G1 M6-8 धमनीरपि; Cd as in text. — c) D5 नारं (for नवं). — d) K4 D2 मुहुः.

8 G3 om. $8^{ab}$ (cf. v. l. 6). — a) B1.6 G5 Cd तु (for तु). — b) K3 वृक्षमाश्रिताः.

9 a) Ñ1 हृद; M6-8 गत्वा (for हत्वा). Ñ3 इमान्; T2 G M6-8 तान्. T2 G एतान् (for सर्वान्). — b) Ś1 K1 D2 आनयेह; K4 °येति; T2 G °याशु; M °येथा. Ś1 K1 मदंतिकं. K0.2.3 Ñ1.3 D5 आनयेहांतिकं मम. — D5 om. $9^{c}$–$10^{b}$. — d) Ś1 न तेभ्यो; K0 न ह्येभ्यो; K4 ह्यन्येभ्यो; B3 मैतेभ्यो. B3 G1.2 भयमस्तु. Ś1 K (except K3) Cd तौ.

10 D5 om. $10^{ab}$ (cf. v. l. 9). — a) K3 M तेषां; T2 G सतो. Ś1 K1-4 M6-8 सत्कृत्य; M8 चोत्कृत्य. K0 सत्कृत्य मांसानि; Ñ3 V1 B D (D5 om.) T1 उत्कृत्य मांसानि. — b) T2 G मानुषाणि. K3 विशेषतः; Ñ3 यथेप्सितं. — c) Ś1 मुदितौ (for सहि°). T G सहितौ भक्षयिष्यावः. — d) T2 G कुरु क्षिप्रं. — After 10, K4 Ñ V1 B D (except D5) S (T2 G M om. line 1) ins.:

1517* भक्षयित्वा च मांसानि मानुषाणां प्रकामतः ।
नृत्याव सहितावावां दत्ततालावनेकशः ।
एवमुक्ता हिडिम्बा तु हिडिम्बेन तदा वने ।

[ (L. 2) Ñ3 B3 Da1 Dn1, n3 D1.2.4 नृत्यावः. T2 G M ततस्तुष्टौ प्रनृत्यावः प्रगीतौ करतालकौ. — (L. 3) Before line 3, S ins. वैशं°. K4 Ñ3 D5 S (except T1) एवमुक्ता हिडिंबेन हिडिंबा (G1-3 M °बी) राक्षसी तदा (K4 Ñ3 D5 तु तदा वने). ]
— S cont.:

1518* आप्लुत्याप्लुत्य च तरूनगच्छत्पाण्डवान्प्रति ।

11 M om. 11. — a) K0 G6 त्वरमाणैव; K3 D5 T G4.5 °णा च. — b) K1 यत्र यत्र (sup. lin. as in text); B1.5 T2 G1.2.4.5 (by transp.) यत्र तत्र. — d) Ś1 K3.8 Ñ1.3 भरतर्षभाः; K0 पुरुषर्षभाः; D5 पृथया सह. T2 G शेरते पाण्डवा वने.

12 a) K0 गत्वा सा तत्र; Ñ1.2 V1 B3 Dn D1.3 T1 G6 तत्र सा गत्वा; T2 G4.6 सा तत्र गत्वा (by transp.); G3 तान्तत्रगतान्. G1.2 गत्वा सा ददृशे तत्र. — K4 (hapl.) om. $12^{b}$–$13^{a}$. — d) K1 T2 G3-6 M च (for तु). K0.2.3 Dn1 G3 जाग्रतमपरा°. — After 12, T2 G ins.:

1519* उपास्यमानान्भीमेन रूपयौवनशालिना ।
सुकुमारांश्च पार्थांश्च व्यायामेन च कर्शितान् ।
दुःखेन संप्रयुक्तांश्च सहृज्येष्टान्प्रमाथिनः ।
रौद्री सती राजपुत्रान्दर्शनीयप्रदर्शनम् ।

[ (L. 1) G1.2 भीमेन पालितांश्चैव (for the prior half). — (L. 2) G3 सुकुमारान्सुरूपांश्च. — (L. 4) G3.4 रौद्रा सती. ]

13 K4 om. $13^{a}$ (cf. v. l. 12). — b) Ś1 K1 S सालस्कंधमि° (G1 °स्कंधोपमद्युतिं); Ñ3 V1 B D शालपोतमि°. — G1 om. $13^{c}$–$14^{b}$. — d) G3 स्वरूपेमतिमं भुवि. — After 13, S (except G1) ins.:

1520* अन्तर्गतेन मनसा चिन्तयामास राक्षसी ।

14 G1 om. $14^{ab}$ (cf. v. l. 13). — a) B3 गौरः श्या°. — b) Ś1 K1.2 सा(K2 श्या)लस्कंधो. — d) K3 युक्तो भर्ता (by transp.). — After 14, M (which om. 15–16) ins. line 2 of 1521* (cf. v. l. 16).

15 M om. 15–16. — a) T G1.3 भ्रातुर्वचो; G3 भ्रातुर्वचो. — b) Ñ3 क्रूरोपबृंहितं; T2 G क्रूरमसांप्रतं. — c) T2 G पतिदेहुर्. K1 अपि; K2.3 Ñ1.3 B (except B3) Da1 D2.4 T2 G हि (for अति-). — d) Ś1 K1 पुनर् (for तथा). K3 N3 G3 °संगतं; T2 G2-4.6 °संगमः (G4m

मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च ।
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः ॥ १६
सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमम् ।
उपतस्थे महाबाहुं भीमसेनं शनैः शनैः ॥ १७
विलज्जमानेव लता दिव्याभरणभूषिता ।
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ॥ १८
कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ ।
क इमे शेरते चेह पुरुषा देवरूपिणः ॥ १९
केयं च बृहती श्यामा सुकुमारी तवानघ ।
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ॥ २०
नेदं जानाति गहनं वनं राक्षससेवितम् ।
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥ २१
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा ।
बिभक्षयिषता मांसं युष्माकममरोपम ॥ २२
साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम् ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥ २३
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्ताङ्गीं भजमानां भजस्व माम् ॥ २४
त्रास्येऽहं त्वां महाबाहो राक्षसात्पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ ॥ २५

---

as in text).

16 M om. 16 (cf. v. l. 15). — ab) K3 Ñ1.3 अपि; Dn T1 G5.6 एव (for इव). Ś1 वा तृप्तिर्; K3.4 B3 तृप्तिस्तु. K1.4 ममैव हि; K3 B3 D5 ममापि च. G1–4 मुहूर्तमपि चानेन (G3 भार्या च; G4 चाप्यहं) प्राप्नुयां तृप्तिमुत्तमां (G3 धृतिरुत्तमां). — c) D5 मृतैर् and असृत्वा (for हतैर् and अहत्वा respectively). T2 G6 अहं नैव (for अहत्वा तु). G1–4 भर्त्रा त्वहं वने रम्ये (G3 वनेनेन; G4 अनेनेह). — d) D5 रोदिष्ये. G1–4 बहुलाः समाः. — T G ins. after 16: M (om. line 1), after 14:

1521* हिडिम्बी तु महारौद्रा तदा भरतसत्तम ।
उत्सृज्य राक्षसं रूपं मानुषं रूपमास्थिता ।

17 Before 17, T2 G5.6 ins. वैशं°. — a) S कृत्वा मदनमोहिता (G1 °तं); cf. 1521*. — c) Ś1 K1.2.4 संप्रतस्थे. K0.2 Ñ1.3 S (except T1) महात्मानं. — d) S अनिन्दिता (G1.2 मनोहरा; M6 अतन्द्रिता). — After 17, S ins. (M om. from line 3 onward):

1522* इङ्गिताकारकुशला मुपासर्पच्छनैः शनैः ।
विनम्यमानेव लता सर्वाभरणभूषिता ।
शनैः शनैः स तां भीमः समीपमुपसर्पतीम् ।
वीक्षमाणस्तदापश्यत्तन्वीं पीनपयोधराम् ।
चन्द्राननां पद्मनेत्रां नीलकुञ्चितमूर्धजाम् ।
कृष्णां सुपाण्डुरैर्दन्तैर्बिम्बोष्ठीं चारुदर्शनाम् ।
दृष्ट्वा तां रूपसंपन्नां भीमो विस्मयमागतः ।
उपचारगुणैर्युक्ता ललितैर्हास्यसंस्थितैः ।
समीपमुपसंप्राप्य भीमस्याथ वरानना ।
वचो वचनवेलायामिदं प्रोवाच पाण्डवम् ।

[ (L. 1) T1 G4.5 उचिताकार°. — (L. 2)–(var.) 18ab. T1 G4.5 विनम्यमाना ललना. — (L. 3) G2 कृतां (for स तां). — (L. 4) G2 वीक्ष्यमाणां तथा. — (L. 6) G6 वक्त्रैः (for दन्तैः). — (L. 8) T1 G4–6 ललितैर्. T1 हावसंस्थितैः; G1 हासगर्वितैः; G2 हास°; G6 भाव°. — (L. 9) G1.6 भीमं साथ. T1 वरांगना. — (L. 10) T1 भीमं प्रोवाच कामिनी. ]

18 S repeats 18ab; cf. 1522*. — a) K3 विपजमानेव; M विना(M2.3 °न)म्य°. K0.4 B6 D2.5 तदा; K1.3 च सा; Ñ2 D4 नता; B3m सती (for लता). Ñ3 V1 Dn D1.4 लज्जमानेव ललना; B6 संलज्जमाना ललना; T G लज्जया नम्यमानेव. — b) T G सर्वा°.

19 Before 19, M ins. हिडिंबी. — b) K3 पुरुषोत्तम; Ś1 G4 भरत°. — c) G1.3 इमे के (by transp.). — d) Ś1 K1 दिव्यरूपिणः.

20 a) N1 का चेयं; Ñ3 कथं च. Ñ3 V1 B D (except Ds) T G3–6 वै (for च). — b) K (except K1) D5 M प्राप्ता वयानघ (K1 D5 °धा); G4 सदा°. — c) G6 प्राप्ता. — d) K2 विश्वब्धा; D5 °स्तब्धा. G6 स्वगृहेष्विव.

21 a) K3 नेयं; G6 इमं. Ś1 K1 जानासि; T2 G1.2 M °नीथ; G4–6 °नी हि. — c) K3–4 D5 दुष्टात्मा; G6 पापो हि. — d) MSS. (indiscriminately) हिडिंबो and हिडंबो.

22 b) B1(m as in text).2.3 Da D2 °न चेतसा. — c) Ś1 K3 B1.2.3m.6 G2 बिभक्षयिष्यता. — d) Ś1 K Ñ V1 B3.6 Da Dn1.n3 D1.5 M (except M6) ममरोपमाः (K1 असुरोपमः).

23 a) K3 अपि; T2 G इह (for अभि-). K0 इंद्रां प्रेक्ष्य. G3 संप्राप्य (for -संप्रेक्ष्य). — c) K3 Ñ3 अन्विच्छे (for इच्छामि). G3 भर्तारमहमिच्छामि.

24 a) Ñ3 एवं वि°. Ś1 धर्मात्मन्. — b) K4 मम (for मयि). — c) D5 °चित्तांगीं; T1 G °चित्तां हि.

25 a) K0.2.3 Ñ V1 B (except B1) D त्रास्यामि; K3 रक्षामि; Cd as in text. Some MSS. त्वा (for त्वां).

अन्तरिक्षचरा ह्यस्मि कामतो विचरामि च ।
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥ २६

भीम उवाच ।

मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानिमान् ।
परित्यजेत को न्वद्य प्रभवन्निव राक्षसि ॥ २७
को हि सुप्तानिमान्भ्रातॄन्दत्त्वा राक्षसभोजनम् ।
मातरं च नरो गच्छेत्कामार्त इव मद्विधः ॥ २८

राक्षस्युवाच ।

यत्ते प्रियं तत्करिष्ये सर्वानेतान्प्रबोधय ।
मोक्षयिष्यामि वः कामं राक्षसात्पुरुषादकात् ॥ २९

भीम उवाच ।

सुखसुप्तान्वने भ्रातॄन्मातरं चैव राक्षसि ।
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥ ३०
न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम् ।
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥ ३१
गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत्कुरु ।
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकम् ॥ ३२ C. 1. 5261 B. 1. 152. 33 K. 1. 154. 30

इति श्रीमहाभारते आदिपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

---

— ᵇ)=29ᵈ. — ᶜ) K (except K₂) Ñ₁ G₁.₂ वत्स्यामो; M °मि. T₂ G (except G₄) °श्रृंगेषु. — ᵈ) T₂ G₃ भर्ता त्वं मम चानय. — After 25, T G ins.:

1523* इच्छामि वीर भद्रं ते मा मा प्राणान्विहासिषुः ।
त्वया ह्यहं परित्यक्ता न जीवेयमरिंदम ।

[ (L. 1) G₃ मम प्राणान्. G₁ विहास्यसि. T₁ मा प्राणान्मो विहासिषुः. — (L. 2) G₃ त्वयात्यहं. ]

26 ᵃ) Ñ₁.₃ V₁ B D (except D₅) T₁ °चरी (for °चरा). S (except T₁ G₃) चास्मि. — ᵇ) K₃.₄ D₅ अहं (for च). S (except T₁) कामरूपधरापि च. — ᶜ) D₅ अचलां. Ś₁ K₁.₂.₄ Da₁ D₅ प्राप्नुहि.

27 Ś₁ K₁ भीमसेनः; Ñ V₁ B₁ D (except Da) भीमसेन उ°; S भीमः. — Ś₁ K₂ (hapl.) om. 27ᵃ–29ᵈ and भीम उ° (before 30). — After the ref., S ins.:

1524* एष ज्येष्ठो मम भ्राता नान्यः परमको गुरुः ।
अनिविष्टश्च तं नाहं परिविद्यां कथंचन ।

[ (L. 1) T₂ परमतो गुरुः. — (L. 2) G₁ अनिर्दिष्टश्च; G₃ अनिर्विण्ण°; G₄ अविनष्ट°; G₆ अभिमिष्ट°. G₅ अनिष्ट-कमनं नाहं. G₁.₂.₄.₅ परिवेत्ता; G₃ °वित्या. ]

— ᵇ) Ñ₃ B Da D₂.₄ अपरानपि; T₂ G₁.₃ अपराजितान्. Ñ₁.₃ कनीय(Ñ₃ °यां)सोपरानिमान्; V₁ Dn₁.n₂ D₁ सुख-सुप्तान्कथं त्विमान्. — ᶜ) K₃ G₁.₃ M परित्यजति; T₂ G₃–₆ °त्यजेद्धि. — ᵈ) K₃ प्रमादादिह; Ñ V₁ Dn D₁.₆ T₁ प्रभवन्निह; T₂ G M भयादपि च.

28 Ś₁ K₁ Da om. 28 (cf. v. l. 27). — ᵃ) G₁.₃ सुखसुप्तान्. K (K₁ om.) Ñ₁.₃ वने भ्रातॄन्. — ᶜ) M₃ तथा गच्छेत्. — ᵈ) Ñ₁.₃ कामार्थमिव (Ñ₃ °ह) त्व(Ñ₃ न)द्विधः. — S ins. after 28 (M om. all but line 1):

1525* राक्षसी ।
एकं त्वां मोक्षयिष्यामि सह मात्रा परंतप ।
सोदरांस्तुत्सृजैतांस्त्वमारोह जघनं मम ।
भीमः ।
नाहं जीवितुमाशंसे भ्रातॄनुत्सृज्य राक्षसि ।
यथागतं व्रजैका त्वं विप्रियं मे प्रभाषसे ।

[ (L. 1) M₆–₈ अहं त्वां. — (L. 4) T₂ G₁.₃.₆ यथाभद्रं व्रजैका हि. ]

29 Ś₁ K₁ M om. 29 (cf. v. l. 27). — T₁ G₁.₃ राक्षसी; T₂ G₃–₆ हिडिंबी (all om. उवाच). — ᵃ) T₂ G न तेऽप्रियं चिकीर्षामि. — ᶜ) K₃ G₃ प्रियो°; K₄ निबोध मे. — ᶜ) Ñ₃ V₁ B D (except D₁.₆) T₁ अहं (for वः). — ᵈ)=25ᵇ.

30 K₀.₂ Ñ₁.₂ V₁ B₁ Dn₂.n₃ D₄.₅ भीमसेन उ°; T G भीमः (om. उ°); Ś₁ K₁.₄ M om. the ref. (cf. v. l. 27). — T₂ G transp. 30ᵃᵇ and 30ᶜᵈ. — ᵃ) S (except T₁) इमान् (for वने). — ᵇ) M राक्षसात्. — After 30ᵃᵇ, M ins. भीमः. — ᶜ) G₃ न भिया.

31 ᵇ) T₂ G शक्ताः सोढुं (by transp.). — ᵈ) D₂ चारुहासिनि.

32 ᵈ) S राक्षसं.

Colophon om. in B₁. — *Major parvan:* T₂ G M संभव° (for आदि°). — *Sub-parvan:* Ś₁ K₁.₃ Ñ V₂ B₃.₅.₆ Da Dn₁.n₂ D₁.₂.₄.₆ T₁ हिडिंबवध. — *Adhy. name:* K₀ हेडंबागमः; K₄ हिडंबागमनं; Ñ₁.₃ V₁ T₁ भीमहिडिंबा(T₁ °राक्षस)संवादः; G₃ हिडिंबिसंवादः; G₄ हिडिंबप्रयोगः. — *Adhy. no.* (figures, words or both): Dn₃ 151; D₄m 154; T₁ 148; T₂ G₅.₆ M 98; G₁.₃ 99; G₂.₄ 97. — *Śloka no.:* Dn 34 (Dn³ 37); M₃ 33.

# १४०

62 3. 1 5. 1 वैशंपायन उवाच ।

तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः ।
अवतीर्य द्रुमात्तस्मादाजगामाथ पाण्डवान् ॥ १
लोहिताक्षो महाबाहुरूर्ध्वकेशो महाबलः ।
मेघसंघातवर्ष्मा च तीक्ष्णदंष्ट्रोज्ज्वलाननः ॥ २
तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनम् ।
हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ॥ ३
आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः ।
त्वामहं भ्रातृभिः सार्धं यद्ब्रवीमि तथा कुरु ॥ ४
अहं कामगमा वीर रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणीं नेष्यामि त्वां विहायसा ॥ ५
प्रबोधयैनान्संसुप्तान्मातरं च परंतप ।
सर्वानेव गमिष्यामि गृहीत्वा वो विहायसा ॥ ६

भीम उवाच ।

मा भैस्त्वं विपुलश्रोणि नैष कश्चिन्मयि स्थिते ।
*अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे* ॥ ७
नायं प्रतिबलो भीरु राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ॥ ८

## 140

1 Ś1 K1.3 Ds [illegible] om. उवाच. — b) Ś1 K1 T2 G2 नाम राक्षसः (cf. 1. 139. 1); G3 राक्षसोत्तमः. — c) Ñ3 द्रुमाद्वृक्षाद्. — d) Ñ3 V1 B2.3 Dn आशु (for अथ).

2 b) K4 भयानकः; Ñ3 V1 B (except B6) D (except D2.5) T1 महाननः. — For $2^{cd}$, cf. v. l. 1, 139. 4 also. — c) Ś1 M5-8 °संकाशवर्ष्मा (D5 वर्णेश्च) च; T2 G °श्यामो महावर्ष्मा; Cd as in text. — d) Ñ3 V1 B D (except D5) T1 °ष्ट्रो भयानकः. — After 2, S ins.:

1526* तलं तलेन संहत्य बाहू विक्षिप्य चासकृत् ।
उद्वृत्तनेत्रः संक्रुद्धो दन्तान्दन्तेषु निष्पिपन् ।

[ (L. 1) G1.3 विस्फार्य; M चोत्क्षिप्य. — (L. 2) T2 निष्कृपन्; G1.2.6 M निष्कपन्. ]
Thereafter T G1.2.4-6 read (for the first time) $17^{ab}$ (v. l. कोपसे) and then cont.:

1527* न बिभेति हिडिम्बी च प्रेषिता किमनागता ।
(which is a v. l. of $17^{cd}$). — After 1526*, G3 ins. 1531* (cf. v. l. 20).

3 G3 (hapl.) om. 3-20. Before 3, T G4.6 ins. वैशं°. — a) T2 G1.3 समागतं तु. — b) S (except T1; G3 om.) तथारूपं भयंकरं (M5-8 भयानकं). — Before $3^{cd}$, D5 ins. राक्षस्युवाच. — c) S (except T1; G3 om. हिडिंबी (for हिडिम्बा). D5 वित्रस्तनेत्रा सुमुखी.

4 G3 om. 4 (cf. v. l. 3). Before 4, K3 ins. राक्षस्यु°; M5.6-8 हिडिंबी. — a) K1 T2 G1.2.3 एव (for एष). — c) Ñ1.2 V1 B D (except D5) साहं त्वां; T G (G3 om.) त्वं चापि (for त्वामहं).

5 G3 om. [illegible] (cf. v. l. 3). — a) K0 Ñ3 भीम; K2 भीरु; T2 G (G3 om.) चैव (for वीर). — b) S (except T1; G3 om.) आरोहेमां. Ñ3 आरुहेमं मम पृष्ठं. — d) K Ñ3 D5 नयिष्ये त्वां. B1m D5 M2 विहायसं.

6 K1 M (hapl.) om. 6; G3 om. 6 (cf. v. l. 3). — a) B (except B6) D2 पुत्रान् (for एतान्). T2 G (G3 om.) सोदर्यान् (for संसुप्तान्). — b) T2 G (G3 om.) भरतर्षभ (for परं°). — c) Ś1 विने°; K4 Ñ3 नयि° G6 ग्रही° (for गमि°). K3 °नेवाद्य नेष्यामि. — d) D निबोध त्वं; D5 नयिष्ये वो (for गृहीत्वा वो). Ñ1 विहायसः; Ñ3 B (except B6) Da D2.4 T1 नभः प्रति. T2 G (G3 om.) गृहीत्वा त्व(G4 -द्; G6 त्यो)मसत्कवत्.

7 G3 om. 7 (cf. v. l. 3). Ś1 K1 भीमसेनः; K3 D2 S (G3 om.) भीमः; K4 भीमसेन उ°. — a) Ś1 K1.3.4 Ñ3 पृथुक°; K3 V1 Dn D2 T1 पृथुसु°. — b) K0.3.4 D2 T G1.2.4.6 नैव किंचिन्. — After $7^{ab}$, Ś1 K Ñ3 B2.6 D2 D4.5 ins.:

1528* हिंसितुं शक्नुयाद्रक्ष इति मे निश्चिता मतिः ।
[ K0.3 निश्चला मतिः. K1 prior half corrupt. K2 °क्नुयात्पापो राक्षसस्त्विति मे मतिः. D5 शक्नुयात्पापः. ]
— On the other hand, D5 ins. after $7^{cd}$:

1529* एतान्बाधयितुं शक्तो देवो वा दानवोऽपि वा ।
— c) G1.2 वधिष्यामि. — d) K2 T2 G (G3 om.) पश्यंत्यास्ते. M5 नायं प्रतिबलो मम (cf. $8^{a}$).

8 G3 om. 8 (cf. v. l. 3). — a) K2 D5 नाक्ष(D5 °य)मल्पबलो ह्येष (D5 भीरु); M2 बलं न सहते भीरु. — b) D2 S (G3 om.) °साधमो. — c) D5 सोढुं. Ñ3

पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसंकाशौ संहतं चाप्युरो मम ॥ ९
विक्रमं मे यथेन्द्रस्य साद्य द्रक्ष्यसि शोभने ।
मावमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् ॥ १०

हिडिम्बोवाच ।

नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम् ।
दृष्टापदानस्तु मया मानुषेष्वेव राक्षसः ॥ ११

वैशंपायन उवाच ।

तथा संजल्पतस्तस्य भीमसेनस्य भारत ।
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः ॥ १२
अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखं समग्रेन्दुनिभाननम् ॥ १३
सुभ्रूनासाक्षिकेशान्तं सुकुमारनखत्वचम् ।
सर्वाभरणसंयुक्तं सुसूक्ष्माम्बरवाससम् ॥ १४
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम् ।
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः ॥ १५
संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम ।
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥ १६
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता ॥१७
धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि ।
पूर्वेषां राक्षसेन्द्राणां सर्वेषामयशस्करि ॥ १८ C. 1. 5079 B. 1. 153. 18 K. 1. 160. 20

D5 M शक्तः; T2 G2.6 मम (for युधि). M5 परं हंतुं. — d) T G (G3 om.) मवाक्ताः (for अथवा).

9 G3 om. 9 (cf. v. l. 3). — a) Ñ1 विवृत्तौ. — b) K0 Ñ1.3 °निभावुभौ; K3 °हस्तोपमाविमौ; S (except T1; G3 om.) °हस्तोपमौ शुभौ (G3 शुभे; G4 भुजौ). — c) Ñ3 संघातं. K1.3 Ñ V1 B D (except D5) T1 M महद् (for मम).

10 G3 om. 10 (cf. v. l. 3). — a) D5 G1.3 M महेंद्रस्य. — b) K3 D1 साक्षाद्; S (except T1; G3 om.) यथा (for साद्य). — d) Ñ3 °ह मानवं.

11 G3 om. 11 (cf. v. l. 3). K0.1.3 हिडिंबा; T2 S (G3 om.) M हिडिंबी (M5 राक्षसी); K4 T1 om. the ref. — a) G3 नरश्रेष्ठ. — b) K3 मत्वा त्वां देव°. — c) K0 दृष्टा युधानस्तु; K3 B3m D1.6 दृष्ट्वावदानस्त् (B3m °नास्त्; D1 °नस्; D5 °नं) तु; K3 दृष्ट्वावदानास्तु; K4 V1 B1m.4.6 Dn D2.4 दृष्टप्रभाव(B4.6 °वा)स्तु; Ñ B1.3 दृष्टा(Ñ3 °ष्ट्वा)व-दानं (B1.3 °नस्) तु; Da S (G3 om.) °प(Da T2 °व)दानास्तु. — d) K3 अथ; K4 B3m Da D1 T G (G3 om.) इह (for एव). K3 B5.6 Da S (G3 om.) राक्षसाः. K0 राक्षसश्चैव मानवाः.

12 G3 om. 12 (cf. v. l. 3). Ś1 K1 D2 S om. उवाच (G3 om. the ref.). — a) Ñ3 D2.5 T2 G1.4-6 M तथा. Ñ3 संजल्पमानस्य. — c) G1.2.4 M2 वचः. T2 G (G3 om.) श्रुत्वा ततः; M1 श्रुत्वाभ्ययात्; M3-5 श्रुत्वा च (M5 तु) ताः. K4 तद् (for ताः). Ś1 K0.2.3 Ñ1 क्षुब्धो; K4 रक्षो (for क्रुद्धो). — d) G1 पुरुषाकृतिः.

13 G3 om. 13 (cf. v. l. 3); G6 om. 13c-15b. — a) K0 D5 निरीक्षमाणस्. K3 M5 तस्यास्तु; K4 D5 तस्यास्तु. — K0 om. 13c-15a. — c) D5 M °शिखां; T2 G1.2.4 °भूषित(G5 °पण)शिखां. — d) K4 संपूर्णेंदु°; D5 °शुभाननां; S (except T1; G3.6 om.) °निभाननां.

14 K0 G3.6 om. 14 (cf. v. l. 3, 13). — a) D5 T2 G1.2.4.5 M4.5.8 °केशांतां. — c) K1 °पूर्णं; K3 °पन्नं; S (except T1; G3.6 om.) °युक्तां. — d) Ś1 K1 Ñ1 सुसूक्ष्मोत्तर°; K2-4 B5 D5 °क्ष्मोत्तर°; Ñ3 सुसूक्ष्मं तनु°; S (except T1; G3.6 om.) °धारिणीं.

15 G3 om. 15; G6 om. 15ab; K0 om. 15a (cf. v. l. 3, 13). — a) S (except T1; G3.6 om.) भगिनीं (for तां तथा). Ñ3 °पं कल्पं. — b) T2 G1.2.5 M5-8 °हरां; M1 °रमां. — After 15ab, S (except T1 G3.6) ins.:

1530* स ददर्शाग्रतस्तस्य भीमस्य पुरुषादकः ।

— d) G1 चुक्रोश; G6 °कोप. S (except T1; G3 om.) स निशाचरः.

16 G3 om. 16 (cf. v. l. 3). — a) T2 G4.5 M5 तत्र; G2 M5 तस्य; M6-8 तं च (for तस्या). — b) T2 G4.5 M तां (M6-8 तान्) दृष्ट्वा; (for भगि°). Ś1 भरतर्षभ; K2.3 पुरुषादकः (for कुरु°). — c) S (G3 om.) विस्फार्य; Cd उत्फाल्य (as in text). K3 विकटे ने°. — d) K0 D5 M भगिनीं; Ñ3 ततस्तान्; G1.2 हिडिंबां (G3 °बीं).

17 Cf. v. l. 3 and 1527*. — G3 om. 17 (cf. v. l. 3). Before 17, M3.6-8 ins. हिडिंबः. — a) T1 G1.2.6 M3 कस्मान्मे. — b) T1 G1.2 M दुर्मते. K0.4 विघ्नं कर्तुमिहेच्छति. — c) T2 G2.4.5 हिडिंबि. K3 T2 G4.5 त्वं; M मां (for किं). — d) T G4-6 कामाद्वै; G1.2 केन

यानिमानाश्रिताकार्षीरप्रियं सुमहन्मम ।
एष तानद्य वै सर्वान्हनिष्यामि त्वया सह ॥ १९
एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनां दन्तैर्दन्तानुपस्पृशन् ॥ २०
तमापतन्तं संप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् ॥ २१

इति श्रीमहाभारते आदिपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

## १४१

वैशंपायन उवाच ।
भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति संक्रुद्धमिदं वचनमब्रवीत् ॥ १
किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।
मामासाद्य दुर्बुद्धे तरसा त्वं नराशन ॥ २
मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ३
न हीयं स्ववशा बाला कामयत्यद्य मामिह ।
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ।
भगिनी तव दुर्बुद्धे राक्षसानां यशोहर ॥ ४
त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ।
कामयत्यद्य मां भीरुर्नैषा दूषयते कुलम् ॥ ५

---

त्वं; M मत्क्रोधाद्.

18 G3 om. 18 (cf. v. l. 3). — a) S (except T1; G3 om.) धिक्त्वां पुरुषकामां वै. — b) B (G3 om.) कारिणीं (T1 °णी). — c) S (except T1; G3 om.) कुलस्य. — d) K4 अयशस्विनि; S (except T1; G3 om.) °स्करीं.

19 G3 om. 19 (cf. v. l. 3). — a) B1 आश्रिता-स्कार्षीर्. M यानिहाश्रित्य कार्षीस्त्वं. — b) Ñ3 V1 B D (except D4) T1 G4 विप्रियं. K0 सुमहद्विप्रियं मम; M विप्रियाणि मर्मांतिके. — cd) T2 G (G3 om.) एष तानाशु सर्वांस्तु. Ñ3 सह त्वया (by transp.). D3 एतानद्य हनिष्यामि भर्त्सनेन त्वया सह.

20 G3 om. 20 (cf. v. l. 3). Before 20, S (except T1 G1 M4) ins. वैशं°. — a) T2 G (G3 om.) तां (for स). — b) K3 लोहिताशनः; M4 राक्षसेश्वरः. — c) Ś1 अनु; G1 हि; M6-8 एव (for अभि°). — d) T2 G4-6 दंतान्दंतेषु निष्पि(T2 °ष्कु; G4 °ष्टु; G6 °ष्क)षन्; G1.2 दंतान्दंतेन निष्कषन्; M3 दंतान्दंतैरनुस्पृशन्. — G3 resumes. — T G ins. after 20 (G3, after 2):

1631* गर्जन्तमेवं विजने भीमसेनोऽभिवीक्ष्य तम् ।
रक्षन्प्रबोधं भ्रातॄणां मातुश्च परवीरहा ।

21 a) T2 G आपतंतं च (T2 तु) संप्रेक्ष्य (G3 °तंतं समुद्वीक्ष्य). — d) G3 चाब्रुवन्.

Colophon om. in V1 B1.2.6 Da Dn D1.2.3 T1. — *Major parvan*: T2 G M संभव° (for आदि°). — *Sub-parvan*: Ś1 K0-3 Ñ B3 D5 M8 हिडिंबवध. — *Adhy. name*: K4 हिडिंबकोपः. — *Adhy. no.* (figures, words or both): T2 G3.6 M 99; G1.2 100; G3.4 98. — *Śloka no.*: M8 22.

### 141

1 Ś1 K1.2 D2.4 S (except T2 G6!) om. उवाच. — a) G1.2 स (G2 तं) भीमसेनस्तं दृष्ट्वा. — c) K3 °ति संरब्धाम्. — b) Ś1 Before 2, M (except M8) ins. भीमः.

2 a) Ś1 K0-3 Ñ3 B ह्येतैर्वा; K4 तैः सर्वैः; G6 एतत्त्वं (for एतैर्वा). T G3.5.6 किं ते प्रियं हिडिंबैतैः; G1.2 Da किं ते हिडिंबयैतैर्वा; D4 कि ते हिडिंबैतैः. — b) T G निबोधितैः. — c) T2 G किं कार्यं ते हिडिंबैतैः. — d) Ñ3 राक्षसानां यशोहर (=4f); मामादाय सुदुर्बुद्धे. B3m तव नैषापराध्यति (cf. v. l. 5).

3 a) K3 प्रहरेह त्वं; D3 प्रहर त्वं वै; M6-8 प्रहरैहि त्वं. — b)-6d. — G1 (hapl.) om. T2 G राक्षस त्वमिमां चैव. — B 3c-6d. — c) Ś1 -नपेक्षाते; K0 नापकृतां; K3.4 -नपकृतां; B (except B1) D3 T2 G3.4.5 M नापकृते.

4 G3 om. 4 (cf. v. l. 3). — b) Ñ3 एव (for अद्य). Ś1 अपि (for इह). T2 G4.5 मां तु कामयतेव वै; G1.2 मयि कामातुराभवत्. — c) K0.2 नोदितैषा; G1.2 संप्रेषिता. — d) G1.2 सर्वप्राणिषु चारिणा. — ef) Ñ V1 B D T2 दुर्वृत्त (D1 दुष्टेयं; D3 as in text). रक्षसां वै यशो°.

5 G3 om. 5 (cf. v. l. 3). — a) Ś1 Da Cd मन्नियोगेन. K4 B चैवैषा; T2 G (G3 om.) चायाता. — c) K3 भीरुः — b) Ñ1 निरीक्षते; G1.2 M निरीक्ष्य च. — c) M कामयते माद्य; T2 G (G3 om.) कामयत्येषमयशा; M

अनङ्गेन कृते दोषे नेमां त्वमिह राक्षस ।
मयि तिष्ठति दुष्टात्मन् स्त्रियं हन्तुमर्हसि ॥ ६
समागच्छ मया सार्धमेकेनैको नराशन ।
अहमेव नयिष्यामि त्वामद्य यमसादनम् ॥ ७
अद्य ते तलनिष्पिष्टं शिरो राक्षस दीर्यताम् ।
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः ॥ ८
अद्य गात्राणि क्रव्यादाः श्येना गोमायवश्च ते ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥ ९
क्षणेनाद्य करिष्येऽहमिदं वनमकण्टकम् ।
पुरस्ताद्दूषितं नित्यं त्वया भक्षयता नरान् ॥ १०
अद्य त्वां भगिनी पाप कृष्यमाणं मया भुवि ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ॥ ११
निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ १२

हिडिम्ब उवाच ।

गर्जितेन वृथा किं ते कत्थितेन च मानुष ।
कृत्वैतत्कर्मणा सर्वं कत्थेथा मा चिरं कृथाः ॥ १३
बलिनं मन्यसे यच्च आत्मानमपराक्रमम् ।
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम् ॥ १४
न तावदेतान्हिंसिष्ये स्वपन्त्वेते यथासुखम् । C 1 5007 B 1 152. 19 K 1 155. 23

---

कामयत्यवशा भीरु — $^{d}$) V1 B6 D (except D5) T1 तव (D4 तुभ्य) नैषापराध्यति (cf v l 2)

6 G3 om 6 (cf v l 3) — $^{a}$) K0 4 N1 कृतो दोषो — $^{b}$) K0 न मा, Ñ2 B1 नैना K4 Ñ3 V1 B D (except D5) T1 गर्हितुमर्हसि (for त्वमिह रा°) — After $6^{ab}$, G1, 2 ins

1532* हन्तुमर्हसि दुर्बुद्धे शूरश्चेत्संहर स्मरम् ।

— D4 om $6^{cd}$ — $^{d}$) = $3^{b}$ Ś1 K3 त्व स्त्रिय, N1 3 स्त्रिय वै (for न स्त्रिय) G1 2 यदि मा हन्तुमिच्छसि — After 6, G1 2 ins

1533* मदर्थं कामबाणार्तां त्वामहं हन्मि राक्षस ।

7 $^{a}$) Ñ2 V1 B D (except D5) T1 G3 2 समागच्छस्व मया Ś1 K1 साकं (for सार्धं) — $^{c}$) V1 Dn अहमेको Ś1 D1 हनिष्यामि, K1 3 Ñ1 B5 D4 M हि नेष्यामि, D5 Nil (comm) गमिष्यामि, T2 G3-6 तु नेष्यामि, Dn (erroneously) Nilp = in text G1 2 एकोऽहमेव नेष्यामि

8 $^{a}$) Ñ2 V1 B D (except D5) T1 अद्य मत्तलनि°, G3 तत्ते तलविनि° — $^{b}$) M3 5 दीर्यते, M6-8 दीर्यते G1 2 शिरस्ते राक्षसाधम — After $8^{ab}$, G1 2 ins

1534* दृढधा भेदमायाति पूर्णकुम्भ इवाश्मनि ।

— $^{cd}$) G6 om $8^{cd}$ S (except T1, G6 om) °स्यैव निष्पिष्टं सिंहेनेव (T2 °नाति, G4 5 M3, 5 °न हि) बलीयसा

9 $^{a}$) K0 D4 गृध्राद्या, Ñ1 चक्रागा ; Ñ2 3m V1 B D (except D5) T1 ते कङ्का, Ñ3 वक्त्रागा, T2 G M गृध्राश्च (for क्रव्यादा) K1 क्रव्यादा अद्य गात्राणि — $^{b}$) D5 गात्रो, S वक्त्रा (M5 व्याला, T1 श्येना as in text) Ś1 K Ñ3 च ते (as in text), D5 च ये, the rest तथा — $^{c}$) G3 भक्षन्तु K2 तव (for भुवि) Ñ1 3 समहृष्टास्ते Ñ3 °ष्टा वै), N2 B1 3 5 भृशसंहृष्टा, B5 Da D2 4 सुभृशं हृष्टा (for भुवि संहृष्टा) K0 कर्षयन्तु सुसंहृष्टा — $^{d}$) Ś1 B3 महामृधे, G3 मया रणे, G6 मया वने

10 $^{a}$) S (except T1 G2) करिष्यामि — $^{b}$) Ñ2 V1 B D (except D5) T1 वनमराक्षसं T2 G M वनं निहत कण्टक — $^{c}$) Ñ2 V1 B D (except D5) T1 पुरा यद्दूषित॰ K3 नूनं, M6-8 तस्य

11 $^{a}$) K1 D5 T2 G M पाप, Ñ2 V1 B Da Dn D1 2 4 T1 रक्ष — $^{b}$) Ñ2 V1 B D (except D5) T1 मयासकृत् — $^{c}$) Ś1 K0 4 Ñ3 D5 द्रक्ष्यते° — $^{d}$) K1 महागज

12 M om 12 — $^{a}$) T2 G (except G6) निराबाध — $^{b}$) Ñ2 °पांसुल — $^{c}$) K0 वनमेते, K4 सुखमेतच्

13 K0 3 राक्षस उ°, T1 G1 2 M5 हिडिंब, T2 G3-6 M3 6-8 राक्षस — K1 om $13^{a}$–$14^{b}$ — $^{a}$) G1 2 गर्जनेन T2 G भृशं किं ते — $^{b}$) G1 2 6 M5 3 कत्थनेन, Cd as in text T2 G मानव — After $13^{ab}$, M3 ins

1535* शारदस्येव मेघस्य गर्जितं निष्फलं हि ते ।

— $^{c}$) Ñ1 त्वत्कृते कर्मणा Ś1 K0 2 4 D5 पूर्वं, D2 सार्धं (for सर्वं) — $^{d}$) Ñ2 B6 D1 कत्थ मा, M कत्थयता (for कत्थे°) G1 2 वृथा (for कृथा) K0 D5 कथय त्वं नराधिप (D5 °धम)

14 K1 om $14^{ab}$ (cf v l 13), B6 om $14^{a}$–$17^{b}$ — $^{a}$) K2 Ñ1 यत्त्वम्, D5 S यस्माद् (G3 यन्माम्, T1 यच्च as in text) — $^{b}$) Ś1 K0 2 Ñ2 3 V1 B3 Dn D1 T1 ins अपि between the two halves of the line (to avoid the hiatus) Ś1 च पराक्रम, K0 त्वं न मात्मसुहृ, K2 D2 स्वपराक्रमात् (D2 °क्रम), K4 Ñ V1 B3 Dn D2 4 सपरा°, B1 5 Da सुपरा°, M3 अपराजित G2 आत्मनस्तु पराक्रम — $^{c}$) T2 G (except G3) ज्ञास्यसे K3 त्वं (for अद्य) D5 समागत्य, T2 G मयागम्य (G1 2 °त्य) — $^{d}$) T2 G बलहीन ततो भुवि

15 B6 om 15 (cf v l 14) — $^{a}$) M6 3 पुनरन्

7 35 39 एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवदम् ॥ १५
पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि ।
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीम् ॥ १६

वैशंपायन उवाच ।

एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः ।
अभ्यधावत संक्रुद्धो भीमसेनमरिंदमम् ॥ १७
तस्याभिपततस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रहृतं बाहुं निजग्राह हसन्निव ॥ १८
निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥ १९
ततः स राक्षसः क्रुद्धः पाण्डवेन बलाद्धृतः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवम् ॥ २०
पुनर्भीमो बलादेनं विचकर्ष महाबलः ।
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति ॥ २१
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा ।
राक्षसो भीमसेनश्च विक्रमं चक्रतुः परम् ॥ २२

---

T2 G नेमांस्तावद्धनि(T2 G3.6 °हुधि)ष्यामि. — b) K1.4 B6 D2 स्वपंते ते. — c) D5 दुर्बुद्धि. G1.3 हत्वा त्वां प्रथमं हन्मि. — G1.3 om. 15d–16a. — d) K0 निहन्म्यास· प्रियंवदं; T2 G3–6 हनिष्येप्रियवादिनं.

16 B6 om. 16 (cf. v. l. 14); G1.3 om. 16a. — b) Ñ3 तथा; D5 च्युतं; T2 G3–6 पुनः (for ततः). Ś1 अमूनपि. G1.3 पश्चात्सुतानिमानपि (G3 °स्र). — c) K0 D5 T2 G3–6 M ततः क्षुद्राम्; B1 ततः पापाम्. G1.3 तत्पश्चात्कामिनीमेनां. — d) K0 एनां (for इमां). Ś0.3 M चाप्रियक°. G1.3 हिडिंबीं त्वयि कौतुकां.

17 B6 om. 17ab (cf. v. l. 14). Ś1 K1.3 D5 om. उवाच; B (except B1) Da D2.4 G3 om. the ref. — a) K0.3.4 ततो बाहू; Ñ2 B (B6 om.) Da D2.4 T2 G3–6 महाबाहुं (T2 G3–6 °हुः). G1.3 इत्युक्त्वाभ्यद्रवद्भीमं. — b) K3 प्रस्फोट्य; Ñ1 निगृह्य; T2 G3–6 संनदः. G1.3 संक्रुद्धो भैरवं नदन्. — c) Ñ3 V1 B D (except D5) T1 अभ्यद्रवत (D1 °त्स) सं°; T2 G3–6 °धावत्सुसं°; G1.3 विवृत्तास्यो विवृत्ताक्षो. — d) G1.3 भुजमुद्यम्य वेगवान्.

18 a) Ñ3 V1 B D (except D5) T1 अभिद्रवतस्. — c) K (except K1) Ñ3 V1 B D (except D5) T1 M3 प्रहितं; Ñ1 T2 G प्रसृ°. — d) T2 G3–6 प्रसन्निव.

19 a) Ś1 K1.3 D5 प्रगृह्य; G3 प्रहृत्य. G3 पुनं (for तं). D1 निगृह्य पुरुषव्याघ्रो. — d) K3 क्रुद्धो मृगं.

20 a) T2 G तथा (G1 °दा). — b) K1 D1 बलार्दितः; Ñ1 V1 B Da Dn D2.4 T1 बलार्दितः; G1.3 बलीयसा. — c) K1 समागम्य; K3 °श्लिष्य (cf. v. l. 22). — G1 (hapl.) om. 20d–22a. — d) G6 भैरवस्वनं.

21 G1 om. 21 (cf. v. l. 20). Before 21, M (except M1) ins. वैशं°. — b) Ñ3 महाबलं. — d) B (except B1) Da D2.4 समभूदिति. — After 21, T1 G1.3 ins.:

1536* हस्ते गृहीत्वा तद्रक्षो दूरमभ्यप्य भीतवान् ।
पुच्छे गृहीत्वा तुण्डेन गरुडः पन्नगं यथा ।

22 G1 om. 22a (cf. v. l. 20). — a) S (except T1 G3; G1 om.) वै (for तौ). K0 S (except T1; G1 om.) समालिंग्य; K3 °श्लिष्य (cf. v. l. 20). — c) K0.3.4 V1 Dn D1.4 T1 M3 हिडिबो भीम°. — d) S (except T1) भृशं (for परम्). — After 22, G3 ins. 1538* (cf. v. l. 23). — G1.3 (both om. 23ab).4 (om. 23) ins. after 22: T1 (om. line 1), after line 1 of 1538*:

1537* भङ्क्त्वा वृक्षान्महाशाखांस्ताडयामासतुः क्रुधा ।
सालसालतमालाम्रवटार्जुनविभीतकान् ।
न्यग्रोधप्लक्षखर्जूरपनसानश्मकण्टकान् ।
एतानन्यान्महावृक्षानुत्खाय सरसाक्षिकान् ।
उत्क्षिप्यान्योन्यरोषेण ताडयामासतू रणे ।
तदाभवद्वनं सर्वं निर्वृक्षं वृक्षसंकुलम् ।
तदा शिलाश्च कुञ्जांश्च वृक्षान्कण्टकिनस्तथा ।
ततस्तौ गिरिशृङ्गाणि पर्वतांश्चाभ्रलेलिहान् ।
शैलांश्च गण्डपाषाणानुत्खायादाय वैरिणौ ।
चिक्षेपतुरुपर्याशावन्योन्यं विजयैषिणौ ।
तद्वनं परितः पञ्च योजनं निर्महीरुहम् ।
निर्लतागुल्मपाषाणं निर्मृगं चक्रतुर्भृशम् ।
तयोर्युद्धेन राजेन्द्र तद्वनं भीमरक्षसोः ।
मुहूर्तेनाभवत्कूर्मपृष्ठवच्छ्लक्ष्णमश्मवम् ।

[(L. 3) T1 °पनसानश्वकर्णकान्. — (L. 9) T1 शिलाश्च शंद°. — (L. 10) T1 अन्योन्यमरणैषिणौ. — (L. 13) T1 °पाषाणपर्वतं. — (L. 14) T1 अमर्णं (for अश्मवम्).]

23 G1.3 om. 23ab; G2.4 om. 23. — a) K1 महावृक्षं; Ñ1 V1 B D (except D5) T1 G3 M3 तदा वृक्षान्. — b) K0.3–4 शिलाः (for लताः). K0 om. च. K0.3–4 Ñ2.3 V1 B1 Dn D1.4 T1 तदा; Ñ1 तथा (for ततः). Ś1 K1 शिलाश्चैव चकर्षतुः; T2 G3.6 M1.4 लताश्च विचकर्षतुः; M5–8 लताश्चापि चकर्षतुः. — c) V1 De D4 Da D1 T1 च (for सु-). Ñ3 S (except T1; G2.4 om.) च (G1.3 M3

बभञ्जतुर्महावृक्षाँल्लताश्चाकर्षतुस्ततः ।
मत्ताविव सुसंरब्धौ वारणौ षष्टिहायनौ ॥ २३

तयोः शब्देन महता विबुद्धास्ते नरर्षभाः ।
सह मात्रा तु ददृशुर्हिडिम्बामग्रतः स्थिताम् ॥ २४

इति श्रीमहाभारते आदिपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## १४२

वैशंपायन उवाच ।
प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषम् ।
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥ १
ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः ॥ २
कस्य त्वं सुरगर्भाभे का चासि वरवर्णिनि ।
केन कार्येण सुश्रोणि कुतश्चागमनं तव ॥ ३
यदि वास्य वनस्यासि देवता यदि वाप्सराः ।
आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ॥ ४
हिडिम्बोवाच ।
यदेतत्पश्यसि वनं नीलमेघनिभं महत् ।
निवासो राक्षसस्यैतद्धिडिम्बस्य ममैव च ॥ ५ G. 1. 5011 B. 1. 154. 5 K. 1. 160. 5

सु-) संक्रुद्धौ. — d) Ko T2 G (G3.4 om.) मातंगौ (for वारणौ). T2 G1.3 M (except M8) षाष्टि°. — T G1.2.4.5 (om. lines 8–12).6 ins. after 23: G3 (om. lines 1, 11, 12), after 22:

1538* पादपानुद्धरन्तौ तावूरुवेगेन वेगितौ ।
स्फोटयन्तौ लताजालान्यूरुभ्यां गृह्य सर्वशः ।
वित्रासयन्तौ तौ शब्दैः सर्वतो मृगपक्षिणः ।
बलेन बलिनौ मत्तावन्योन्यवधकाङ्क्षिणौ ।
भीमराक्षसयोर्युद्धं तदावर्तत दारुणम् ।
ऊरुबाहुपरिक्लेशात्कर्षन्तावितरेतरम् ।
उत्कर्षन्तौ विकर्षन्तौ प्रकर्षन्तौ परस्परम् ।
ततः शब्देन महता गर्जन्तौ तौ परस्परम् ।
पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः ।
अन्योन्यं तौ समालिङ्ग्य विकर्षन्तौ परस्परम् ।
बाहुयुद्धमभूद्घोरं बलिवासवयोरिव ।
युद्धसंरम्भनिर्गच्छत्फूत्काररवनिस्वनम् ।

[(L. 5) T1 तदा तु दारुणं युद्धं चक्रतुर्भीमराक्षसौ. — After line 5, G1.2.4 ins.:

1539* पुरा देवासुरे युद्धे वृत्रवासवयोरिव ।

— (L. 7) Cf. 1. 142. 12ab. T G3–6 उत्कर्षणं विकर्षणमपकर्षणमेव च. — (L. 8) Cf. 1. 142. 12cd. G1.2 तौ शब्देन विना राजन् (for the prior half). — (L. 9) G1.2 °संघट्टनिभैः. — (L. 12) T2 G4.6 °फूत्काराराव°.]

24 a) Dn3 M3.4 प्रबुद्धास्- G1.2 पांडुसंभवाः (for ते नर°). — c) K2.3 Ñ1 V1 B D T1 च; Ñ2 हि; Ñ3 T2 G अथ (for तु). M सह मात्रा ददृशिरे. — d) G1–3 हिडिंबीं. Ñ3 तु स्थितामिति; T1 समचेष्टितां; G1.2 पुरतः स्थितां.

Colophon om. in Ñ2 D1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0–3 Ñ1.2 V1 B1.3.4 Da Dn D3.4 T1 M6 6–8 हिडिंबवध. — *Adhy. name:* K4 D5 भीमसेनहिडिंबयोर् (D5 °डिंब) युद्धं. — *Adhy. no.* (figures, words or both): B1 T1 149; Dn3 152; D4m 155; T2 G3.6 M 100; G1.2 101; G3.4 99. — *S'loka no.:* Dn 45; M3 25. — *Aggregate s'loka no.* Dn3 5994.

## 142

1 Ś1 K3.4 D4 S om. उवाच; D1 om. the ref. — a) K1 विबुद्धास्ते. — b) T2 G रूपमालोक्य शोभनं. — c) G1.2 °ता रूपसंपदया (cf. 2b).

2 a) G3 समेत्य (for समीक्ष्य). — d) K2.3 D5 G2 वचः; K4 यथा (for शनैः).

3 Before 3, K0 D5 ins. कुंती उ°; K3.4 D4 (marg. sec. m.) कुंत्युवाच; M (except M8) कुंती. — b) K0.2 Ñ1.2 V1 B Dn D2 G1 M8 वा (for च). — c) Ñ3 V1 B D (except D5) T1 संप्राप्ता; G3 सुभगे (for सुश्रो°).

4 a) Ś1 K2 चास्य; K0 M6.7 चापि; K1 Ñ1 T2 G (except G2) M3 चासि; K4 N2.3 M8 चासि; M8 नापि. Ś1 K1–4 V1 Dn D1 T1 °स्य त्वं; K0 Ñ D5 T2 G M °स्यास्य (G3 °च). — b) A few MSS °प्सरा. — c) M भद्रे (for मम). — d) K0.2 om. च.

5 K1.3 Ñ3 S om. उवाच. — b) G1.2 °मेघसमप्रभं. — c) K0.4 Ñ3 D5 M इह; K1–3 Ñ1.2 V1 B Da3 Dn2, n3 D1.2.4 T1 एष; Da1 Dn1 एव; G4 इति (for एतद्). — d)

तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि ।
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसता ॥ ६
क्रूरबुद्धेरहं तस्य वचनादागता इह ।
अद्राक्षं हेमवर्णाभं तव पुत्रं महौजसम् ॥ ७
ततोऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रस्य मन्मथेन वशानुगा ॥ ८
ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं च यतितो न चैव शकितो मया ॥ ९
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः ।
स्वयमेवागतो हन्तुमिमान्सर्वांस्तवात्मजान् ॥ १०
स तेन मम कान्तेन तव पुत्रेण धीमता ।
बलादितो विनिष्पिष्य व्यपकृष्टो महात्मना ॥ ११
विकर्षन्तौ महावेगौ गर्जमानौ परस्परम् ।
पश्यध्वं युधि विक्रान्तावेतौ तौ नरराक्षसौ ॥ १२

वैशंपायन उवाच ।

तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥ १३
तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम् ।
काङ्क्षमाणौ जयं चैव सिंहाविव रणोत्कटौ ॥ १४
तावन्योन्यं समाश्लिष्य विकर्षन्तौ परस्परम् ।
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥ १५
वसुधारेणुसंवीतौ वसुधाधरसंनिभौ ।

---

Ko.2.3 अपि (for एव). G1.2 नृभोजिनः (for ममैव च).

6 b) Ñ2 V1 B Da Dn1.n3 D1.2 भाविनि. — d) K3 D4 transp. त्वां and सपुत्रां. Ñ2.3 V1 B D जिघांसितुं (D3 °सया).

7 a) K3 क्रुद्धबुद्धेर्. — b) Ś1 K Ñ1 V1 B3.6 Dn D1.2 T1 °ता त्विह; Ñ2 B1.3 Da D3.4 °तास्मि ह. — D2 om. 7c–9b. — c) Ś1 K3.4 हेमगर्भाभं; Ñ1 मेघ°; Ñ3 V1 B Da Dn D1.4 T1 नवहेमाभं; D5 अब्जगर्भाभं. — d) K2 Ñ1 T2 G M वृकोदरं; Ñ2 V1 B D (D3 om.) T1 महाबलं (D5 °लः).

8 D2 om. 8 (cf. v. l. 7). — a) Ko.2.4 D5 नोदिता; K3 देशिता. S पुत्रार्थं. — d) M3.5.7 मन्मथस्य; M6.8 °नस्य. B3 वशीकृता; M5 शरानुगा.

9 D2 om. 9ab (cf. v. l. 7). — a) Ñ2 transp. वृतो and मया. — b) K3 वृकोदरः; T2 G स्वनिर्दिते. — c) M5 अनुनेतुं; Cd as in text. S व्यवसितो (for च य°). — d) Ś1 एनं; K (except K3) S (except M3.5) एवं (for एव). K4 D1 T G M6–8 शंकितो (T1 शक्यते); M3.5 कथितो.

10 a) T2 G अयं (for स). — Ko om. 10c–11b. — d) Ś1 K1 तदा; M5 तथा (for तव).

11 Ko om. 11ab (cf. v. l. 10). — ab) S (except T1) transp. मम कान्तेन and तव पुत्रेण. — c) K3 Da1 बलार्दितो. Ko विनिष्क्रम्य; K3.4 Ñ1 D5 M3.5 °ष्कृष्य. — d) Ś1 K (except K3) V1 Dn D1.2 व्यपनीतो.

12 M5 om. 12c–14b. — c) G1.2 व्याकर्ष°. B3 महात्मानौ. — b) T2 G (except G3) गर्जंतौ च. K3 यथा घनौ. — c) Ko Ñ1.2 M (M5 om.) पश्यस्व; K1.2.4 Ñ3 B (except B4) Da D5 T2 G (except G3) पश्य त्वं; V1 Dn पश्यैवं; T1 पश्य तौ. — d) Ko.2 T2 G M (M5 om.) transp. एतौ and तौ. K3 तु; Ñ1.2 V1 B D (except D5) च (for तौ). — After 12, Ko ins.:

1540* युध्यन्तौ विजयाकाङ्क्षी राक्षसो मन्दबुद्धिमान् ।
न वाञ्छे(ऽहं) जीवितं भ्रातुः कदा मे दुष्कर्मणः ।

13 M5 om. 13 (cf. v. l. 12). Ś1 K1.2 D3.5 T G M5 om. उवाच; M6–7 om. the ref. — a) T2 G तस्यास्तद्वचनं श्रुत्वा.

14 M5 om. 14ab (cf. v. l. 12). — a) Ś1 K3 T1 G1.3–6 ते तौ (by transp.); G3 M3.5 ततो. Ś1 Ko–2 B1m.3m Da1m D5 Cd Arjp °रायत्तौ; Ñ2 °रासक्तो. — b)–15b. Ñ1 गर्जमानौ (for विक°). — K1 (hapl.) om. 14c–15b. — c) K3.4 D5 युद्धे (for चैव). G1.2 विजयं कांक्षमाणौ च. — d) M मत्तौ (for सिंहौ). Ko.2 K3 Ñ V1 B Da Dn D1.2.4 T1 बलो°; D5 G3 मदोत्कटौ; M महागजौ.

15 K1 om. 15ab (cf. v. l. 14). — a) K3 Ñ3 V1 B D (except D5) T1 अथ (for तौ). Ś1 K3.4 D5 समासाद्य; Ko Ñ1.2 M6–8 °लिष्य (cf. v. l. 1. 141. 20, 22). — b)–14b. T2 G1.4.5 निष्पिषंतौ; G2.3.6 निष्पतंतौ. Ko D5 महाबलौ; Ñ V1 B Da Dn D1.2.4 T1 पुनः पुनः. — c) T2 G3 M3.5 दवा°; G1.2 °संकाशं.

16 a) M5 पांसुधारेण सं°. — Ko om. 16bcd. — b) D5 वसुधासवसं°. — c) Ś1 व्यभ्रा°; K3 Ñ V1 B Da Dn1.n3 D1 T1 D1.2 M बभ्राजतुर; K4 भ्राजेतां तौ; D5 विभ्राजतौ; T2 G विभ्राजेते. K3 द्युतौ (for विभ्राजतुः; D5 विभ्राजंतौ; T2 G विभ्राजेते. K3 दृष्टौ (for शैलौ). — d) Ñ2 °रेचिव सं°. — After 16, T G ins.:

विभ्राजेतां यथा शैलौ नीहारेणाभिसंवृतौ ॥ १६
राक्षसेन तथा भीमं क्लिश्यमानं निरीक्ष्य तु ।
उवाचेदं वचः पार्थः प्रहसञ्शनकैरिव ॥ १७
भीम मा भैर्महाबाहो न त्वां बुध्यामहे वयम् ।
समेतं भीमरूपेण प्रसुप्ताः श्रमकर्शिताः ॥ १८
साहाय्येऽस्मि स्थितः पार्थ योधयिष्यामि राक्षसम् ।
नकुलः सहदेवश्च मातरं गोपयिष्यतः ॥ १९

भीम उवाच ।

उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः ॥ २०

अर्जुन उवाच ।

किमनेन चिरं भीम जीवता पापरक्षसा ।
गन्तव्यं न चिरं स्थातुमिह शक्यमरिंदम ॥ २१
पुरा संरज्यते प्राची पुरा संध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्ति च ॥ २२
त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥ २३

वैशंपायन उवाच ।

अर्जुनेनैवमुक्तस्तु भीमो भीमस्य रक्षसः ।
उत्क्षिप्याभ्रामयद्देहं तूर्णं गुणशताधिकम् ॥ २४ C. 1. 6031 S. 1. 154. 25 K. 1. 166. 11

---

1541* ते पश्यन्तो महद्युद्धं सर्वे व्यथितचेतसः ।
[ G1.2 transp. ते and पश्यंतः. ]

17 a) K1 ततो; K4 Ñ1.2 V1 Dn D1 M3 तदा; T2 G यथाद्. — b) K4 कृष्यमाणौ; T2 क्लिष्य°; G3 पीड्य°. K0.3 समीक्ष्य. V1 B Dn D1 T G च; D2 ह; M तं (for तु). — After 17ab, T G ins.:

1542* चिरमयुद्धौ तौ दृष्ट्वा त्वयोन्यवधकाङ्क्षया ।
[ G1 चिरयुद्धौ कृतौ दृ°; G3 °द्धौ दृष्ट्वा च. T1 G2.4 च (for तु). G6 om. तु. G1.2 °कांक्षिणौ. ]

— c) B (B1 marg.) Da D2 ततः (for वचः). K2 उवाच वचनं पा°. — d) K1 तदा (for इव). T2 G प्रहसन्निव भारत.

18 Before 18, D4 (marg. sec. m.) ins. अर्जुन उ°; G1 M अर्जुनः. — a) Ñ3 transp. भीम and मा भैर्. G1.2 M भीम (for मा भैर्). — c) Some MSS. त्वा (for त्वां). — d) Ñ3 V1 B D (except D5) T1 रक्षसा (for प्रसु°). Ś1 K2.4 Ñ V1 B Da Dn1.n2 D1 °कर्षिताः (B3.6 °तं); K1 °कल्पिताः; D4 °कर्शितं; G2 °निर्जिताः.

19 a) K0 T1 M3 सहाये; K1.2.4 T2 G (except G4) सहायो. G (except G1.3) पार्श्वे (for पार्थ). — b) Ñ2 V1 B D (except D5) T1 पातयि°; G1.3 यो वधिष्या°. — c) M धर्मौ च राजा कौंतेयो. — d) Ś1 पालयिष्य°.

20 K1 S om. उवाच. Ś1 Da1 भीमसेनः (for भीम उ°). — d) T2 G मद्भुजांतरम्. M आश्रितः (for आग°). K0 Da D5 मम बाह्वंतरे स्थितः (Da °तरं गतः). — After 20, T G (T2 G2.4.6 om. lines 1–2) ins.:

1543* भुजयोरन्तरं प्राप्तो भीमसेनस्य राक्षसः ।
असुबत्वा पार्थ वीर्येण मृतो मा भूदिति ध्वनिः ।
अयमस्मान्न नो हन्याज्जातु वै पार्थ राक्षसः ।
जीवन्तं न प्रमोक्ष्यामि मा भैषीर्भरतर्षभ ।
[ (L. 2) G1.2 असृत्वा. — (L. 4) T2 G4 हि (for प्र°). ]

21 Ś1 K1 S om. उवाच. — After अर्जुनः, T G ins.:

1544* पूर्वरात्रे प्रबुद्धोऽसि भीम क्रूरेण रक्षसा ।
क्षपा व्युष्टा न चेदानीं समाप्तोऽसि महारणम् ।
[ (L. 1) G3–6 प्रयु°. — (L. 2) T1 G1 समाप्तस्तु; T2 G6 °माप्तोपि; G2 °माप्तं तु. T1 G1 °रणः; G3 त्वया रणं. ]

— a) B6 वीर; G1.2 भूप (for भीम). — b) T2 G दुष्टचारिणा (for पाप°). — c) K0 Ñ V1 B D T1 गंतव्ये न (D5 °व्योपि; T1 °व्यो न); T2 G मांतरेण. — d) S (except T1) परंतप (for अरिंदम).

22 a) Ñ1 दिशा; D5 यावत्; Arj. (comm.) Cd पुरः (=अग्रतः); Da (erroneously) Arjp पुरा (as in text). D5 न रज्यते काष्ठा. — b) D6 पूर्वसंध्या. — d) Ś1 बलवंति (for प्रब°). K1 इ; K4 M2.3 हि; Ñ V1 B D (except D5) T1 उत (for च). T2 G भवंति बलवंति च.

23 a) K0 भैरवं; Ñ2 B1.2 हासीर्; Ñ3 भीत; S (except T1 G2) लीला (G2.3 °ल; G4 °लां) (for क्रीड). — b) Many MSS. बिभी°. — d) Ś1 K भुजाभ्यां साधु योक्त्रय (K4 योधयन्); D5 जानुभ्यां साधु योजय. — After 23, T2 G ins.:

1545* माहात्म्यमात्मनो वेत्थ नराणां हितकाम्यया ।
रक्षो जहि यथा शक्रः पुरा वृत्रं महाहवे ।
[ (L. 2) T2 G4 महाहवे; G1.2 महासुरं. ]

Thereafter T G read 26–27.

24 Ś1 K1.2.4 S om. उवाच (K4 M6–8 om. the ref.). — After 24a, K4 Ñ V1 B D (for D5 see below) T1 ins.:

1546* भीमो रोषाज्ज्वलन्निव ।
बलमाहारयामास यद्वायोर्जगतः क्षये ।
ततस्तस्याम्बुदाभस्य-

भीम उवाच ।
वृथामांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥ २५
अर्जुन उवाच ।
अथ वा मन्यसे भारं त्वमिमं राक्षसं युधि ।
करोमि तव साहाय्यं शीघ्रमेव निहन्यताम् ॥ २६
अथ वाप्यहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥ २७

वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा भीमसेनोऽत्यमर्षणः ।
निष्पिष्यैनं बलाद्भूमौ पशुमारममारयत् ॥ २८
स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ।
पूरयंस्तद्वनं सर्वं जलार्द्र इव दुन्दुभिः ॥ २९
भुजाभ्यां योक्त्रयित्वा तं बलवान्पाण्डुनन्दनः ।
मध्ये भङ्क्त्वा स बलवान्हर्षयामास पाण्डवान् ॥ ३०
हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः ।

---

D5 (om. line 1) ins. the rest after 24^ab, completing the last half line by repeating (with v. l.) 24^b. — ^b) Ñ2.3 V1 B D (D5 second time) T1 रोषात्तु (for भीमस्य). K4 G1 M भीमो भीमपराक्रमः. — ^cd) B1 D2.4 T G M8 °प्य भ्रामयत्. T2 G transp. देहं and तूर्णं. K0.3 D5 °प्य भ्रामयामास. K0.3 देहं; Ñ1 देशं; B5 हंतुं (for तूर्णं). Ś1 Ñ गुणशतादपि; K0 V1 B3m.5.6 Dn D1.2.4.6 शतगुणं तदा (K0 D5 बहिः); K2.4 शतगुणादधि; K3 °शतादधि; S (except G3 M6-8) शतगुणाधिकं; Cd as in text. — After 24, T G ins.:

1547* इति चोवाच संक्रुद्धो भ्रामयन्राक्षसं तु सः ।
भीमसेनो महाबाहुरभिगर्जन्मुहुर्मुहुः ।

[ (L. 1) T2 भ्रामयामास राक्षसं; G3 °न्राक्षमीं तनुं. ]

25 T2 G M om. भीम उ°. Ś1 K1 B3 भीमसेनः; T1 भीमः (for भीम उ°). — ^ab) Ś1 K Ñ3 D5 °मांसो; G1.2 नरमांसैर्. T2 G4 transp. पुष्टो and वृद्धो. G1 जीवन्; G3 पुष्टो (for वृद्धो). — ^c) Ñ1.3 °दर्पस्त्वं; D1 °वृद्धस्त्वं. — ^d) Ñ2 तथैव; Ñ3 वृथैवं; D1 वृथा च. D5 वृथैव स विनंक्षसि; T2 G वृथैव विनशिष्यसि. — After 25, V1 Dn D1.4.6 S ins.:

1548* क्षेममद्य करिष्यामि यथा वनमकण्टकम् ।
न पुनर्मानुषान्हत्वा भक्षयिष्यसि राक्षस ।

[ (L. 1) Cf. 1. 141. 10^ab. S (except T1) एतत् (for अद्य). D1.4.6 तथा; T2 G3-5 M वनं; G1.2.6 शिवं (for यथा). G3.6 शिवं (for वनं). T2 G4 M निहतकंट° (for वन°). — (L. 2) M6-8 मानवान्. ]

26 For T G, cf. v. l. 23. Ś1 K1 om. उवाच; T G om. the ref. — ^a) V1 B D (except D4) यदि (for अथ). — ^c) K0 D5 करिष्ये; T G1.2.4-6 आतिष्ठे. G3 अतिष्ठेत वनं हार्यं. — ^d) M क्षिप्रं (for शीघ्रं). Ś1 K2 Ñ2 V1 B D (except D5) एष (for एव). Ś1 K2.3 विहन्य°; Ñ V1 B D (except D5) M निपात्य°; T G [illegible] हन्य°.

27 For T G, cf. v. l. 23. — ^a) G6 कथं (for अथ) G1 तु; G2.3.6 हि (for अपि). — ^c) Ñ1 महेष्वास (for परि°). G1.2 पूर्वं कृतपरि°.

28 Ś1 K1.2 D2 T1 M6.6-8 om. उवाच; Ñ3 Dn D1 T1 [illegible] M6 om. the ref. — ^a) T G इत्युक्तवा (G3 °क्तो) भीमसेनस्तं (T2 G3-5 °स्तु). — ^b) K3 °मो महाबलः; T G निष्पिष्य धरणीतले. — ^c) Ñ1 इमं (for एनं). M8 भीमः (for भूमौ). T2 G भुजाभ्यामयपीड्याशु. — After 28, T2 G ins.:

1549* अथैनमाक्षिप्य बलात्पशुवच्चाप्यमारयत् ।,
the posterior half *repeating* (with v. l.) 28^cd.

29 ^b) Ś1 K1 सुमहास्वनं; K3 तुमलं स्वनं; Ñ1 °लं घने; B6 Da S (except T1 G2 M7) °लस्वनं.

30 ^a) K4 जानु°; Ñ V1 B Da Dn D1.2.6 T1 G3 बाहु° (for भुजा°). B6 योधयित्वा; M (except M8) योज°; Cd as in text. Ñ2 B6 D1 S (except T1) तु (for तं). K0 D5 स भुजाभ्यां योक्त्र(D5 °ध)यित्वा. — ^c) K0 D5 राक्षसं (for बलवान्). Ś1 K1 बलात्पाण्डव°. — After 30^ab, T G (G3.6 om. line 2) ins.:

1550* समुद्भ्राम्य शिरश्चास्य सग्रीवं तदुदावहत् ।
मध्ये भित्त्वा शिरश्चास्य सुग्रीवं तदुपाक्षिपत् ।
तस्य निष्कर्णनयनं निर्भिन्नं रुधिरोक्षितम् ।
प्रविद्धं भीमसेनेन शिरो विदधानं बभौ ।
प्रसारितभुजोदृष्टो भिन्नमांसत्वगन्ततः ।
कबन्धभूतस्तत्रासीद्वज्रनिर्भिन्नो यथा ।

[ (L. 1) T1 स संभ्राम्य; G6 समुद्वृत्य. T2 G1.2 सुग्रीवं. G1 तदुपाहरत्; G3 तदुदक्षिपत्; G2.6 तदुपाक्षिपत्. — (L. 3) T2 G1.2 ततो (for मध्ये). G1 तदुदक्षिपत्. — (L. 4) T2 G3 प्रवृद्धं; G5 प्राविध्य; G6 प्रपीडं. — (L. 6) T2 G3 गिरिः (for अद्रिः). ]

— T2 G om. 30^cd. — ^c) Ś1 K0.3 Ñ3 भुजङ्ग°; Ñ2 V1 B D (except D5) T1 महाबाहुः. Ñ3 °ध्ये भंक्त्वा बलं°; M

अपूजयन्नरव्याघ्रं भीमसेनमरिंदमम् ॥ ३१
अभिपूज्य महात्मानं भीमं भीमपराक्रमम् ।
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरम् ॥ ३२
नदूरे नगरं मन्ये वनादस्मादहं प्रभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात्सुयोधनः ॥३३
ततः सर्वे तथेत्युक्त्वा सह मात्रा परंतपाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ॥ ३४ C. 1. 6041 B. 1. 154. 56 K. 1. 166. 45

इति श्रीमहाभारते आदिपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ समाप्तं हिडिम्बवधपर्व ॥

---

°ध्ये तु भक्त्या बल°.

31 $^{b}$) $K_2$ संतुष्टास्; $B_3$ प्रहृ°. $\tilde{N}_3$ $M_3$ तपस्विनः. $K_0$ $D_5$ हृष्टास्ते कुरुनंदनाः; $T_2$ G प्रहृष्टास्तत्र पांडवाः ($G_3$ बांधवाः). — After $31^{ab}$, T G ins.:

1551* हिडिम्बा चैव संप्रेक्ष्य निहतं राक्षसं रणे ।
अदृश्याश्चैव ये स्वस्थाः समेता भूतवादिकाः ।
पूजयन्ति स्म संहृष्टाः साधु साध्विति पाण्डवम् ।
भ्रातरश्चापि संहृष्टा युधिष्ठिरपुरोगमाः ।

[ (L. 1) $T_1$ हिडिंबं; $T_2$ $G_{3-6}$ हिडिंबी. $G_{1.2}$ सा च (for चैव). $T_1$ वने (for रणे). — (L. 2) $T_1$ अदृश्यांगाश्च. $G_3$ सिद्धाश्च; $G_4$ मेयस्याः (for ये स्वस्थाः). $G_2$ सर्वे तं (for समेता). $T_1$ भूतधारकाः; $G_2$ °देवताः; $G_3$ °वादिनः; $G_4$ सर्पिचारणाः $G_6$ °वादकाः. ]
— $^{c}$) $\tilde{N}_1$ पूजयंस्तो नरव्याघ्रा.

32 $K_0$ om. $32^{ab}$. — $^{a}$) $T_2$ G अथ (for अभि-). $N_3$ महात्मानः; $M_{3.4}$ यथान्यायं. $M_{6-8}$ °पूज्याथ तं भीमं. — $^{b}$) $\tilde{N}_3$ भीमसेनपरा°. — $^{cd}$) M °रेवाब्रवीद्वाक्यमर्जुनस्तु वृ°.

33 $^{a}$) $\tilde{N}_{1.2}$ $V_1$ B (except $B_3$) $Dn_{1.n2}$ $D_2$ न दूरं; T $G_{3-6}$ M अदूरे. $G_1$ यथा तु तेन गंतव्यं. — $^{b}$) $G_1$ इद (for अहं). $N_1$ $V_1$ B (except $B_1$) D (except $D_5$) $T_1$ विभो. — $^{d}$) $K_{0.2.4}$ $D_{1.3}$ $G_3$ विंद्यात्.

34 $^{a}$) $G_6$ ते तु (for ततः). $B_6$ $D_a$ transp. ततः सर्वे and तथे°. $D_2$ तथेत्युक्त्वा तु ते सर्वे. — $^{b}$) $\tilde{N}_{1.2}$ $V_1$ $B_3$ $D_n$ $D_1$ transp. सह and मात्रा. $Ś_1$ $K_{0.1}$ परंतप ($K_0$ °पः); $\tilde{N}_{1.3m}$ $V_1$ B D (except $D_5$) $T_2$ G महारथाः; $\tilde{N}_3$ महाबलाः; $\tilde{N}_3$ नरर्षभाः; $T_1$ महायशाः. — $^{c}$) $K_{2.4}$ ते नरव्याघ्रा; $T_1$ $M_{6-8}$ °व्याघ्र.

Colophon. *Major parvan*. $T_2$ G M संभव° (for आदि°). — *Sub-parvan*: $Ś_1$ K $\tilde{N}_{1.2}$ $V_1$ B D ($D_4$ *sec. m*) $M_{6-8}$ Cd हिडिंबवध; to it $Ś_1$ $K_{0-2}$ $\tilde{N}_1$ $D_5$ $M_{6-8}$ add समाप्त. — *Adhy. name*: $\tilde{N}_{1.2}$ $V_1$ T $G_1$ M हिडिंबवधः; $G_3$ हिडिंबिसंवादः. — *Adhy. no.* (figures, words or both): $B_1$ $T_1$ 150; $Dn_3$ 153; $D_{4m}$ 156; $T_2$ $G_{3.5}$ M 101; $G_{1.2}$ 102; $G_{3.4}$ 100. — *S'loka no.*: Dn 36; $M_3$ 35. — *Aggregate s'loka no.*: $Dn_3$ 6030.

## 143

1 Before भीमः (see below), $D_4$ (marg. *sec. m.*) (M om. lines 3, 6) ins.:

1552* वैशंपायनः ।
सा ततो न्यपतत्तूर्णं भगिनी तस्य रक्षसः ।
अब्रुवाणा हिडिम्बा तु राक्षसी पाण्डवान्प्रति ।
अभियाद्य ततः कुन्तीं धर्मराजं च पाण्डवम् ।
अभिपूज्य च तान्सर्वान्भीमसेनमभाषत ।
अहं ते दर्शनादेव मन्मथस्य वशं गता । [5]
क्रूरं भ्रातृवचो हित्वा सा त्वामेवानुरुन्धती ।
राक्षसे रौद्रसंकाशे तयापश्यं विचेष्टितम् ।
अहं शुश्रूषुरिच्छेयं तव गात्रं निषेवितुम् ।

[ (L. 1) $D_4$ ततोन्वप°; $M_8$ ततोभ्यगम°. — (L. 2) $G_{1.2}$ transp. राक्ष° and पाण्डवान्प्र°. $D_4$ पुनः (for प्रति). — *(L. 4) $D_4$ अभिवाद्य, and उवाच ह (for अभा°).* — (L. 7) $D_4$ राक्षसी भीमसंकाशं. — (L. 8) $D_4$ तव पादसरोरुहं. ]
— $Ś_1$ $K_1$ भीमसेनः; $K_{0.3}$ $B_{5.6}$ $Dn_3$ $D_2$ भीम उ°; S भीमः. — $^{a}$) $K_0$ $\tilde{N}_{1.2}$ $D_a$ $D_{2.4}$ T G आस्थाय (for आश्रि°). A few MSS. मोहनीं. — $^{d}$) $\tilde{N}_1$ तं वै; $T_1$ $G_3$ तत्वं; $T_2$ $G_{2.4-6}$ मा त्वं; $G_1$ मां त्वं; $M_3$ त्वं तां. $\tilde{N}_2$ $V_1$ B D (except $D_5$) त्वमिमं भ्रातृसंवितं. Cd cites भ्रातृनिषेवितं.

2 $Ś_1$ $K_{1.2}$ S om. उवाच. — $^{a}$) $B_6$ क्रुद्धोसि; $T_1$ $G_1$ ग्राहीमां; $G_2$ °द्धो हि. — $^{b}$) $Ś_1$ $K_{0.1.3}$ transp. भीम and मा स. $K_{2.4}$ $D_5$ M त्वं; T G च (for स). — $^{c}$) $K_1$ (corrupt) °हयापिदिकं; $K_3$ °ह्यप्य°; $K_4$ $\tilde{N}$ $V_1$ B (except $B_3$) $D_a$ $D_n$ $D_{1.2.4}$ $T_2$ $G_{1.4.6}$ °हयस्य°; $D_5$ $M_{3.4}$ °हास्य°; $T_1$ $G_{1.4}$ °सेर°; $G_2$ °ह्या हा°; $M_{6-8}$ °हयाप्य°. — $^{d}$) $K_{3.4}$ $\tilde{N}_{1.2}$ $V_1$ B (except $B_3$) D T $G_5$ गोपाय. — After 2, $B_6$ ins.:

1553* शरणागतगुह्या त्वं धर्मं गोपाय पाण्डव ।,
the posterior half repeating $2^{cd}$.

# १४३

भीम उवाच ।
सरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम् ।
हिडिम्बे व्रज पन्थानं त्वं वै भ्रातृनिषेवितम् ॥ १
युधिष्ठिर उवाच ।
क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः ।
शरीरगुप्त्याभ्यधिकं धर्मं गोपय पाण्डव ॥ २
वधाभिप्रायमायान्तमवधीस्त्वं महाबलम् ।
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ॥ ३
वैशंपायन उवाच ।
हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलिः ।
युधिष्ठिरं च कौन्तेयमिदं वचनमब्रवीत् ॥ ४
आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम् ।
तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे ॥ ५
सोढं तत्परमं दुःखं मया कालप्रतीक्षया ।
सोऽयमभ्यागतः कालो भविता मे सुखाय वै ॥ ६
मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा ।
वृतोऽयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ॥ ७
वरेणापि तथानेन त्वया चापि यशस्विनि ।
तथा ब्रुवन्ती हि तदा प्रत्याख्याता क्रियां प्रति ॥ ८
त्वं मां मूढेति वा मत्वा भक्ता वानुगतेति वा ।
भर्त्रानेन महाभागे संयोजय सुतेन ते ॥ ९
तमुपादाय गच्छेयं यथेष्टं देवरूपिणम् ।

---

3 a) T G अवधीस् (for आयान्तम्). — b) M वृकोदर (for महा°). T G त्वं महाबल राक्षस (T2 G1.3 °सं). — c) Ś1 K1.2 Ñ1.3 राक्षसं. — d) Ś1 Ko.1 T1 तु; K3.4 तु (for नः). T1 G2.3 भविष्यति.

4 Ś1 K1.3 D2 S om. उवाच. — c) Ñ2.3 V1 B (except B6) Dn D1.2.4 तु (for च). — d) T1 ततो (for इदं).

5 Before 5, Ko Ñ2.3 ins. हिडिंबोवाच; K3 हिडंबा; T1 G1 हिडिंबा; M6-8 हिडिंबी. — b) Ko इदं (for इह). Ś1 K1.2.4 D5 स्त्रीणामिदमनं°. — d) Ko.3.4 D5 °कृते. M महत् (for शुभे).

6 a) K1.4 B5.6 Da D3.4.5 T1 सोढुं; T2 G साहं (see below); M (except M7) गूढं. — b) T2 G सहे (for मया). Ñ2.3 B Da D2.4 काम(Ñ3 °क)परीतया. — c) Ko °मत्यागतः. — d) Ñ2 V1 B D (except D5) सुखोदयः; S सुखावहः.

7 a) Ko.4 Da D5 मयाप्युत्सृ°; K3 °याप्युत्सृष्टाः; T2 G °याप्युत्सृ°. — b) T G ज्ञातीन्स्वं धर्मं(G2 °न्स्वंबंध)मेव च. — d) T2 G (except G1) शुभः.

8 a) Ko-2.4 Ñ1.2 V1 B Da Dn D1.3.4 वीरेणाहं. K2 तथैतेन; Ñ1 च नानेन; Ñ3 तथा तेन. K3 वीरेण चाहमेतेन; Ñ3 D5 S व(Ñ3 D5 T1 वी)रेणानेन तु विना (Ñ3 चैवाहं). — b) Dn1 तथा चापि. Ś1 K4 Da1 D1.2.4 °स्विनी. D5 S नाहं जीवितुमुत्सहे. — D5 S ins. after $8^{ab}$; V1 B5 Dn D1.4, after 8:

1554* तदर्हसि कृपां कर्तुं मयि त्वं वरवर्णिनि ।

*Thereafter T2 reads line 8 and M5 lines 5–7 of* 1556* (cf. v. l. 10). — D5 reads $8^{cd}$ after 12; while T G read it after $12^{ab}$. — cd) S एवं (for तथा). K4 D5 S तु (G1.3 च; G3 as in text). T2 G4-6 यथा. Ñ1 तदा तदार्यां ब्रुवती. K1 T1 प्रियां; Cd क्रियां (as in text). Ñ3 V1 B D (D5 om.) प्रत्याख्याता न जीवामि सत्यमेतद्ब्रवीमि ते. — After 8, V1 B5 Dn D1.4 ins. 1554*; D5 ins. 1557* (cf. v. l. 12); while S ins.:

1555* भूयां दुष्कृतिनो लोकान्गमिष्येऽहं न संशयः ।

which, in T G2-6, is followed by $11^{ab}$.

9 a) Ś1 त्वं वा; Ko.3 Ñ3 T1 G3 तां मां; K1 त्वां वा; Ñ1 B1.2.3 G1.2 M5 सम्मां; Ñ3 V1 B6 D (except D5) मत्वा; T2 तां त्वं; M3.6-8 तस्मात्. Ñ1 मत्वा वै; Ñ2 V1 B6 Da Dn D3 सम्मां त्वं; B1.2.3 D2.4 मत्वा त्वं (B3 तं); G1.2 (by transp.) मत्वा वा. — b) K3 G1.6 भक्तां; G3 भर्त्रा. Ko B (except B6) M3.6-8 च (for the first वा). M3.6-8 अनुव्रतेति. M5 भक्ताचारम°. Ñ1 अपि (for इति). B1.6 च (for the second वा). — c) T G योजयस्व (for संयो°). T2 शुभेन. Ś1 K1.2.4 V1 B5 Dn D1.3 ह; Ko हि; K3 Ñ1.2 D5 मां; Ñ3 चे; B3 तु (for ते).

10 b) M यथावद् (for यथेष्टं). — c) G3 तम् (for चैव). Ś1 K (except Ko) V1 Dn D1 G2.3 मान विद्यामि- — d) Ś1 B3.4 विश्वस्यं; Ko.2 D5 [illegible] विश्वास्यं; Cd as in

पुनश्चैवागमिष्यामि विश्रम्भं कुरु मे शुभे ॥ १०
अहं हि मनसा ध्याता सर्वान्नेष्यामि वः सदा ।
वृजिने तारयिष्यामि दुर्गेषु च नरर्षभान् ॥ ११
पृष्ठेन वो वहिष्यामि शीघ्रां गतिमभीप्सतः ।
यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥ १२
आपदस्तरणे प्राणान्धारयेद्येन येन हि ।
सर्वमादृत्य कर्तव्यं तद्धर्ममनुवर्तता ॥ १३
आपत्सु यो धारयति धर्मं धर्मविदुत्तमः ।
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ॥ १४
पुण्यं प्राणान्धारयति पुण्यं प्राणदमुच्यते ।
येन येनाचरेद्धर्मं तस्मिन्गर्हा न विद्यते ॥ १५

युधिष्ठिर उवाच ।

एवमेतद्यथात्थ त्वं हिडिम्बे नात्र संशयः ।
स्थातव्यं तु त्वया धर्मे यथा ब्रूयां सुमध्यमे ॥ १६
स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम् ।
भीमसेनं भजेथास्त्वं प्रागस्तगमनाद्रवेः ॥ १७ C 1 6058 B 1 155 17 K 1 167 83

---

text — T ■ ins after 10 Ms (om lines 1-4, 8-9), after 1554* (cf v 1. 8ab)

1556* अह हि समये लिप्से प्राग्भ्रातुरपवर्जनात् ।
तत' सोऽभ्यपतद्राग्नौ भीमसेनजिघासया ।
यथा यथा विक्रमते यथा रमति तिष्ठति ।
तथा तथा समाधाय पाण्डव काममोहिता ।
न यातुधान्यह त्वार्ये न चास्मि रजनीचरी ।
ईशा रक्ष सु साध्व्यस्मि राज्ञी सालकटङ्कटी ।
पुत्रेण तव सयुक्ता युवतिर्देववर्णिनी ।
सर्वान्वोऽहमुपस्थास्ये पुरस्कृत्य वृकोदरम् ।
अप्रमत्ता प्रमत्तेषु शुश्रूषुरनहंवदा ।

[ (L. 1) T1 अह समुपलक्ष्यैव, G4 5 °ह समुपल॰ष्वैव, G6 °ह समुपलप्स्ये प्राक् G6 मद्' (for प्राक्) G3 श्रोतुम् (for भ्रातुर्) G4 5 उपघर्ज° — (L 3) T1 यथारिमधितिष्ठ°, G1, 2 तथारिमधुति°, G3 यथारिमयि ति° — (L. 4) T2 G3 4 समादाय, G6 समाधायत् — (L 5) G1 भद्रे (for त्वार्य) — (L 6) T2 G4 5 कन्या, G3 तथा, G6 ईशे (for ईशा) T1 रक्ष स्वसा ह्यस्मि, G6 रक्ष स्वाहमस्मि, Ms रक्ष सुता यास्मि (for रक्ष सु साध्व्यस्मि) G1 2 Ms राज्ञि, G3 राज्ञ T2 G3 6 °ण्टकटा, G1 °कटकरी — (L 7) T1 युवती देवरूपिणी — (L. 9) T1 असह, G3 अभय (for अनह ) T1 G3 6 सदा (for यदा)

11 G1 om 11ab, T G2-6 read it after 1555* (cf v 1 8) — ab) Ñ3 पथि (for सदा) ■ (G1 om ) ध्यात्वा सर्वं चेष्यामि सर्वदा — c) Ś1 K (except K0) विपिने, Ñ1 2 V1 B Da Dn D1 2 4 वृजिनात्, D5 G2 विजने, T2 G6 वृजिन, M विषमे T2 G3 6 कारयिष्यामि — d) K5 दुर्गेपि, T G दासीवच् Ś1 °र्षभ, K1 G6 °र्षभ, Ñ3 T2 G3 4 °र्षभा Ñ1 दुर्गेषु भरतर्षभान्, Ñ2 V1 B D (except D5) °षु विषमेषु च

12 a) G2 वा, G3 च; G5 अपि (for वो) Ñ B Da D2 4 T ■ Nilp प्रव(Ñ3 T1 G1 °चे)क्ष्यामि, Ms 3 हनि° — b) Ś1 K1 Ñ1 2 V1 D5 शीघ्र Ś1 K1 2 B3 D5 °प्सतां, K4 Ñ1 3 B6m °प्सिता T G3-6 क्षणेन गति(T1 °त)मीप्स(G3 6 °प्सि)ता (T1 °त), G1 M विमान सुकृती(G1 Ms °ता)निव — After 12ab, T G read 8cd, followed by 1555* (cf v 1 8) — After 12, D5 reads 8cd, followed by

1557* उवाच सा तदा कुन्ती हिडिम्बा नाम राक्षसीम् ।

13 Before 13, Ś1 ins कुती, K0 D5 कुती उ°, K1 3 4 कुन्त्युवाच — a) K1 2 Ms (inf lin as in text) °स्तारणे, T G आपत्स्विस्त° — b) K (except K1) Ñ1 2 येन ह, Ñ3 V1 B D T1 तेन वा (D2 केन वा, D5 केन ह), T2 G M केनचित् — c) B6 धर्मं (for सर्वं) K3 4 D4 T2 G1 2 आहृत्य, K5 V1 B6 Dn G3 4 आवृत्य, T2 G6 आपदि, G6 आपत्सु — d) Ñ1 2 V2 B6 Dn G1 2 त धर्मम्, D2 धर्मेमम् (sic) K0 2 D5 °वर्तते, K3 4 Ñ3 °वर्तता, T1 °पश्यत , T2 G3-6 °पश्यता, G1 2 M °पश्यता

14 Before 14, ■ ins हिडम्बो — a) Cd धारयते G2 आपद्यो धारयेत्प्राणान् — b) D5 T G ■ वै (for धर्मं) — D5 om 14cd

15 K4 om 15, Ś1 K1 Da1 (hapl ) om 15ab — a) T G3 6 M पुण्यान् B3 धारयीत, T2 °यति, G3 °यत्य°, G6 °यति G1 2 पुण्याद्धा(G2 °न्धा)रयति (G3 °ती) प्राणान् — b) S पुण्य वै (G1 2 हि) प्राणधारण — c) Ñ1 2 B3 Da ■ यन येन (T2 G2 M2 3 4 येन कन, G3 यनार्को न) चरे°, Cd as in text — After 15, S ins a passage given in App I (No 87)

16 S1 K1 2 ■ om उवाच (G3 om the ref ) — a) Ms 3 एव (for एतद्) Ñ1 °थातत्व, T °थावृत्त — c) T1 कर्तव्य D5 च, G6 हि (for तु) Ñ2 V1 B D M सत्ये, T1 धर्मं — d) K5 T2 G2-6 मूया , G1 2 मूहि — After 16, S ins

1558* नित्य कृताह्निका स्नाता कृतशौचा सुरूपिणी ।

6059 155 18 107 39 अहःसु विहरानेन यथाकामं मनोजवा ।
अयं त्वानयितव्यस्ते भीमसेनः सदा निशि ॥ १८

वैशंपायन उवाच ।

तथेति तत्प्रतिज्ञाय हिडिम्बा राक्षसी तदा ।
भीमसेनमुपादाय ऊर्ध्वमाचक्रमे ततः ॥ १९
शैलशृङ्गेषु रम्येषु देवतायतनेषु च ।
मृगपक्षिविघुष्टेषु रमणीयेषु सर्वदा ॥ २०
कृत्वा च परमं रूपं सर्वाभरणभूषिता ।
संजल्पन्ती सुमधुरं रमयामास पाण्डवम् ॥ २१
तथैव वनदुर्गेषु पुष्पितद्रुमसानुषु ।
सरःसु रमणीयेषु पद्मोत्पलयुतेषु च ॥ २२
नदीद्वीपप्रदेशेषु वैडूर्यसिकतासु च ।
सुतीर्थवनतोयासु तथा गिरिनदीषु च ॥ २३
सागरस्य प्रदेशेषु मणिहेमचितेषु च ।

---

[ T1 G1 3 M3 5 त्वासौ T2 G2 5 स्वरू°. ]

17 c) K3 4 त्वाम Ś1 K1 हुताग्निक, K3 4 कृत्वाह्नि°. M धीरे (for भद्रे) — e) B3 (m as in text) त्यजेयास — d) Ś1 K0 1 M3 आगस्त गम°, T G वर्तिते वै दिवाकरे

18 a) T G *विचरानेन* — b) Ś1 K0, 1 3 M (*except* M1) सहकाम, Ñ3 °काल K3 D5 °जवे, G2 °जव — c) S आनेतव्यस्त्वया भद्रे — d) S त्वय (for सदा) — After 18, S ins a passage given in App I (No 88), with a colophon after line 4 (*adhy no* T1 G1 3 103, T2 G2 5 102, G3, 4 101)

19 Ś1 K1 3 *D3 5* S om उवाच (T2 G1 3 M3 5 om the ref ) — a) Ñ1 3 B Da D2 त प्रतिश्रुत्य — After 19a, K0 3 4 V1 Dn D1, 4 5 S ins

1559* भीमसेनोऽब्रवीदिदम् ।

T2 G M cont

1560* शासन ते करिष्यामि देवशासनमित्यपि ।
समक्ष भ्रातृमध्ये तु भीमसेनोऽब्रवीदिदम् ।
[ (L 1) G1 5 वेदशासन° ]

T2 G M cont K0 3 4 V1 Dn D1 4 5 T1 ins after 1559*

1561* शृणु राक्षसि सत्येन समय ते वदाम्यहम् ।
यावत्कालेन भवति पुत्रस्योत्पादन शुभे ।
तावत्काल गमिष्यामि त्वया सह सुमध्यमे ।
[ Before line 1, D4 (*marg* ) ins भीम उ° — (L 2) K4 T1 °त्काल च S अपत्योत्पा° — (L 3) T1 भविष्यामि, T2 G चरि°, M3 5 वसि°, M6-8 करि° ]

— Thereafter K0 3 4 V1 Dn D1 4 5 repeat 19a (v l K0 D5 प्रतिश्रुत्य), while S ins

1562* विशेषतो मत्सकाशे मा प्रकाशय नीचताम् ।
उत्तमस्त्रीगुणोपेता भजेथा वरवर्णिनि ।,

which in S (except G3 which *om* 19b) is followed by 19a (v l T1 G1 5 6 M सा तथेति प्रतिज्ञाय) — G3 om 19b — b) Ś1 K1-3 Ñ1 3 तत , B3 T2 तथा — T G ins after 19b (G3 om line 1, ins after 1562*)

1563* गताहनि निवेशेषु भोज्य राजार्हमानयत् ।
सा कदाचिद्विहारार्थ हिडिम्बा कामचारिणी ।
[ (L 1) G1 गत्वा त्वहनि वेश्मानि भो°. ]

— d) N (except K4) सोऽध्वैम् G3 आक्रमते (for आच°) *K3-5 M6-8* तदा (*for* तत )

20 a) Ś1 शैलपृष्ठेषु Ś1 K0 1 Ñ1 3 पुण्येषु T G वनेषु च सशैलेषु — Ś1 K1 3 4 transp 20b and 25b — b) M देवानामालयेषु च — After 20ab, G4 (which om 23cd) reads 23ab G3 om 20c-22a — c) G3 °पक्षचरष्टेषु — d) K0 D5 सर्वदा°

21 G3 om 21 (cf v l 20) — a) S (except M1, G3 om ) सा (G3 पुन) (for च) Ś1 K1 3 Ñ V1 B3 5 D (except D5) transp परम and रूप K3 चानुपम रूप, K4 च मानुष रूप — b) Ś1 K1 °पित — c) G3 सा (for स°) — d)=26d

22 G3 *om* 22 (cf v l 20) — a) M3 गिरिदु° — b) T G (*G3 om* ) पर्वत° — After 22ab, G1 reads *23cd* — Ś1 K1 om 22c-23b — d) K (K3 *om* ) *D5* T G (except G3, G3 om ) °त्पलवनेषु, Ñ3 मणिहेमचितेषु — After 22cd, G1 reads 24ab

23 Ś1 K1 om 23ab (cf v l 22), G4 reads it after 20ab — a) Ñ1 °प्रकाशेषु, M (except M1) नदीतीर° — G3 (hapl ) om 23b-24a — b) K0 °रुचितेषु, K2, 4 Ñ1, 3 D5 T G2, 3 M °सिकतेषु; G1, 3 °विकृतेषु, G3 °निकरेषु — After 23ab, T2 G2 5 read 25ab, G1, 24cd — B3 T1 G2 4 *M6-8 om* 23cd — G1 reads 23cd after 22ab — c) *D5* M3 5 °तोयेषु — After 23, D5 reads 25ab, while K4 B D (except *D2, 5*) *ins*

1564* काननेषु विचित्रेषु पुष्पितद्रुमवल्लिषु ।
हिमवद्गिरिकुञ्जेषु गुहासु विविधासु च ।
प्रफुल्लशतपत्रेषु सर स्वमलवारिषु ।
[ (L 1) Da °*द्रुमसानुषु* (=22b) — (L 3) D4 प्रोत्फुल्ल° ]

24 D5 T1 G4 M6-8 om 24, G3 om 24ab, G1 reads 24ab after 22cd, G3 om 24a (cf v l 23)

निर्योधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ १६
एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च ।
सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ ॥ १७
दर्शनीयांश्च वः सर्वान्देवरूपानवस्थितान् ।
समीक्ष्य कृष्णा वरयेत्संगत्यान्यतमं वरम् ॥ १८
अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः ।
नियुध्यमानो विजयेत्संगत्या द्रविणं बहु ॥ १९
युधिष्ठिर उवाच ।
परमं भो गमिष्यामो द्रष्टुं देवमहोत्सवम् ।
भवद्भिः सहिताः सर्वे कन्यायास्तं स्वयंवरम् ॥ २० C. 1. 6944 S. 1. 184. 20 K. 1. 185. 21

इति श्रीमहाभारते आदिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

---

कुमारी वरयिष्यति.

16 a) Ś1 Ñ1.2 V1 B D (except D5) तत्र; G1 M6-8 चात्र (for चैव). — b) G6 तत्र (for सूत). M6-8 °मागधैः. — c) Ś1 नियोधयश्च; T1 निदेश°; T2 G2-5 नियोध°. — d) T1 समवेतान् (for समे°). B (except B6) D5 स्वयंवरं; D4 परस्परं (for महा°).

17 a) Ś1 एकं; T1 एतत् (for एवं). K4 S दृष्ट्वा (T1 तत्र) (for कृत्वा). — b) K4 S (except T1) श्रुत्वा (for दृष्ट्वा). — d) K1 पुरः प्रति-; T1 मात्रा सह; G6 रंगं प्रति-. K2 Da2 D2 T1 G1 M5 -निवर्त्स्यथ; K4 T2 -निवर्त्स्यथ; G1 -निवृत्स्यथ; G2-4 M8 -निवर्तेथ (M8 °त).

18 b) K0 S देवरूपानिव स्थि°. — d) K4 Ñ3 V2 B D (except D5) संगत्यैकतमं (D2 °रं); M °तरं. T G (except G1) M8 पतिं (for वरम्).

19 a) K4 T2 G M भ्राता च वः श्रीमं; T1 एको हि वो भ्राता. — b) Ñ2.3 V1 B3.5 Dn D1.5 G2-5 नियुज्यमानो; G6 युध्यमानो. Ñ V1 B1 Dn विजये. — d) Ñ1.3 लभेत्; S महत् (for बहु). B5 संगत्यान्यतमं वरं (cf. 18d). — After 19, Ñ3 V1 D5 ins.:

1805* आहरिष्यत्ययं नूनं प्रीतिं वो वर्धयिष्यति ।

20 Ś1 K1-4 S om. उवाच. — a) K1 व्रजिष्यामो. T1 वयं सह गमि°; G1 परमं भोजयिष्यामि. — b) Ñ3 V2 B D चैव; G2-4 देशं; G6 दैवं (for देव-); cf. v. l. 1d, 11d. T1 द्रष्टुं तत्र स्वयंवरं. — cd) Ś1 K1 सर्वैः (for सर्वे). Ś1 K D5 पांचाल्यास्तं स्वयं°. T1 द्रौपदीं यज्ञसेनस्य कन्यां तस्यास्त्वभोत्सवं.

Colophon. T2 G1-5 read a col. after the first occurrence of this adhy. (i. e. after adhy. 157), and one also (after the second occurrence) here. M reads it only here (after the second occurrence), the first occurrence being embodied in our adhy. 158. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B5.6 Da Dn1.n3 D1.3.4.5 T2 G3.4 (the latter three both times) M8 द्रौपदीस्वयंवर; N1.2 V1 B1 स्वयंवर. — *Adhy. name:* K0.4 पांडवप्रस्थानः (K4 °स्थापनः); Ñ1.2 V1 पांडवागमनं; T2 G3.4.6 ब्राह्मणसमागमः. — *Adhy. no.* (figures, words or both): Dn3 183; D4m 186; T1 165; T2 G3.4.5 (all first time) 117, and (all second time) 134; G1.2 (both first time) 119 and 115 respectively, and (both second time) 136; G6 M (at the second occurrence) 135. — *S'loka no.:* Dn M6 20. — *Aggregate s'loka no.:* Dn3 6916.

## 176

1 Ś1 K D2 S om. उवाच (K0 om. the ref.). — T1, which om. 1, repeats 1. 175. 1 here — a) Ś1 K (except K4) B1.3 Da D1 एवमुक्त्वा. — D4 (marg. *sec. m.*) D ins. after 1ab (T1, after the repetition of 1. 175. 1), a *repetition* of 1803* [ v. l.: T G सर्वे; M2 भूत्वा (for पार्थाः) ]; cf. 1. 55. 20. — c) S (T2 om.) राजन् (for राज्ञा). Ñ V1 B D5 G1.2 M3.8 °पंचालान्.

2 a) Ñ3 V1 D1 तेषु; B1.6 D4 ते च; Dn2.n3 ते तु; D2 त्वेनं (for ते तं). — c) N2 V1 B Dn D1.4.5 वीरा (for राजन्). — d) Ñ1.2 V1 B D (except Da D5) मुनिं (for पथि). A few MSS. तथा.

3 T2 om. 3-4. — a) M6-8 तस्मै यथैव.. K0 तस्मै पूजां यथार्हां च. — b) Ñ1 चक्रुस् (for कृत्वा). M8 रहसि (*inf. lin.* तेन च as in text). Ñ3 V1 B3.6 D सत्कृताः (for सान्त्विताः). — c) Ś1 K1 चाप्यनु°; D2 तदनु°. S (T2 om.) कथयित्वाभ्य(G6 °प्य)नु°. — d) K0.3.4 द्रुपदं प्रति; Cd as in text.

4 T2 om. 4 (cf. v. l. 3). — b) K0.4 D5 वनान्युपवनानि च; T1 G6 सरांसि च वनानि च (by transp.). — c) M3.8 ते (for च).

## १७६

वैशंपायन उवाच ।

एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय ।
राज्ञा दक्षिणपाञ्चालान्द्रुपदेनाभिरक्षितान् ॥ १
ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम् ।
ददृशुः पाण्डवा राजन्पथि द्वैपायनं तदा ॥ २
तस्मै यथावत्सत्कारं कृत्वा तेन च सान्त्विताः ।
कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥ ३
पश्यन्तो रमणीयानि वनानि च सरांसि च ।
तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ॥ ४
स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पाञ्चालान्कुरुनन्दनाः ॥ ५
ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः ।
कुम्भकारस्य शालायां निवेशं चक्रिरे तदा ॥ ६
तत्र भैक्षं समाजह्रुर्ब्राह्मीं वृत्तिं समाश्रिताः ।
तांश्च प्राप्तांस्तदा वीराञ्जज्ञिरे न नराः क्वचित् ॥ ७
यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ।
कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः ॥ ८
सोऽन्वेषमाणः कौन्तेयान्पाञ्चाल्यो जनमेजय ।
दृढं धनुरनायम्यं कारयामास भारत ॥ ९
यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।

---

5 ª) G5 मधुराः (for शुचयो). — ᵇ) K1 B5 मधुरा G3 मधुकाः; G6 पांडवाः. K3 प्रियदर्शनाः. — ᶜᵈ) Ś1 K (except K3) Ñ3 D1 G2 आ(K4 अ)नुपूर्वेण; Cd as in text. T1 transp. संप्राप्ताः and पांचालान्. A few MSS. पंचालान्. Ñ3 V1 B D (except D5) पांडुनंदनाः.

6 ª) D1 दृष्ट्वा तु (by transp.). T G पुरं तस्य. — ᵇ) K4 स्कंधागारं; T2 G ˚वारान्; Cd as in text. — ᵈ) Ñ1.2 V1 B D (except D5) M6-8 निवासं.

7 ª) Some MSS. भैक्ष्यं. — ᵇ) K3 Ñ1.2 B2.3 Dn D2.4.5 समास्थिताः. Ñ3 V1 Dn D1 ब्राह्मणीं वृत्तिमाश्रिताः. — ᶜ) Ñ3 V1 B1 Dn D1.2 तान्संप्राप्तान्; G1 प्राप्य प्रा˚. K2.3 Ñ3 V1 B (except B6) Dn D1 S (except T1 G2.4) तथा. B1.2 राजन् (for वीरान्). — ᵈ) D2 मानवाः (for न नराः). — After 7, D4 (marg. sec. m.) T G2-6 ins.:

1806* यज्ञसेनस्तु पाञ्चालो भीष्मद्रोणकृतागसम् ।
ज्ञात्वात्मानं तदारेभे प्राणायामक्रियां क्षमाम् ।
अवाप्य धृष्टद्युम्नं हि न स द्रोणमचिन्तयत् ।
सुतवैरप्रसङ्गाच्च भीष्माद्भयमचिन्तयत् ।

[ (L. 2) D4 T2 ततोरेभे; T1 तदा लेभे; G5 तमारेभे. D4 T2 प्राणायामक्रियां. T1 G4 क्षमां क्रियां (by transp.). — (L. 4) D4 T2 स तु; T1 स्थित; G4 स ते (for सुत). ] — After 8: D4 (marg. sec. m.) T2 G5 cont.: T1 G2-4 ins. after 8:

1807* कन्यादानात्तु शरणं सोऽमन्यत महीपतिः ।
जामातुर्बलसंयोगान्मेने ह बलवत्तरम् ।

[ (L. 1) D4 ˚दानं तु; G2-4 ˚दानादि. G5 सोपश्यत. — (L. 2) D4 G1-4 हि (for ह). ]

8 ᶜ) Dn कामं तु. T2 स कामो यज्ञसेनस्य. — ᶜ) T1 G2.6 दद्यानीति; G1-4 M ददामीति. T1 दास्यामि कृष्णामिति. — ᵈ) B5 न चैतं; T1 न चैनं. Ś1 तु; Cd वि˚ (as in text). — After 8, T2 G2-4 ins. 1807*.

9 ªᵇ) Ś1 सोन्वेष्यमाणः; D1 G6 M1 अन्वेष˚. Ñ1.2 V1 B D M6-8 कौंतेयं. G6 पांचालः कौन्तेयान्. S (except T1) पांचालो. — After 9ªᵇ, D4 (marg. sec. m.) T G2.3 ins.:

1808* शंकरेण वरो दत्तः प्रीतेन च महात्मना ।
स निष्फलः स्यात्स तु मे इति प्रामाण्यमागतः ।
मया कर्तव्यमधुना दुष्करं लक्ष्यवेधनम् ।
इति निश्चित्य मनसा कारितं लक्ष्यमुत्तमम् ।

[ (L. 1) T2 G5 वरं दत्तं. — (L. 2) D4 T2 G5 तन्निष्फलं. ] — ᶜ) Ñ2.3 V1 B (B1m as in text) D T2 G1 M6 ˚नानम्यं. — ᵈ) G1-4 मार्गयामास. G2-4 वै सदा (for भारत). — After 9, T G2-6 ins.:

1809* वैयाघ्रपदसोमं वै सृञ्जयस्य महीपतेः ।
सद्धनुः किंधुरं नाम देवदत्तमुपानयत् ।
आयसी तस्य ज्या चासीत्प्रतिबद्धा महाबला ।
न तु ज्यां प्रसहेदन्यो तद्धनुःप्रवरं महत् ।

[ (L. 1) T G5 वैयाघ्रपाद˚. G5 महीक्षितः. — (L. 2) T G5 स धनुः. — (L. 3) T1 G2.4 ज्याभासीत्. ]

10 ª) Ñ V1 B1.2 D (except D5) T2 G2.6 M6-8 समितं; T1 समयं. M2.4 यंत्रेण समितं लक्ष्यं. — ᵈ) G1-4 Ñ3 V1 B D (except D5) चकार स राजन् (for राजा). T G5 M कारयामास कांचनं.

तेन यन्त्रेण सहितं राजा लक्ष्यं च काञ्चनम् ॥ १०

द्रुपद उवाच ।

इदं सज्यं धनुः कृत्वा सज्येनानेन सायकैः ।
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति ॥

वैशंपायन उवाच ।

इति स द्रुपदो राजा सर्वतः समघोषयत् ।
तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥ १२
ऋषयश्च महात्मानः स्वयंवरदिदृक्षया ।
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप ॥ १३
ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् ।
तेऽभ्यर्चिता राजगणा द्रुपदेन महात्मना ॥ १४
ततः पौरजनाः सर्वे सागरोद्धूतनिःस्वनाः ।
शिशुमारपुरं प्राप्य न्यविशंस्ते च पार्थिवाः ॥ १५
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ १६
प्राकारपरिखोपेतो द्वारतोरणमण्डितः ।
वितानेन विचित्रेण सर्वतः समवस्तृतः ॥ १७
तूर्यौघशतसंकीर्णः परार्ध्यागुरुधूपितः ।
चन्दनोदकसिक्तश्च माल्यदामैश्च शोभितः ॥ १८
कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः । C. 1. 6963 B. 1. 185. 19 K. 1. 200. 20

---

11 Ś1 K1 om. उवाच; [illegible] om. the ref. — a) A few MSS. सज्जं. — b) K3 सज्जेन; T G3-4.6 M छिद्रेण; G1 यंत्रेण. Ñ V1 B D सज्जैरेभिश्च (B6 Da D5 °स्तु) (Ñ1 सज्जैराप्त°). — c) Ś1m K1 संधाय लक्ष्यं. B Da D2.4 यो विध्येत्; G3-4.6 यो विध्यात्. — d) B D2.4 स लभेत्. S च (for मत्°). Ñ1 B6 Da D4.5 इमां (for इति). — After 11, Ś1 K D5 ins. an additional colophon (*Sub-parvan:* Ś1 K द्रौपदीस्वयंवर. — *Adhy. name:* Ko.4 D5 द्रुपदवाक्यं. — *Adhy. no.:* D5 133).

12 Ś1 K (except Ko) om. उवाच; [illegible] om. the ref. — a) K1 इत्थं स; [illegible] इत्येवं (T1 °च). — b) Ñ3 V1 B D स्वयंवरमथो°; G1 सर्वलोकेष्वथो°. — c) T1 G6 पांडवाः सर्वे.

13 b) Ñ V1 Da °दिदृक्षवः. — T1 G3-4 ins. after $13^{ab}$ (G3 has line 1 only after $13^{ab}$ and the rest after 13; G3.4 om. $14^{ab}$):

1810* यादवा वासुदेवेन सार्धमन्धकवृष्णयः ।
राजानो राजपुत्राश्च युवानो मृष्टकुण्डलाः ।
नानाजनपदाधीशा यज्वानो भूरिदक्षिणाः ।
मनोज्ञरूपलावण्या महेन्द्रसमविक्रमाः ।
क्रोधेन चाग्निसदृशाः क्षमया पृथिवीसमाः ।
स्थैर्ये मेरुसमा धीराः सूर्यवैश्वानरोपमाः ।
पृथिव्यां ये च राजान ऋषयश्च तपोधनाः ।
बालवृद्धानृते सर्वे महीपालाः समागताः ।
त्रयस्त्रिंशत्सुराः सर्वे विमानैर्व्योम्नि निष्ठिताः ।

— c) G3.4 दुर्योधनमुखाश्चैव. — d) G2 कौरवा (for रवो). Ko.2.4 Ñ1.3 Da D5 T G1.2.6 M6-8 नृपाः; G3.4 सुः. — After 13, G1 ins. lines 2-9 of 1810*.

14 G3.4 om. $14^{ab}$. — b) K3 Ñ1 T G (G3.4 om.) M3 (*inf. lin.*).6-8 समुपागताः. M3.5 नानादेशसमागताः. — c) Ñ V1 [illegible] D (except D4) G3-4 ततोऽर्चिता; T2 ते ह्यर्चि°. G3-6 महीपाला; G6 नरेंद्रेण (for राज°). — After 14, T1 G3-4 ins.:

1811* ब्राह्मणैरेव सहिताः पाण्डवाः समुपाविशन् ।
वैतालिका नर्तकाश्च सूतमागधबन्दिनः ।

T1 G3-4 cont.: N ins. after 14:

1812* उपोपविष्टा मञ्चेषु द्रष्टुकामाः स्वयंवरम् ।
[ T1 G3-4 राजसुपागमन्सर्वे द्रष्टु° etc. ]

15 a) K4 पौरजनः सर्वैः; [illegible] पुरवरे श्रेष्ठे. — b) Ś1 K1.2 T1 G1.6 M सागरोद्धृत°; K4 °स्वनः; T2 G3-6 °रोपमनिस्वने. — c) K4 D4 S शि(G6 शि)शुमारगिरिं (K4 °शिरं; D4 °शिरः) प्राप्य. — d) K (except K1) B3 D1.2 न्यवसन् (for न्यविशन्). Ko.2.4 D5 तत्र; B1.2 Da D4 तेषु; B3 तेषु; D2 ते स्म (for ते च). K1 पार्थिव. S न्यविशंत महारथाः.

16 a) [illegible] °त्तरे च. — b) Ñ3 M6 भूमिदेशे.

17 a) D4 T G प्राकार(T1 G6 °साद)परिघोपेतो. — d) B1(m as in text).2 संवृतः; G6 सर्वेश्च (for सर्वतः). Ś1 K4 D4 समविस्तृतः; K1 Ñ2 V1 B1m.3 Dn D1.3 T2 G2-6 °लंकृतः; Ñ1 B2.3.6 Da °वस्थितः (B6 °तैः); T1 समुपावृतः; G1 संवृतस्ततः; G6 M °वास्तृतः; text as in Ko.2.3 Ñ3 D3!

18 b) Ś1 Ñ1.2 °भूषितः; Ko °रूपितः; K1 °वासितः. K2-4 Dn D1 S (except T1) °र्ध्यागरुधूपि(K2.3 °भूषि)तः. — G6 om. $18^{cd}$. — c) B6 °नागरुसिक्तश्च; M6-8 °सिक्तैश्च. — d) Ś1 K (except K3) माल्यपुंजैश्च. Ñ1 भूषितः. Ñ2 V1 B D °दामोपशो° (D5 °दामविभूषितः); T1 °दामविशोभितः; M3 °दामभिरावृतः.

19 a) D1.2 T2 G3-6 M5-8 नभःस्थल°. — c) K3 Ñ2

सर्वतः संवृतैर्नद्धः प्रासादैः सुकृतोच्छ्रितैः ॥ १९
सुवर्णजालसंवीतैर्मणिकुट्टिमभूषितैः ।
सुखारोहणसोपानैर्महासनपरिच्छदैः ॥ २०
अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसांशुवर्णैर्बहुभिरायोजनसुगन्धिभिः ॥ २१
असंबाधशतद्वारैः शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव ॥ २२
तत्र नानाप्रकारेषु विमानेषु स्वलंकृताः ।
स्पर्धमानास्तदान्योन्यं निषेदुः सर्वपार्थिवाः ॥ २३
तत्रोपविष्टान्ददृशुर्महासत्त्वपराक्रमान् ।
राजसिंहान्महाभागान्कृष्णागुरुविभूषितान् ॥ २४
महाप्रसादान्ब्रह्मण्यान्स्वराष्ट्रपरिरक्षिणः ।
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः ॥ २५

मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनतुष्ट्यर्थं सर्वतः समुपाविशन् ॥ २६
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन् ।
ऋद्धिं पाञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् ॥ २७
ततः समाजो ववृधे स राजन्दिवसान्बहून् ।
रत्नप्रदानबहुलः शोभितो नटनर्तकैः ॥ २८
वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।
आप्लुताङ्गी सुवसना सर्वाभरणभूषिता ॥ २९
वीरकांस्यमुपादाय काञ्चनं समलंकृतम् ।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ३०
पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिना तदा ॥ ३१
स तर्पयित्वा ज्वलनं ब्राह्मणान्स्वस्ति वाच्य च ।

V1 B D (except D2) संवृ(K3 °श्रृ)तः (B6 °तैः) शुभ्रैः; M (except M8) संवृतो नद्धैः. — c) Ñ3 V1 B D T G1 (by corr.).3 (sup. lin.) M6.8 °तोच्छ्र(D3 °च्च)यैः.

20 a) T G (except G3) °जालवितते:; M8 °माला-संयुक्तैः; M6-8 °मालासंवीतैः. — b) Ś1 K3 Ñ3 V1 Dn3 °भूषणैः.

21 a) K4 °समवस्थानैः; Ñ3 V1 B1 T1 व्याघ्रमसम°; D3 °वसनच्छन्नैः. — b) Ś1 K0-2.4 °भूषितैः; K3 Ñ1.2 T2 G M °धूपितैः; T1 वितानध्वजशोभितैः. Some MSS. अगरु (for अगुरु-). — Ko om. $21^{c}$–$22^{b}$; G1 om. $21^{cd}$. — c) K3 हंसांग°; K2.4 D5.6 हंसाभ्र°; Ñ2.3 V1 B3.6 Dn D1 हंसांशु°; B1.3 Da हंसास°; S हंसवर्णैश्च.

22 Ko om. $22^{ab}$ (cf. v. l. 21). — a) Ñ1.2 S °पथ(T2 G3 °पथि; G1 °पदेर)द्वारैः. — b) K4 °शोभनैः; M8 °विन्यस्तैः; M6-8 °शोभिभिः. — c) Ś1 K (except K3) M8 °विन-द्धांगैः; Ñ1.2 °नियद्धांगैः; T2 G2-4 °विदिग्धांगैः.

23 a) T2 ■ सदान्योन्यं. — d) Ñ1 निषेदुर्वसुधाधिपाः.

24 b) Ś1 K Ñ1.2 V1 D5 महाबल°; S महासत्त्वान्नरजनाः (T1 G1 °नान्). — c) M6-8 नरसिंहान्. — d) Ko.3.4 D5 दिव्यचंदनभूषितान्; S मृष्टस्रगनुलेपनान्.

25 a) T2 G1 महाप्रभावान्. Ś1 Da2 D1 G3 ब्राह्मण्यान्. — b) G1 स्वराष्ट्रस्य हि र°. — c) G6 धर्मस्य लोकस्य. — d) K (except K3) D2.5 T2 G3 M8 स्वकृतैः. G3 स्वकृतैकशुभाशुभैः.

26 a) E ततो मंचातिमंचेषु. — b) Ś1 पश्यंतस्तामनुत्तमान्; K (except K1) Ñ3 B Da D1.2.4 °पदो जनः. — cd) Ñ3 V1 B D °सिध्य° (for °तुष्ट्य°). Ś1 पौराश्च (for सर्वतः). Ko.2.4 Ñ3 B Da D1.2.4 समुपाविशत्. S तथोपविविशुः सर्वे याज्ञसेनीं दिदृक्षवः.

27 Ś1 K1.2.4 (hapl.) om. $27^{ab}$. — a) D3 T1 स्वैव; T2 G M चैव (G1 स्वैश्च) (for ते च). — c) Some MSS. पंचाल°. G6 पांचालदेशस्य. — d) Ś1 जानपदास्तथैव च(!); G2.4 °स्तामनिंदितां.

28 a) K3 B1 Da D1 G6 M ववृते. — b) G1.3 M8 स राजा. — c) K1 रंतप्र॰मम° (sic); K3 °प्रधान°; D2 D1.2 °प्रवाल°.

29 b) M8.6 पुरोत्तमे; M6-8 हि षोडशे. — After $29^{ab}$, D4 (suppl. fol., sec. m.) ins. a passage of 50 lines given in App. I (No. 98). — c) ■ आप्लुता (M6-8 °स्य) शुद्धवसना.

30 a) Ñ3 V1 Dn D1.4.5 माल्यं च स(D5 चित्रा)मु-पादाय; G3 वीरकांस्यजमादाय. Cd वीरकांस्यं (= माल्यं) as in text. — b) Ñ3 V1 Dn D2.4.5 कांचनीं समलंकृतां; T2 G1.4.5 कांचनैः स°. — d) K4 द्रौपदी योषितां वरा; S द्रौपदी द्रुपदात्मजा.

31 b) Ko.4 ब्राह्मणर्षभः. — d) Ñ V1 B D विधिवत्तदा; M6-8 हविषा तदा.

32 a) K1.4 Ñ V1 ■ (except B1) ■ (except Da2 D1) T2 G1.4.5 M6.8 संतर्प°; K3 तर्पयित्वा तु. — b) Ñ1.2 Ś1 K1.4 Da2 Da1 ब्राह्मणं. Ś1 K1 स्वस्ति वाचयन्.

वारयामास सर्वाणि वादित्राणि समन्ततः ॥ ३२
नैःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशां पते ।
रङ्गमध्यगतस्तत्र मेघगम्भीरया गिरा ।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ ३३
इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे पार्थिवाः सर्व एव ।
यन्त्रच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं
समर्पयध्वं खगमैर्दशार्धैः ॥ ३४
एतत्कर्ता कर्म सुदुष्करं यः
कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं
कृष्णा भवित्री न मृषा ब्रवीमि ॥ ३५
तानेवमुक्त्वा द्रुपदस्य पुत्रः
पश्चादिदं द्रौपदीमभ्युवाच ।
नाम्ना च गोत्रेण च कर्मणा च
संकीर्तयंस्तान्नृपतीन्समेतान् ॥ ३६　C. 1. 6970 B. 1. 185. 37 K. 1. 200. 52

इति श्रीमहाभारते आदिपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

---

G6 M वादयामास. G3 सर्वं हि. — d) K1 च सर्वशः (for समन्त°).

33 a) D1 याज्ञसेनो (for धृष्ट°). — After 33ab, K4 Ñ1.2 V1 B3.6 Dn3 D1.2.4.5 ins.:

1813* कृष्णामादाय विधिवन्मेघदुन्दुभिनिःस्वनः ।

— b) K3 Ñ V1 B6 Dn D4.5 G2 M6-8 रंगमध्ये; B1 D1 °मध्यं; G1 जनमध्ये. — d) S (except T1 G6) गंभीरनिस्वनः. — e) M6-8 वाक्य(M7 °च)मुचैर्. — f) G1 श्लक्ष्णं धर्मवदुत्तमं.

34 K3 om. 34–36. Before 34, Ko.4 D6 ins. धृष्टद्युम्न उ°; S (except M6-8) धृष्टद्युम्नः. — a) Some MSS. लक्ष्यम्. — b) Ś1 शृण्वंत्विमे; Ñ1 °तु ये. S क्षत्रियाः (for पार्थिवाः). Ś1 [illegible] Ñ2.3 V1 B D (except D5) मे भूपतयः समेताः. — c) Ñ2 V1 B D छिद्रेण यंत्रस्य समर्पयध्वं. — d) Ko.4 समापयध्वं; K1 संमर्द°; K3 समर्थ°. Ñ2 V1 B D लक्ष्यं (Ñ3 V1 Dn D1 क्षौरैः) शितैर्व्योमचरैर्दशार्धैः; G6 समाददे पंचभिश्चापि बाणैः. Cd cites खगमैः (as in text).

35 K3 om. 35 (cf. v. l. 34). — a) Ñ2 V1 B D कृतन्महत्कर्म करोति यो वै. — c) G1 तस्यैव. M (except M1) भविता (for भगिनी). B6 Da D3 ममैषा. — d) S (except T1 G1.2) कृष्णा स्वसा न मृषा प्रब्रवीमि.

36 K3 om. 36 (cf. v. l. 34). — a) G2 तेनैवम्; G3 तामेवम्. — b) D5 S इति (for अभि-). Ñ2 V1 B Da Dn D1-4 °दं तां भगिनीमुवाच. — d) Ñ2 V1 B3.6 D (except D5) भूमिपतीन् (for तान्नृपतीन्).

Colophon om. in K3. — *Major parvan:* T2 G M संभव° (for आदि). — *Sub-parvan:* Ś1 Ko-2 Ñ2 B D2.4 T2 G1.4.6 M3.6-8 द्रौपदीस्वयंवर; Ñ1.2 V1 Dn3 M4 स्वयंवर; T1 संभव. — *Adhy. name:* Ko.4 D5 द्रौपदी(Ko om.)रंगावतरणं; Ñ1.2 V1 धृष्टद्युम्नवाक्यं. — *Adhy. no.* (figures, words or both): Dn3 184; D1 80 (read 180); D5m 187; T1 183; T2 G2.4.6 135; G1.3 137; G5 M 136. — *S'loka no.:* Dn 36; M4 37. — *Aggregate s'loka no.:* Dn2 6952.

## 177

1 Ś1 K1.3 S om. उवाच. — a) Ko Ñ3 V1 B D तथा; K3 शक्रः; M2.3 शमः (for समः).

2 a) Ñ V1 B D वायुवेग°. — b) Ś1 भीमवेश°; Ko.3.4 °वेगोपम°; Ñ1 [illegible]; Ñ2 V1 B1.3 D, Dn D1 G1 °वेगरथ°; D2 T °वेगरथ°; D5 °वेगयम°; G2-4 °वेगरथ°; G5 °वेगरत°; G6 °वेगश्च वीर्यवान्. — D2 (hapl.) om. 2c–3c. — c) T1 G1 बलाकश्च; G6 °किश्च. — d) Ñ2 V1 B (except B3) Dn D1 करकायुर्.

3 D1 om. 3 (cf. v. l. 2). — a) Ko.2 D5 T G M2 सकुंडलश्च (G1 °लिश्च). Ś1 K1.2 चित्रवेदी (K1 °धी). Ñ2 V1 B Da Dn D2.4 कुंडज(Ñ3 V1 B3 Dn °क; D2.4 °छ)श्चित्रसेनश्च. — b) Ś1 सुवर्चाः; K (except K1) B6 Da °र्चा. — c) Ś1 Da M6-8 बहु°; K3 °शाली; B6 बल°. — d) Ko.2.4 कुंडलो; Ñ2 V1 B3 Dn तुहुंडो; B1.2.5 Da D2.4.5 मुकुटो; S कुंडली. B5 T2 विकचस्. — After 3, D1 (marg. sec. m.) S ins.:

1814* विन्दश्चाप्यनुविन्दश्च सजीवी विकलः करी ।
[ T1 G1 M2.3 संदीपी; T2 G2-6 सद्दीपी; M6-8 संजीवी. ]

4 a) K3 शूराः (for वीराः). — b) Ñ1 समुपागमन्; D2 °पस्थिताः. — c) Ñ2 V1 Dn D1 असंख्याता (for

## १७७

धृष्टद्युम्न उवाच ।
दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः ।
विविंशतिर्विकर्णश्च सहो दुःशासनः समः ॥ १
युयुत्सुर्वातवेगश्च भीमवेगधरस्तथा ।
उग्रायुधो बलाकी च कनकायुर्विरोचनः ॥ २
सुकुण्डलश्चित्रसेनः सुवर्चाः कनकध्वजः ।
नन्दको बाहुशाली च कुण्डजो विकटस्तथा ॥ ३
एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः ।
कर्णेन सहिता वीरास्त्वदर्थं समुपागताः ।
शतसंख्या महात्मानः प्रथिताः क्षत्रियर्षभाः ॥ ४
शकुनिश्च बलश्चैव वृषकोऽथ बृहद्बलः ।
एते गान्धारराजस्य सुताः सर्वे समागताः ॥ ५
अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ ।
समवेतौ महात्मानौ त्वदर्थे समलंकृतौ ॥ ६
बृहन्तो मणिमांश्चैव दण्डधारश्च वीर्यवान् ।
सहदेवो जयत्सेनो मेघसंधिश्च मागधः ॥ ७
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
वार्धक्षेमिः सुवर्चाश्च सेनाबिन्दुश्च पार्थिवः ॥ ८
अभिभूः सह पुत्रेण सुदाम्ना च सुवर्चसा ।
सुमित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा ॥ ९
सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा ।
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः ॥ १०
समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान् ।
जलसंधः पितापुत्रौ सुदण्डो दण्ड एव च ॥ ११
पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान् ।
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा ॥ १२
मद्रराजस्तथा शल्यः सहपुत्रो महारथः ।
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च ॥ १३
कौरव्यः सोमदत्तश्च पुत्राश्चास्य महारथाः ।
समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः ॥ १४

घात°). Ś1 महाबलाः (for °त्मानः). — f) Ñ3 V1 Dn D1 पार्थिवाः; S समेताः (for प्रथिताः). K3.4 क्षत्रिया भुवि; S देवरूपिणः.

5 a) K T2 G1.3.4 °निश्चाच(K1 °निः सच)लश्चैव; Ś V1 B D G2 M6-8 °निः सौबल°; T1 °निश्चाशल°; G5 M6 °निश्चापल°; G6 °निश्चाचलै°. — b) S महाधनुः (G6 °रथाः) (for बृह°). — d) B6 Da Dn.4 S पुत्राः. Ś1 K D5 प्रकीर्तिताः (for समा°).

6 a) D5 द्रोण° (for भोज°). — G6 om. 6c–8b. — c) Ñ1 समागतौ; M6-8 सबले सौ. — d) Many S MSS. त्वदर्थं.

7 G6 om. 7 (cf. v. l. 6). — a) Ś1 K1 बृहन्तो(K1 °न्तो)मणि°; Ko D5 बृहत्सुमणि°; M (except M5) बृहंतौ मणि°. — b) Ñ3 V1 B D (except D5) पार्थिवः (for वीर्य°). — D3 (hapl.) om. 7c–8d. — c) Ñ V1 B D (except D5; D3 om.) सहदेवजयत्सेनौ. — d) Ñ2.3 V1 Dn D1 पार्थिवः (for मागधः).

8 G6 om. 8ab; D5 om. 8 (cf. v. l. 6, 7). — c) K4 सुपर्वा च; Ñ1.3 V1 Dn D1 सुशर्मा च; G2 सवंशुश्च; G5 सबीज°; G4 सबिंदु°. — d) K1 पार्थिव; K4 °वाः; S वीर्यवान्.

9 a) Ñ1.3 अविज्ञुः; Ñ2 V1 B1 (m as in text). K3 Dn D1.2 सुकेतुः; B5 D4 अविद्युः; Da अविघ्नः (for अभि°). — b) K1 Ñ1.3 V1 B6 Dn D1.4 सुनाम्ना; S Ñ2 सहपुत्रश्च. — c) K1 Ñ2 B6 Da अथ (for च). — c) Ko.2.4 Ñ वसुना. V1 B1.3 Dn D1.2.4 M2.3 सुचित्रः; B5 °मित्रः; G1 °मित्रिः. — d) K6 धृतः; G6 वृतः (for वृकः). T2 G1.3 सत्यव्रतः.

10 Ś1 K1 (hapl.) om. 10ab. — b) B1 नीलश्चोमायुध°.

11 a) T G °संद्रश्च. — b) B (except D5) Da D2.4 चित्रसेनः; G6 इंद्र°. Ko.2.4 D5 च वीर्यवान्; S च पार्थिवः (for प्रताप°). — c) S (except G3) जरासंधः. D5 S स(G2-4 च; M5 सु)पुत्रश्च (G1 °सु). — d) Ko.2.3 Ñ1 B2.3 अदंडो; K4 Ñ2.3 V1 Dn D1 विदंडो.

12 c) K (except K1) S M6-8 ताम्रलिप्तश्च. G1 कलिंगाधिपतिस्तथा. — d) Ś1 K2.3 पट्टना°; D5 बबना°; M6 वर्तमा°. Ñ1 S महान् (for तथा).

13 b) K (except K1) S सह पुत्रैः. S महारथः. — c) K4 रुक्माङ्गदे विविंशेन.

सुदक्षिणश्च काम्बोजो दृढधन्वा च कौरवः ।
बृहद्बलः सुषेणश्च शिबिरौशीनरस्तथा ॥ १५
संकर्षणो वासुदेवो रौक्मिणेयश्च वीर्यवान् ।
साम्बश्च चारुदेष्णश्च सारणोऽथ गदस्तथा ॥ १६
अक्रूरः सात्यकिश्चैव उद्धवश्च महाबलः ।
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ १७
विदूरथश्च कङ्कश्च समीकः सारमेजयः ।
वीरो वातपतिश्चैव झिल्ली पिण्डारकस्तथा ।
उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः ॥ १८
भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः ।
बृहद्रथो बाह्लिकश्च श्रुतायुश्च महारथः ॥ १९
उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ ।
वत्सराजश्च धृतिमान्कोसलाधिपतिस्तथा ॥ २०
एते चान्ये च बहवो नानाजनपदेश्वराः ।
त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि ॥ २१
एते वेत्स्यन्ति विक्रान्तास्त्वदर्थं लक्ष्यमुत्तमम् ।
विध्येत य इमं लक्ष्यं वरयेथाः शुभेऽद्य तम् ॥ २२ C 1. 7004 B 1. 186. 4 K 1. 201.

इति श्रीमहाभारते आदिपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

14 D1 (? hapl.) om. 14b–15a. — b) Ś1 Ñ3 V1 B1.3 Da पुत्रश्चास्य; T1 °श्चैव; G6 °स्तस्य. Ś1 Ñ3 V1 Da °स्यः. — c) Ko D5 त्रयः पुत्राः. — d) K4 बलः; T1 चलः (for शलः).

15 D1 om. 15abc (cf. v. l. 14). — a) A few MSS. काम्बोजो. — b) Ko.3.4 Ñ V1 B1.3 Da Dn D5 पौरवः (for कौ°). — c) S (except T1 G6) सुषेणश्च. — After 15, N (for D4 see below) ins.:

1815* पटच्चरनिहन्ता च कारूषाधिपतिस्तथा ।
[ K (except K4) Da D5 करूषा°. ]

On the other hand, S ins. after 15:

1816* पाण्ड्यकेरलचोलेन्द्रास्त्रयस्त्रेताग्नयो यथा ।
आसनेषु विराजन्ते आशास्वागरत्यमाश्रिताः ।

D4 (marg. sec. m.) ins. 1815* after 1816* (v. l. in line 2 of 1816*: भूतमादित्यसंनिभाः for the posterior half).

16 ab) K1 रोहिणेयश्च (for रौक्मि°). S संकर्षणो रौहिणेयो वासुदेवश्च वीर्य°. — K1 om. 16c–17b. — c) Some MSS. साम्बश्च. — d) Ś1 सारणीयो गद°; K4 सारणश्चगद°; Ñ2.3 V1 B6 Dn D1.4 प्राद्युम्निः सगद°(D1 °गण°); M6-8 सारणो निशठस्तथा.

17 K1 om. 17ab (cf. v. l. 16). — a) K4 S स(K4 T2 सा)त्यर(G1.3 °ग)श्चैव (G6 सात्विकश्चैव). — D2 om. 17b–18a. — b) Ñ V1 B D D (D2 om.) महाम(B3 D4 °शु)तिः. S युयुधानश्च सात्यकिः. — d) K1 तथा (for पृथुर्). M6-8 पृथिवी पृथुरेव च.

18 D2 om. 18a (cf. v. l. 17). — a) N (D2 om.) विदूरथश्च. K1 कद्रुश्च; T1 G3.6 M3 कण्व°; T2 M6-8 कद्रु°; G1.3-5 कर्णे° (cf. 1. 1. 173d and v. l.). — After 18a, K3 ins.:

1817* ये चान्ये यादवास्तथा ।
आगतास्तव हेतोश्च कृष्णे जानीहि सत्वरम् ।
कृतवर्मा च हार्दिक्यः (= 17c).

— N ins. after 18a (K3, after 1817*; D2, which om. 17b–18a, after 17a):

1818* शङ्कुश्च सगवेषणः ।
आशावहोऽनिरुद्धश्च.
[ (L. 2) Ko.3.4 B (except B3) D (except Dn) आ(B1 m सु)गावहो. ]

— b) B3.6 D3.5 शमीकः; G2 समीरः. Ko.3.4 समरेजयः; Ñ V1 B D G1.6 M3 सारिमेजयः; T2 सारणो जयः. — c) Ñ2 D5 S दानपतिश्चैव. — d) Ś1 बल्ली; K1 हली; K2 D5 झल्ली; K4 भिल्ली. T1 झिल्लिवाम्भारगस्तदा; T2 झिल्ली पिंगारवस्तथा; G1 झिल्ली पिंगकर°; G2-3 M8.5 झिल्ली (G1.5 झल्ली; M5 सील्वी) पिंग(G2 पिंज-; G3.4 लिंग)रक°; G6 वाह्निर्वाशारक°; M6-8 सल्ली पिंगरथ°. — Ko om. 18e–19c. — f) K1 वृष्णयोमी प्र°.

19 Ko om. 19 (cf. v. l. 18). — a) D1 अथ (for च). G3.5.6 बृहद्रथः. — Da (hapl.) om. 19cd. — c) K3 बृहद्बको; G6 जयद्रथो. — d) B3 महाबलः. S श्रुतायुरथ वीर्यवान्.

20 a) S कितवो. — c) Ñ2.3 V1 B D मतिमान्; G1 विक्रांतः. — d) Some N MSS. कोसला°; T2 G (except G1) कौसला°. S महान्. — After 20, D5 S ins.:

1819* कर्णश्च सह पुत्रेण वृषसेनेन वीर्यवान् ।
बृहद्बलश्च बलवान्राजा चैवाथ दुर्जयः ।
दमघोषात्मजश्चैव शिशुपालो महाबलः ।
चेदीनामधिपो वीरो बलवानन्तकोपमः ।

## १७८

वैशंपायन उवाच ।

तेऽलंकृताः कुण्डलिनो युवानः
परस्परं स्पर्धमानाः समेताः ।
अस्त्रं बलं चात्मनि मन्यमानाः
सर्वे समुत्पेतुरहंकृतेन ॥ १

रूपेण वीर्येण कुलेन चैव
धर्मेण चैवापि च यौवनेन ।
समृद्धदर्पा मदवेगभिन्ना
मत्ता यथा हैमवता गजेन्द्राः ॥ २

परस्परं स्पर्धया प्रेक्षमाणाः
संकल्पजेनापि परिप्लुताङ्गाः ।
कृष्णा ममैवेत्यभिभाषमाणा
नृपासनेभ्यः सहसोपतस्थुः ॥ ३

ते क्षत्रिया रङ्गगताः समेता
जिगीषमाणा द्रुपदात्मजां ताम् ।
चकाशिरे पर्वतराजकन्या-
मुमां यथा देवगणाः समेताः ॥ ४

कन्दर्पबाणाभिनिपीडिताङ्गाः
कृष्णागतैस्ते हृदयैर्नरेन्द्राः ।
रङ्गावतीर्णा द्रुपदात्मजार्थं
द्वेष्यान्हि चक्रुः सुहृदोऽपि तत्र ॥ ५

अथाययुर्देवगणा विमानै
रुद्रादित्या वसवोऽथाश्विनौ च ।

---

[ For lines 3–4, cf. lines 2–3 of 1828*. ]

T1 G2–4 cont.:

1820* प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याः क्षितीश्वराः ।

On the other hand, K4 Ñ V2 B Da Dn D1.2.4 ins. after 20:

1821* शिशुपालश्च विक्रान्तो जरासंधस्तथैव च ।

21 d) Ś1 K D6 क्षितौ (for भुवि).

22 a) S (except K3 Ñ1) T1 G3 भेत्स्यंति; T2 G1.2.4–6 M विध्यंति. — b) Ś1 K1 Ñ V2 B (except B6) Dn D1 M2.6 त्वद्र्थे. Some MSS. लक्ष्म्. — cd) Ś1 विध्यते; K1 विद्यते. K0–2 Ñ2.3 V1 B D य इदं. B Da D2.4.6 वरयेथास्त्वं शुभे (by transp.). S वेद्धा तु यो भवेद्(T2 °त्ते)षां तं वरं वरयस्व वै.

Colophon. *Major parvan*. T2 G M संभव° (for आदि°). — *Sub-parvan*: Ś1 K1–4 Ñ2 B Da Dn1.n2 D1.4.6 T2 G2–4 M6 द्रौपदीस्वयंवर; M8 स्वयंवर; T1 संभव. — *Adhy. name*. K0.3.4 D3 राज्ञो नामानुकीर्तनं; T G1–3.6 क्षत्रियानु(G2 °प्रिय; G4 °याणां)वर्णनं. — *Adhy. no.* (figures, words or both): Dn2 185; D1 181; D4m 187; T1 184; T2 G2.4.6 136; G1.3 138; G5 M 137. — *S'loka no.*: Dn2 24 (Dn1 25); M8 26. — *Aggregate s'loka no.*: Dn2 6976.

## 178

1 Ś1 K (except K0) D1 S (except M5) om. उवाच. — a) B6 कुशलिनो (m as in text). — b) Ñ2.3 V1 B D (except D6) नरेन्द्राः (for समेताः); cf. 4d, 4c. Ñ1 °रं स्पर्धया प्रेक्ष्यमाणाः. — d) B6 सर्वे समापेतुर. Ś1 (sup. lin.) K1 अलंकृतेन; Ñ2.3 V1 B D (except D6) उदायुधास्ते.

2 a) S वीर्येण रूपेण (by transp.). K0.3 Ñ1 T1 G1 बलेन चैव. — b) Ñ2.3 V1 B1.2.3 Dn D1 शीलेन; B6 Da D2.4 तथैव (for धर्मेण). Ś1 K3 शीलेन; K2 धार्येण; Ñ2 V2 B1.6 D (except D6) वित्तेन; Ñ3 श्रुतेन; B2.4 धैर्याय; T2 धैर्येण (for चैवापि). G6 उत (for च). — c) Ś1 समृद्धवेगा; Ñ2.3 V1 B D समिद्धदर्पा. T1 G3 (by corr.) दशाधा प्रभिन्ना; M मदवेगलिप्ता.

3 a) Ś1 K1 स्पर्धये. Ś1 वीक्ष°; K प्रेक्ष्य°. — K0 om. 3bc. — b) K2–4 Ñ V2 B D M अभि- (for अपि). — c) K1 Ñ2.3 V1 Dn D2 T1 G2.1.6 ममैवेत्य°; Ñ1 समायास्य°. — d) Ñ1 सहसोद्तस्थुः; Ñ2.3 V1 B D °सोदतिष्ठन्. S नृपाः समुत्पेतुरथा(G1 समुत्पत्य तथा)सनेभ्यः.

4 b) Ñ1 T G (except G1) M2.4 जिहीर्षमाणा. — c) Ś1 K2 वरं श्रियं (for चका°).

5 a) G1 °बाणेन नि°; G2 °बाणादिभि°; M6–8 संक्षर-

साध्याश्च सर्वे मरुतस्तथैव
यमं पुरस्कृत्य धनेश्वरं च ॥ ६
दैत्याः सुपर्णाश्च महोरगाश्च
देवर्षयो गुह्यकाश्चारणाश्च ।
विश्वावसुर्नारदपर्वतौ च
गन्धर्वमुख्याश्च सहाप्सरोभिः ॥ ७
हलायुधस्तत्र च केशवश्च
वृष्ण्यन्धकाश्चैव यथा प्रधानाः ।
प्रेक्षां स्म चक्रुर्यदुपुंगवास्ते
स्थिताश्च कृष्णस्य मते बभूवुः ॥ ८
दृष्ट्वा हि तान्मत्तगजेन्द्ररूपा-
न्पञ्चाभिपद्मानिव वारणेन्द्रान् ।
भस्मावृताङ्गानिव हव्यवाहा-
न्पार्थान्प्रदध्यौ स यदुप्रवीरः ॥ ९
शशंस रामाय युधिष्ठिरं च
भीमं च जिष्णुं च यमौ च वीरौ ।
शनैः शनैस्तांश्च निरीक्ष्य रामो
जनार्दनं प्रीतमना ददर्श ॥ १०
अन्ये तु नानानृपपुत्रपौत्राः
कृष्णागतैर्नेत्रमनःस्वभावैः ।
व्यायच्छमाना ददृशुर्भ्रमन्तीं
संदष्टदन्तच्छदताम्रवक्त्राः ॥ ११
तथैव पार्थाः पृथुबाहवस्ते
वीरौ यमौ चैव महानुभावौ ।
तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे
कन्दर्पबाणाभिहता बभूवुः ॥ १२ C. 1. 7018 B. 1. 187. 12 K. 1. 202. 12

---

°जेनाभिनि°. — b) K0 कृष्णाहृतैस्; G3 कृष्णागतैस्. T2 G M1.2 तैः; M6-8 स्वैः (for ते). — c) Da D3.5.8 रंगोवतीर्णा. T G (except G1) °स्मजार्थे. — d) K3 द्वेष्यांश्च; Ñ2 द्वेष्यं हि; Ñ3.3 V1 B1(m as in text).3.6 D (except D5) द्वेषं च; T1 G3 द्वेष्याणि; G1.2 द्वेष्यान्वि- (for द्वेष्यान्हि). G1 च; G6 हि (for ऽपि). Da ते च; S सर्वे (for तत्र).

6 a) T G (except G1) च (for अथ). B6 आदित्यरुद्रा वसवोऽश्विनौ च. — c) S Da D3.4.5 विश्वे (for सर्वे). Ś1 K1 पितरस्तथैव. — d) T G3-6 धर्मं; G1 शक्रं (for यमं).

7 b) B (except B6) चारणा गुह्यकाश्च (by transp.). — c) K4 नारदतुंबरौ च; D2 T3 G3.6 नारदः पर्वतश्च. — d) Ñ3.3 B5 Da D1.4.6 सहसाप्स°; B3.5.6 Da D2 T1 सह चाप्स° (Da1 om. च); T2 G M सहिताप्स°.

8 a) K1 स; Ñ1 T2 G (except G6) M6-8 तु (for the first च). Ñ2.3 V1 B D (except D5) सजनार्दनश्च. — b) B6 Da D2 चापि (for चैव). Ś1 K1.2 Ñ2 V1 Dn D1 °प्रधानं. — c) S प्रेक्षांबभूवुर्. K4 युधि पांडवाश्च. — d) S हि (for च). Ñ Dn D1 महांतः (for बभू°).

9 a) Ñ B D तु (B6 च) (for हि). K3 मत्तगजेंद्रकल्पान्; D1 मत्तगजेंद्रविक्रमान्; G3 पांडवयोधमुख्यान्. — b) K0 B5 (m as in text) T2 G1 पंचाभिपद्मान्; K3 (by corr.) D5 पद्माभिपन्नान्; Ñ3 V1 °भिरूपान्; B1 (m as in text) Da Nilp पंचाति°; Dn3 °तिरुद्रान्; T1 Nilp °तिमत्तान्; G2-6 पद्माभिपन्नान्; M °भि(M6 °ति)पद्मान् (sic); Arjp (?) as in text. — d) Ś1 K Ñ2.3 B D कृष्णः प्रदध्यौ. Ñ2.3 B D (except D5) यदुवीरमुख्यः (for स यदु°). Ñ1 V1 पार्थान्ददर्शाथ यदु°.

10 a) Ś1 K3 Ñ B1.3 Dn D1 T2 स (for च). — b) Ñ V1 B5 Da D1.4 T1 G1 M स- (for the first च). K4 च यदुप्रवीरौ; S (except G3.4) यमजौ च वीरौ. — c) Ñ1 M3 तांश्च समीक्ष्य. Ñ2.3 V1 B D (except D5) तान्प्रसमीक्ष्य:. — d) Ñ1.2 V1 Dn1.n2 ददर्श ह.

11 G6 om. $11^{ab}$. — a) B5 अन्ये च; Da अन्येपि; T2 G1.6 नान्ये तु.· Ñ2.3 B D वीरा (for नाना-). — For $11^b$ V1 subst. 5b1 — c) Ñ B D (except D5) न तान्वै; V1 S भ्रमंतः (for भ्रमन्तीं). — d) Ñ2.3 B D (except D5) °नेत्राः; S संदष्टताम्रोज्ज्वलदंतवक्त्राः.

12 a) S वीराः (for पार्थाः). G6 पृथुबाहुवर्णाः. — b) S पार्थौ (G1 तथा; G2 पार्थौ) (for वीरौ). Ś1 K चापि (for चैव). K3 महाप्रभावौ. — c) G3 ते द्रौपदीं वीक्ष्य. — d) Ñ1 B (except B5) Da D2.4 °बाणानुगता. — After 12, G3.4 ins.:

1822* देवाश्च सर्वे सगणाः समेता-
स्तां द्रष्टुकामा वसवोऽश्विनौ च ।
रुद्राश्च सोमो वरुणो यमश्च
शक्रं पुरस्कृत्य धनेश्वरश्च ।
विश्वावसुर्नारदपर्वतौ च
देवर्षयश्चाप्सरसां गणाश्च ।
[ Cf. 6 and $7^{cd}$. ]

13 a) V1 सुरर्षि°. K0 च; B1m वै (for तत्).

देवर्षिगन्धर्वसमाकुलं त-
त्सुपर्णनागासुरसिद्धजुष्टम् ।
दिव्येन गन्धेन समाकुलं च
दिव्यैश्च माल्यैरवकीर्यमाणम् ॥ १३
महास्वनैर्दुन्दुभिनादितैश्च
बभूव तत्संकुलमन्तरिक्षम् ।
विमानसंबाधमभूत्समन्ता-
त्सवेणुवीणापणवानुनादम् ॥ १४
ततस्तु ते राजगणाः क्रमेण
कृष्णानिमित्तं नृप विक्रमन्तः ।
तत्कार्मुकं संहननोपपन्नं
सज्यं न शेकुस्तरसापि कर्तुम् ॥ १५
ते विक्रमन्तः स्फुरता दृढेन
निष्कृष्यमाणा धनुषा नरेन्द्राः ।
विचेष्टमाना धरणीतलस्था
दीना अदृश्यन्त विभग्नचित्ताः ॥ १६
हाहाकृतं तद्धनुषा दृढेन
निष्पिष्टभग्नाङ्गदकुण्डलं च ।
कृष्णानिमित्तं विनिवृत्तभावं
राज्ञां तदा मण्डलमार्तमासीत् ॥ १७

— b) S °यक्ष° (for °सिद्ध°). — d) Ñ B D (except D5) पुष्पैर् (for माल्यैर्).

14 a) Ñ1 शंखस्वनैर्. K0.3.4 °नादितं च. S समाहतैर्दुंदुभिभिश्च राजन्. — b) S रराज (for बभूव). — d) S °पणवाभि(G5 °वस्त; M °वानु)नादितं. — After 14, S ins.:

1823* समाजवाटोपरि संस्थितानां
मेघैः समन्तादिव गर्जमानैः ।
[ G5 गर्जितानां (for गर्ज°). ]

15 a) B6 D4 समेताः; G1 श्रमेण (for क्रमे°). — b) N B D कृतविक्रमास्तु (Ñ B6 Dn D1 °श्च); V1 गतविक्रमास्ते. — After 15ab, K3.4 Ñ V1 B D ins.:

1824* 1) सकर्णदुर्योधनशाल्वशल्य-
द्रौणायनिक्राथसुनीथवक्राः ।
कलिङ्गवङ्गाधिपपाण्ड्यपौण्ड्रा
विदेहराजो यवनाधिपश्च ॥
2) अन्ये च नाना नृपपुत्रपौत्रा
राष्ट्राधिपाः पङ्कजपत्रनेत्राः ।
किरीटहाराङ्गदचक्रवालै-
र्विभूषिताङ्गाः पृथुबाहवस्ते ।
अनुक्रमं विक्रमसत्त्वयुक्ता
बलेन वीर्येण च नर्दमानाः ॥
[ Cf. 1847*. — 1a) K3.4 B1.2 Da °शल्या. — K4 om. 1b and 1c. — 2a-(var.) 11a. — 2e) K4 यथाक्रमं; D2 अन्वाक्रमन्. — 2f) B5 Da D2.4 दर्पेण (for वीर्येण). Ñ1 वर्धमानाः (for नर्द°). ]
— After the above, K4 ins. 1827*. — d) Some MSS. स्तब्धं. Ś1 K1.2 Ñ V1 B D मनसा (for तरसा).

16 a) B Da D2.3.5 स्फुरि(B1 °र)ताग्ररोषा. — b) K0.2-4 M5-8 निष्पिष्य°; K1 M5 (inf. lin.) निकृष्य°; N V1 B D विक्षिप्य° (D5 विकृष्य°); T G M5 निष्पीड्य° (T2 निपीड्य°; G6 निष्पिष्ट°). — c) T1 पतिता च भूमौ (for धरणी°). — d) K1.4 दीनाश्च दृ°; K3 दीनाः प्रदृ°. Ś1 K2 Ñ3 विभग्नचित्ताः; D5 विभिन्नगात्राः. Ñ1 दृश्यंति हृत्य प्रविभग्नचित्ताः; Ñ2 V1 B Da Dn D1.2.4 यथाबलं शैक्ष्यगुणक्रमाश्च (B1.3m.4 Da1 D2 °क्रमाच; B5.6 °प्रधानाः); S दृश्यंति (T2 G1 M °न्त) तत्र प्रतिभग्नदर्पाः. — After 16, K2 Ñ1.2 V1 B D ins.:

1825* गतौजसः स्रस्तकिरीटहारा
विनिःश्वसन्तः शमयांबभूवुः ।;
while G1 ins.:

1826* पाञ्चालराजस्य सुता सखीभिः
दृष्ट्वा धनुःक्षोभमुदाररूपा ।
जहास राज्ञां बहुवीर्यभाजां
लीलाविलासाञ्चितलोचनान्ता ॥

17 b) K3 Ñ2.3 B3m.6 D विस्रस्तहाराङ्गदचक्रवालं (D5 °कुंडलं च); Ñ1 निक्षिप्त°; S विध्व(M °स्र)स्तनानाभरणाम्बरात्तं (T M5 °स्रक्; G2.4.6 स्रजः). — c) K3 Ñ2.3 V1 B D विनिवृत्तकामं; S (except T1) च निवृ°. — K4 ins. after 1824*: Ñ3 Dn D3.4.5, after 17:

1827* 1) सर्वान्नृपांस्तान्प्रसमीक्ष्य कर्णो
धनुर्धराणां प्रवरो जगाम ।
उद्धृत्य तूर्णं धनुरुद्यतं त-
त्सज्यं चकाराशु युयोज बाणान् ॥
2) दृष्ट्वा सूतं मेनिरे पाण्डुपुत्रा
भित्त्वा नीतं लक्ष्यवरं धरायाम् ।
धनुर्धरा रागकृतप्रतिज्ञ-
मत्यग्निसोमार्कमथार्कपुत्रम् ॥

तस्मिंस्तु संभ्रान्तजने समाजे
निक्षिप्तवादेषु नराधिपेषु ।
कुन्तीसुतो जिष्णुरियेष कर्तुं
सज्यं धनुस्तत्सशरं स वीरः ॥ १८ C. 1. 703 B. 1. 187. K. 1. 202.

इति श्रीमहाभारते आदिपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

3) दृष्ट्वा तु तं द्रौपदी वाक्यमुच्चै-
र्जगाद नाहं वरयामि सूतम् ।
सामर्षहासं प्रसमीक्ष्य सूर्यं
तत्याज कर्णः स्फुरितं धनुस्तत् ॥

[ $1^c$) $D_3$ तूर्णं धनुरुत्तमं च. — $2^b$) $D_3$ भित्वा लक्ष्यं लब्धवंतं च कृष्णां. — $3^c$) $K_4$ सूर्यजः (for सूर्यं). ]

— $K_4$ $Ñ_3$ Dn $D_{2.4.5}$ cont.: S ($G_3$ om. lines 5–10) ins. after 17:

1828* एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः ।
चेदीनामधिपो वीरो बलवानन्तकोपमः ।
दमघोषात्मजो वीरः शिशुपालो महामतिः ।
धनुरादायमानस्तु जानुभ्यामगमन्महीम् ।
ततो राजा महावीर्यो जरासंधो महाबलः ।
धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः ।
धनुषा पीड्यमानस्तु जानुभ्यामगमन्महीम् ।
तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान् ।
ततः शल्यो महावीर्यो मद्रराजो महाबलः ।
तदप्यारोप्यमाणस्तु जानुभ्यामगमन्महीम् ।

[ (L. 1) $D_2$ एवं तस्मिन्निवृत्ते तु क्षत्रियेषु च सर्वशः. — For lines 2–3 cf. lines 3–4 of 1810*. — (L. 2) $D_2$ om. line 2. — (L. 3) $K_4$ Dn $D_{2.4.5}$ $M_{6-8}$ दमघोषसुतो. $Ñ_3$ Dn $T_2$ G (except $G_2$) धीरः. $D_2$ अंतकोपमः; S (except $G_{3.4}$) महाद्युतिः. — After line 3, $T_1$ $M_{6-8}$ read (for the first time) line 6 (v. l.: $T_2$ राज्ञां समक्षतः for गिरिरिव°), repeating it in its proper place. — (L. 4) S तमप्या($M_{6-8}$ °ध्या)रोप्यमाणं तु माषमात्रेऽभ्यताडयत्. — After line 4, $T_1$ reads (for the first time) lines 7–8, repeating them in their proper place; while $T_2$ $G_{3.4.5}$ ins.:

1829* ताडितः स धनुष्कोट्या पपातोर्व्यां वियन्मुखः ।
संरंभात्क्रोशमात्रे तु राजानोऽन्ये भयातुराः ।

Moreover, $G_1$ ins. after line 4: $M_5$, after line 6: $T_1$ $G_1$ $M_{6-8}$, after 1828*:

1830* ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः ।
धनुरारोप्यमाणं तु रोममात्रेऽभ्यताडयत् ।

(After line 1 of 1830*, $T_1$ ins. line 5 of 1834*.)

— After line 5, S (except $G_3$ $M_5$) ins.:

1831* कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
मत्तवारणताम्राक्षो मत्तवारणवेगवान् ।

— (L. 6) $D_3$ om. line 6. $T_2$ $G_{1.2.4.5}$ $M_{5.6.7}$ आगम्य. For line 6, $M_8$ repeats line 4 (with the S reading). — After line 6, S (except $G_3$ $M_5$) ins.:

1832* धनुरारोप्यमाणं तु सर्षमात्रेऽभ्यताडयत् ।

— (L. 7) $T_1$ $G_4$ विध्यमानस्तु. T $G_{4-5}$ बाहुभ्याम्. — (L. 8) $D_3$ om. line 8. $G_5$ उत्थाय सहसा. $G_{2.4}$ $M_{6-8}$ स्वराष्ट्रमभि°. — $M_5$ om. line 9; $T_2$ $G_{2-5}$ $M_5$ om. line 10. — (L. 10) $T_1$ $G_1$ $M_{6-8}$ तमप्यारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत्. ]

— After 1828*, $T_1$ $G_1$ $M_{5.6-8}$ ins. 1830* ($T_1$ further ins. line 5 of 1834* after line 1 of 1830*). Then after 1830*, $T_1$ ins.:

1833* त्रैलोक्यविजयी कर्णः सत्त्वे त्रैलोक्यविश्रुतः ।
धनुषा सोऽपि निर्धूत इति सर्वे भयाकुलाः ।
एवं कर्णे विनिर्धूते धनुषान्ये नृपोत्तमाः ।
धनुर्दर्शनेऽपि तत्पश्चात्किं तत्र धनुषा कृतम् ।
दृष्ट्वा कर्णं विनिर्धूतं लोकवीरा नृपोत्तमाः ।
निराशा धनुषोद्धारे द्रौपदीसंगमेऽपि च ।
ततो दुर्योधनो राजा धार्तराष्ट्रः परंतपः ।
मानी दृढाक्षः संपन्नः सर्वैश्च नृपलक्षणैः ।
उत्थितः सहसा तत्र भ्रातृमध्ये महाबलः ।
विलोक्य द्रौपदीं हृष्टो धनुषोऽभ्याशमागमत् ।
स बभौ धनुरादाय शक्रश्चापधरो यथा ।
स तदारोपयामास तिलमात्रे ह्यताडयत् ।
आरोप्यमाणस्तद्राजा धनुषा बलिना तदा ।
मा स उत्थानमपतदङ्गुल्यग्रे स ताडितः ।
स ययौ ताडितस्तेन व्रीडन्निव नराधिपः ।

— After 1828*, $T_2$ $G_{2-5}$ ($T_2$ $G_5$ om. lines 2, 3, 5) ins.:

1834* तमप्यारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत् ।
स पपात महीं रङ्गादर्धयोजनदूरतः ।
तथैवागारस्वकं राज्यं पश्चादनवलोकयन् ।
ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः ।
धनुरभ्याशमागम्य तोलयामास तद्धनुः ।

# १७९

वैशंपायन उवाच ।

यदा निवृत्ता राजानो धनुषः सज्यकर्मणि ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ १
उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च ।
दृष्ट्वा संप्रस्थितं पार्थमिन्द्रकेतुसमप्रभम् ॥ २
केचिदासन्विमनसः केचिदासन्मुदा युताः ।
आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥ ३
यत्कर्णशल्यप्रमुखैः पार्थिवैर्लोकविश्रुतैः ।
नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ४
तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।
वटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ५
अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु ।
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ६
यद्येष दर्पाद्धर्षाद्वा यदि वा ब्रह्मचापलात् ।

तं चाप्यारोप्यमाणं तन्नोममात्रेऽभ्यताडयत् ।
[ Lines 4, 6 =(var.) 1830*. ]
This is followed in G3.4 by lines 1-6, and in G6 by lines 7-13, 15 of 1833*.

18 a) Ś1 K1 संप्रासजने. Ñ1 समीक्षन्; G3 समासे (for समाजे). — b) Ś1 निक्षिप्तनादेषु; K1 °दानेषु; Ñ1 °पादेषु; Ñ3 °चापेषु; [illegible] नि(G1 वि)क्षिप्तचापेषु; Cd विक्षिप्त°चादेषु. Ñ2.3 V1 B D (except D5) जनाधिपेषु. — c) Some MSS. स्रज्ञं. M6-8 समरं (for सशरं). K (except K1) V1 D5 S च; Ñ B5 Da Dn D1.4 प्र; B1.3.4 D2 नु- (for स). G3.4 धीरः. — After 18, T2 G6 ins.:

1835* ततो वरिष्ठः सुरदानवाना-
मुदारधीर्वृष्णिकुलप्रवीरः ।
जहर्ष रामेण स पीड्य हस्तं
हस्तं गतां पाण्डुसुतस्य मत्वा ॥
न जज्ञुरन्ये नृपवीरमुख्याः
संछन्नरूपानथ पाण्डुपुत्रान् ।
विना हि भीष्मं च यदुप्रवीरौ
धौम्यं च धर्मं सहसोदरांश्च ॥

In G6 this is followed by 1837*.

Colophon om. in G6. — *Major parvan*: T2 G M संभव° (for आदि°). — *Sub-parvan*: Ś1 K1-3 Ñ3 B Dn1.n3 Da D1.2.4.5 T2 G1-4 M5.6-8 द्रौपदीस्वयंवर; T1 M5 स्वयंवर. — *Adhy. name*: K0.3.4 D5 राज्ञां वैमनस्यं; T G1.2.4 क्षत्रियप्रति(T1 om. प्रति)निवर्तनं; M6-8 सज्यकर्मप्रतिहतिः. — *Adhy. no.* (figures, word or both): Dn3 T1 185; D1m 189; D5 136; T2 G3.4.5 137; G1.2 139; M 138. — *S'loka no.*: Dn 29; M5 26. — *Aggregate s'loka no.*: Dn1 7003.

## 179

1 Ś1 K (except K0) [illegible] om. उवाच. G6 om. — a) Ñ2.3 V1 B6 Da Dn °कर्मणः. — After 1a M5.6 ins.:

1836* तदा युधिष्ठिरो राजा संशयाज्जुममन्वशात् ।
गुरोरिङ्गितमाज्ञाय धर्मराजस्य धीमतः ।

— d) Dn1 G1 मध्ये जिष्णु°. — T1 ins. after 1: C (which om. colophon of adhy. 178 and this st. after 1835* (cf. v. l. 1. 178. 18):

1837* ततोऽवतीर्णे रङ्गस्य मध्यं पाण्डवमध्यमम् ।

2 a) Ś1 स्वधुन्वंत; K1 विधतुं ते (sic); Ñ1 विधुनान T1 G1.2 M विधून्वंतो. T2 G1.4.5 M वै (for च — d) K2 G6 °केतुमिव प्रभुं; D5 T1 °केतुमिवोत्थितं; C चंद्रकेतु°; M6-8 °केतुमिवोच्छ्रितं.

3 a) Ś1 सुमनसः. — b) K3 Ñ2.3 B5 Dn D1 मुदान्विताः. — d) Ñ1 S (except G3) बुद्धिचिंतकाः. — cd) T

4 a) Ñ2.3 B D (except D5) G1.2 क्षत्रियैः. — b) B6 Da D5 नासादितं बलवद्भिर्धनु° च; G2 [illegible] (for हि). G6 °तं बलवद्भीमधनु°.

5 a) T2 G3-5 च (for तु). — b) D1 प्राणेन। प्रकृत्या. Dn1 दुर्लभायसा; G3.4 दुर्बलेन च. — c) G3-6 वरमात्रेण; G1 वरमंत्रेण. — d) A few MSS. स (for सज्यं). — After 5, T2 G6 ins.:

1838* सज्यं चेदकृतवानेष वेद्धुं लक्ष्यं कथं भवेत् ।

6 a) T [illegible] (except G3.4) M5.6 अपहास्या; C.I as text. Ś1 K D5 भविष्यामो. — c) M6-8 °मतंरि — d) S (except G3) चापचापात्. Ś1 असमीक्षिते.

7 a) Ś1 K दर्पान्मोहाद्वा; [illegible] (except M5.6) दर्पादरा (by transp.). — b) D1.4(m)त्वथ वा (for यदि वा

प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ७
नावहास्या भविष्यामो न च लाघवमास्थिताः ।
न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ॥ ८
केचिदाहुर्युवा श्रीमान्नागराजकरोपमः ।
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ ९
संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते ।
शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् ॥ १०
न च तद्विद्यते किंचित्कर्म लोकेषु यद्भवेत् ।
ब्राह्मणानामसाध्यं च त्रिषु संस्थानचारिषु ॥ ११
अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ।
दुर्बला हि बलीयांसो विप्रा हि ब्रह्मतेजसा ॥ १२
ब्राह्मणो नावमन्तव्यः सद्वासद्वा समाचरन् ।
सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम् ॥ १३
एवं तेषां विलपतां विप्राणां विविधा गिरः । C. 1. 7040 B. 1. 188. K. 1. 203.

Ñ2.3 V1 B Da Dn D1.2 (अ)प्यथ ब्राह्मणचापलात्; T G (except G3) M6-8 यदि ब्राह्मणचा°. — d) Ś1 Cd मा गमः; M मा गमेत्.

8 Before 8, Ś1 K4 Ñ2.3 V1 B D (except D5) G3 ins. ब्राह्मणा ऊचुः; K3 विप्राः. — a) Ś1 K1.4 मावहास्याः; T G1.2.3 M नापहास्याः; G6 अपहास्या. — b) K2 मा (for न). B (except B6) D2 आगताः; D1 आश्रिताः. — c) Ś1 न चापि द्विष्ट°; D5 न च विद्विष°; S (except G1 M5) न च विद्वेष्य° (G1 M5.6-8 °प°). — After 8, T1 G2.4 ins.:

1839* केचिदाहुर्जयोऽस्माकं जयो नास्ति पराजयः ।
पराजयो जयो वा स्यात्कुर्योत्सज्यं धनुर्द्विजाः ।

9 a) K0 यदा; K3.4 यथा (for युवा). — b) K0.3.4 नागराजगतिर्युवा; S (except G1.2 M5) °वरो°. — c) G1 °स्कंधो महाबाहुर्. — d) Ñ3 B3.6 धैर्याच्च. — After 9, K4 Ñ V1 B D ins.:

1840* सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः ।

10 a) Ś1 K1 अस्मै; G6 तस्य (for अस्मिन्). Ś1 कस्मैचिद्; K (except K1) V1 D5 G3.4 कर्मैतद्. — b) Ś1 K2.4 T1 M5 उत्साहश्चानु°; K0 D5 उत्साहादनु°; K1 आरम्भ-श्चानु°. — c) K3.4 °त्साहात्; B1 T2 G (except G1) M °साहो (M5 lacuna).

11 K4 om. 11; G3 om. 11ab. — a) S (except M7.8; G3 om.) हि (for च). — b) Ñ3 B1 Da1 D3.4 त्रिषु (for कर्म). — c) Ś1 K0-3 D5 T1 असंसाध्यं. Ñ1 V1 सत्; T2 G M वा (M5 वै) (for च). — d) Ñ2.3 B D (except D5) नृषु (for त्रिषु). K2 त्रिषु सस्थाणुचारिषु; K3 नास्त्याद्यापि च बाडवाः; T1 चरेषु स्थावरेषु च; T2 G M हस्तु(G1 M त्रिषु)स्थास्नुचरिष्णु वा (G3 च; M3 षु). Cd cites (as in text) संस्थानचारिषु (= मरणधर्मकेषु).

12 b) K3 जिताहाराः. — c) K (except K1) Ñ1 B6 Da दुर्बलापि. Ñ1.3 V1 B1.3.6 Dn D1.2.3.5 दुर्बला अपि विप्रा हि. — d) Ñ2.3 V1 B D (except Da) बलीयांसः स्व(D4.5 सु)तेजसा (B6 विप्रा ब्राह्मणतेजसा).

13 a) Ñ2.3 V1 B (except B3) D (except D2.4.5) सदसद्वा. — c) Ś1 K1.3.4 दुःखं सुखं (by transp.); T G3.6 M2.4 सुख(M3 inf. lin. °खे)दुःखं. K1 Dn1 महद्रसं; Ñ1 V1 °ह्रस्व; Da °ह्राह्र. — d) K0.3.4 यत्कर्म (by transp.). — After 13, K (except K1) Ñ1(om. lines 1–2).3 D (except Da) ins.:

1841* जामदग्न्येन रामेण निर्जिताः क्षत्रिया भुवि ।
पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा ।
तस्माद्ब्रुवन्तु सर्वेऽत्र बटुरेष धनुर्महान् ।
आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः ।

[ (L. 1) Ñ3 Dn D1 युधि (for भुवि). — After line 2, K3 ins.:

1842* धन्वन्तृद्धिक्षयकरो वातापी भक्षितः पुरा ।
सर्वभक्षकृतो वह्निर्भृगुणा च महात्मना ।

— (L. 3) K3 D2 धनुर्महत्. ]

On the other hand, T1 G6 ins. after 13:

1843* धनुर्वेदे च वेदे च योगेषु विविधेषु च ।
न तं पश्यामि मेदिन्यां ब्राह्मणाद्योऽधिको भवेत् ।
मन्त्रयोगबलेनापि महतात्मबलेन वा ।
क्षोभयेयुरिमं लोकममुं वा द्विजसत्तमाः ।

14 Before 14, D2 S ins. वैशं°. V1 om. 14ab. — a) K (except K1) D5 प्रलपतां. — After 14ab, T1 ins.:

1844* समवर्तत तान्सर्वाञ्शृण्वन्देवेन्द्रनन्दनः ।

T1 cont.: G3.4 ins. after 14ab:

1845* अर्जुनः पाण्डवश्रेष्ठो धृष्टद्युम्नमथाब्रवीत् ।
एतद्धनुर्ब्राह्मणानां सज्यं कर्तुमलं नु किम् ।
तस्य तद्वचनं श्रुत्वा धृष्टद्युम्नोऽब्रवीद्वचः ।
ब्राह्मणो वाथ राजन्यो वैश्यो वा शूद्र एव वा ।
एतेषां यो धनुःश्रेष्ठं सज्यं कुर्याद्द्विजोत्तम । [5]
तस्मै प्रदेया भगिनी सत्यमुक्तं मया वचः ।
तस्य तद्वचनं श्रुत्वा प्रययौ ब्राह्मणैर्वृतः ।
ततः पश्चान्महातेजाः पाण्डवो रणदुर्जयः ।

अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ॥ १४
स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ।
प्रणम्य शिरसा हृष्टो जगृहे च परंतपः ॥ १५
सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्धसंख्यान् ।
विव्याध लक्ष्यं निपपात तच्च
छिद्रेण भूमौ सहसातिविद्धम् ॥ १६
ततोऽन्तरिक्षे च बभूव नादः
समाजमध्ये च महान्निनादः ।
पुष्पाणि दिव्यानि ववर्ष देवः
पार्थस्य मूर्ध्नि द्विषतां निहन्तुः ॥ १७
चेलावेधांस्ततश्चक्रुर्हाहाकारांश्च सर्वशः ।
न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः ॥ १८
शताङ्गानि च तूर्याणि वादकाश्चाप्यवादयन् ।
सूतमागधसंघाश्च अस्तुवंस्तत्र सुस्वनाः ॥ १९
तं दृष्ट्वा द्रुपदः प्रीतो बभूवारिनिषूदनः ।
सहसैन्यश्च पार्थस्य साहाय्यार्थमियेष सः ॥ २०
तस्मिंस्तु शब्दे महति प्रवृत्ते
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
आवासमेवोपजगाम शीघ्रं
सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ २१

---

— c) Many MSS [ऽ]भ्यासे

15 a) K1 स धनुस्तत् (by transp ) — c) Ñ2 3 V1 B D देव (for हृष्टो) — After 15c, K4 Ñ2 3 V1 B D ins

1846* ईशान वरद प्रभुम् ।
कृष्णं च मनसा कृत्वा

[ (L 1) K4 D4 शिव (for प्रभु) — (L 2) B1 ध्यात्वा (for कृत्वा) Ñ3 विष्णुं च मनसा दृष्ट्वा ]

— d) Ś1 K1 2 च परंतप, K4 B1 3 5 D3 धनुरर्जुन , Ñ2 V1 B6 Da Dn D1 4 5 चार्जुनो धनु , Ñ3 धनुरुत्तम — After 15 K4 Ñ V1 B D ins

1847* यत्पार्थिवै रुक्मसुनीथवक्र-
राधेयदुर्योधनशल्यशाल्वैः ।
तदा धनुर्वेदपरैर्नृसिंहैः
कृतं न सज्यं महतोऽपि यत्नात् ।
तदर्जुनो वीर्यवतां सदर्प-
स्तदैन्द्रिरिन्द्रावरजप्रभावः ॥

[ Cf 1834* — a) K4 उग्र°; B1 3 Da Dn1 D1 4 रश्मि° (for रुक्म°) — b) Da Dn1 °शाल्वशल्यै (by transp ) — e) K4 पुरस्तात्; B1 2 3 Da D4 प्रवर्ह° (for सदर्पं ) ]

16 a) Some MSS सज्ज K4 Ñ3 D2 स; B6 Da प्र (for च) Ñ1 D4 [ऽ]थ निमेषमात्रात् (for निमिषा°) — c) Some MSS लक्ष — d) K1 2 B6 D1 4 °भिविद्धः D3 G2 निविद्ध

17 a) Some MSS अतरीक्षे B6 प्र (for च) — b) G5 (hapl ) om 17b T2 G1–4 M (except M5) बभूव नाद (cf a) — c) K2 ववर्षु देवा — After 17, Ñ1 3 Dn ins the S reading of 18ab (v l चेलानि for चलांश्च)!

18 ab) Cf v 1 17 also V1 B6 कोलाहल; B1 2 3 m e D विलक्षिता (D2 विलज्जिता , D4 विविक्षिता) (for चेलावेधान्) B3 तत्र चक्रु , D1 तत सर्वे Cd cites चेलावधूत (=वस्त्रभ्रमण) S च(G3 4 चै)लांश्च (G1 °स्तु) विव्यधु(G3 दुधुवु)स्तत्र ब्राह्मणाश्च सहस्रश — After 18ab, T1 G6 ins

1848* ननन्दुर्नृतुश्चात्र धून्वन्तो व्यजनानि च ।;

while G2 4 ins

1849* नृत्यन्तोऽभिमुखा रामा दर्शयन्तो द्विजावलिम् ।
क्ष्वेडन्तश्च हसन्तश्च विधुरिव जटाधरा ।

— c) B3 om नि D3 निपेतु , T2 G2 व्यपतन्; G5 ह्यपतन्

19 a) K4 सगीतानि च; T1 G6 वादानि चैव; G1 2 4 मृदङ्गानि च, Cd as in text V1 शुभानि (for तूर्यां ) — b) Ñ B D (except D4) समवादयन्, S (except M6 8) चाप्य(T1 °प्र)वादयन् — d) Ś1 K1 2 4 Ñ V1 B D अभ्य(D2 स्य)स्तुवन्; K3 स्तुवतस् Ś1 सुदता°; K1 सघश ; N V1 B D (except D2) G1 सुस्वरा ; T1 निस्वनाः G3 निस्वना , G2 4 M6 सुस्वन; G1 M1 6–8 पोडय

20 S reads 20 after 23 (G1 after 1853*) — a) K1 B (except B6) Da D4 तद्दृष्ट्वा; G1 स तदा — b) Ś1 Ñ — b) Ñ2 3 V1 B D M6 बभूव रिपुसूदन — c) V1 B1 Dn1 T1 G3–6 M1 3 सह सैन्यैश्च (G3–6 °न्यै स); K2 सह सैन्येन; B6 Da D2 4 ससैन्यश्चैव; G2 प्रहस्यान्ये स

21 a) K0 3 4 M6 8 च (for तु) Ñ B D T1 G प्रवृद्धे — c) Ś1 K1 आवासम चोप°; T1 आवासमेवाभि° K (except K1) राजन् (for शीघ्रं) — d) G1 पार्थो (for सार्धं)

22 a) Da T1 च (for तु) Some MSS सर्व — After 22ab, K4 ins.

विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।
आदाय शुक्लं वरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ २२

स तामुपादाय विजित्य रङ्गे
द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गान्निरक्रामदचिन्त्यकर्मा
पत्न्या तया चाप्यनुगम्यमानः ॥ २३

इति श्रीमहाभारते आदिपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

## १८०

वैशंपायन उवाच ।
तस्मै दित्सति कन्यां तु ब्राह्मणाय महात्मने ।
कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात् ॥ १
अस्मानयमतिक्रम्य तृणीकृत्य च संगतान् ।
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् ॥ २
निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते ।
न ह्यर्हत्येष सत्कारं नापि वृद्धक्रमं गुणैः ॥ ३
हन्मैनं सह पुत्रेण दुराचारं नृपद्विषम् । C. 1. 7004 B. 1. 189. 4 K. 1. 204. 5

---

1850* चिक्षेप कण्ठे मुदिताशुंनस्य
तत्पश्यतोऽनेकजनस्य देवी ॥
while S ins.:
1851* स्वभ्यस्तरूपापि नवेव नित्यं
विनापि हासं हसतीव कान्त्या ।
मदाद्दतेऽपि स्खलतीव भावै-
र्वाचं विना व्याहरतीव दृष्ट्या ॥
— c) Ś1 °क्लं नवमाल्यदाम; Ko.3.4 Ñ V1 B D G2.4.5 M शुक्लांबरमाल्यदाम; K1 °क्लं वरदाममाल्यं. — d) T2 G1.2.3 जगाह कुंती°. — After 22, T G3-5 M read 20; while D4 (marg. sec. m.) ins.:
1852* तदाम पौर्व्यं क्षितिपालमध्ये
न्यस्तं तया तस्य कण्ठे तदानीम् ।
D4 (om. 1cd and 2ef) cont. (marg. sec. m.): G1 (om. 2ef) ins. after 22: T G3-5 (T2 G5 om. 2ef), after 20: G6 (om. st. 1), after 23:
1853* 1) गत्वा तु पश्चात्प्रसमीक्ष्य कृष्णा
पार्थस्य वक्षस्यविशङ्कमाना ।
क्षिप्त्वा तु तत्पार्थिवसंघमध्ये
वराय वव्रे द्विजवीरमध्ये ॥
2) शचीव देवेन्द्रमथाग्निदेवं
स्वाहेव लक्ष्मीश्च यथाप्रमेयम् ।
उमेव सूर्यं मदनं रतीव
महेश्वरं पर्वतराजपुत्री ।
रामं यथा मैथिलराजपुत्री
भैमी यथा राजवरं नलं हि ॥
[ 2b) G3.4.6 यथा मुकुंदं- ]

On the other hand, G6 ins. after 22:
1854* समेत्य तस्योपरि सोत्ससर्ज
समागतानां पुरतो नृपाणाम् ।
विन्यस्य मालां विनयेन तस्थौ
विहाय राज्ञः सहसा नृपात्मजा ॥
23 Ko om. 23ab. — c) K1-3 T G1.2 M निराक्रामद्. K (Ko om.) अचिंत्य राज्ञः. — After 23, G6 ins. st. 2 of 1853*.

Colophon om. in B5. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K1.3 Ñ3 B1.4.6 Dn1.n2 T2 G1.3.4 M5 द्रौपदीस्वयंवर; Dn3 D1.2.3 M3 स्वयंवर; T1 संभव and द्रौपदीस्वयंवर. — *Adhy. name:* Ko.2-4 D5 G2 लक्ष्य(K3 °क्ष)वेधः; T2 G4 लक्षवधः; G3 लक्षणवेधः; M3 लक्षनिपातनं. — *Adhy. no.* (figures, words or both): Dn3 T1 186; D3m 190; D5 137; T2 G 138 (G1.3 140); M 139. — *S'loka no.:* Dn 28; M3 25. — *Aggregate s'loka no.:* Dn1 7031.

### 180

1 Ś1 K (except Ko) D2.4 S om. उवाच (G3 om. the ref.). — a) Ko D5 तां कन्यां; K3-4 कन्यां तां. — b) Ñ2.3 B D (except D5) तदा नृपे (D1 °प) (for महा°).
2 Before 2, Ñ3 V1 B D2 ins. पार्थिवा ऊचुः; T1 क्षत्रियाः. — D2 transp. 2ab and 2cd. G2 om. 2c-4d.

अयं हि सर्वानाहूय सत्कृत्य च नराधिपान् ।
गुणवद्भोजयित्वा च ततः पश्चाद्विनिन्दति ॥ ४
अस्मिन्राजसमावाये देवानामिव संनये ।
किमयं सदृशं कंचिन्नृपतिं नैव दृष्टवान् ॥ ५
न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥ ६
अथवा यदि कन्येयं नेह कंचिद्बुभूषति ।
अग्नावेनां परिक्षिप्य याम राष्ट्राणि पार्थिवाः ॥ ७
ब्राह्मणो यदि वा बाल्याल्लोभाद्वा कृतवानिदम् ।
विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथंचन ॥ ८
ब्राह्मणार्थं हि नो राज्यं जीवितं च वसूनि च ।
पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनम् ॥ ९
अवमानभयादेतत्स्वधर्मस्य च रक्षणात् ।
स्वयंवराणां चान्येषां मा भूदेवंविधा गतिः ॥ १०
इत्युक्त्वा राजशार्दूला हृष्टाः परिघबाहवः ।
द्रुपदं संजिघृक्षन्तः सायुधाः समुपाद्रवन् ॥ ११
तान्गृहीतशरावापान्क्रुद्धानापततो नृपान् ।
द्रुपदो वीक्ष्य संत्रासाद्ब्राह्मणाञ्शरणं गतः ॥ १२
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान् ।
पाण्डुपुत्रौ महावीर्यौ प्रतीयतुररिंदमौ ॥ १३

---

— ᵉ) M8 कन्यां तु (for विप्राय). — After 2, Ś1 K Ñ1 ins.:

1855* अवज्ञायेह वृद्धत्वं कालिका विनिपात्यते ।
[ Cf. 1856*. — K0 क्षत्रं तु; K2.3 वृद्धं तु; K4 Ñ1 वृद्धांस्तु. Ś1m फलकाले निपात्यते; K0 बालबुद्धिर्नृपाधमः; K1 (corrupt) फलिकाले निपोत्यते (cf. Ś1m); K4 कालकावमपात्यये. ]

On the other hand, Ñ2.3 V1 B D ins. after 2:

1856* अवरोप्येह वृक्षं तु फलकाले निपात्यते ।
(cf. 1855*); and, finally, T1 G2 ins.:

1857* अवज्ञायेत नृपतः कार्यं तेन महात्मना ।
[ Cf. 1855*. G2 °ज्ञायेह — महात्मनां. ]

3 G1 om. 3 (cf. v. l. 2). — ᵃ) Ś1 K G2 ते (K1 तं) हन्मैनं (K2.3 हन्यैनं); D2 T2 G2 निहत्यैनं; T1 हनामैनं; G3-4 M6-8 निहन्त्यैनं. — ᵇ) Ś1 (by corr.) K1 मद्दन्यते (for न म°). T1 यो ह्यस्मानवमन्यते. — D2 om. 3ᶜ–4ᶠ. — ᶜ) Ś1 K1.2.4 संस्कारं; Ñ B Da Dn D1.4 संमानं (for सत्कारं). T1 G2 न चार्हत्येष स°; T2 G3-5 M नायमर्हति (M8 न चायमर्हः) स°. — ᵈ) T1 G2 न हि; T2 G3-5 M न च (for नापि). K4 वृद्धसमो; Ñ2 V1 B (except B2) M6-8 °तमो; D1.4 वृत्तसमं; G2 वृद्धो मतो.

4 G1 om. 4ᶜᵈᵉᶠ; D2 om. 4 (cf. v. l. 2, 3). — ᵃ) K3 T1 G3-5 M (except M8) हत्यैनं. — ᵇ) Ñ1 B1.4 D2 दुरात्मानं; G1 नृपाधमं. — ᶜ) T2 G2.3 M अयं सर्वानिहाहूय. — ᵈ) B2 D4 यथाविधि (for नरा°). — ᵉ) Ś1 T1 G2 M8 तु; Ñ2.3 B Da Dn D1.4 भक्तं; G2 अपि (for च). — ᶠ) Ñ2.3 V1 B D (except D2; D2 om.) पश्चाच्च मन्यते.

5 ᵃ) T2 G (except G2) °वाये; M2.5 °वापे; M6-8 °वासे; Cd as in text. — ᵇ) Ś1 (sup. lin. as in text) K0 अपि (for इव). Da (erroneously) Arjp Cd संनये (as in text); Arj. (comm.) संसदि. — ᶜ) Ś1 K (except K3) B (except B1) D2.4.5 T G किंचित्. — ᵈ) Ś1 K1.2.4 D2 नृपतिः. Ś1 K0.3 Ñ1 नोपप; K1.2.4 T1 नो न; T2 G M नात्र (for नैव).

6 ᵃ) Ñ1 नैव; T1 न हि (for न च). — ᵇ) T2 वरणे स्त्रियः. — ᶜ) Ś1 स्वयंवरं तु क्षत्राणाम्. — ᵈ) D4 इत्येवं प्र°.

7 ᵇ) Ñ2.3 V1 B D (except D2) न च; M6-8 न हि (for नेह). K4 Da1 D2.5 G1.6 किंचित्. — ᶜ) S क्षिप्त्वा प्रवि(G1.3-5 °ति)श्यैनां (G2 °श्येमां). — ᵈ) Ś1 K1 D4 Da Dn2 D5 यामो.

8 ᵃ) Ñ1 V1 B2 Dn1.n2 D1.4 यदि चापल्यात्. — ᵇ) S (except T1 G2.4.6) मोहाद्वा. — ᵈ) M8 नैव वध्यः.

9 ᵃ) T G1.2 M च (for हि). — ᵇ) Ñ1 V1 D4 हि (for the first च). — K0 om. 9ᶜ–10ᵇ. — ᵉ) M2.5 यत्किंचित्.

10 K0 om. 10ᵃᵇ (cf. v. l. 9). — ᵃ) D1.4.5 M8 अपमान°. K2 त्वेतत्; K3 चैतत्; Ñ1 त्वेव; Ñ2.3 V1 B D M8 चैव; T1 G2 रोषात्; T2 G1.3.5 राज्ञो; G2 M1.5-8 खेदं. G4 राजन् (for एतत्). — ᵇ) K3 कारणात् (for रक्ष°); K4 धर्मस्येव च रक्ष°; T1 G1.6 स्वधर्मपरिरक्ष°. — ᶜ) K1 सर्वेषां; Ñ2.3 V1 B D (except D2) अन्ये° (for चान्ये°).

11 Before 11, T2 G3-5 M ins. वैशं°. — ᵇ) K3 प्रहृष्टाः; B हृष्टाः (G1 क्रुद्धाः) (for हृष्टाः). — ᶜ) K1 Ñ2.3 V1 B D G1 तु (K4 G1 सं; D1 तं) जिघांसः (for संजिघृ°). — ᵈ) T1 पार्थिवाः सायुधा मन्त्रन्.

12 ᵃ) K0.4 D2 G1 °शरासनान्; T1 G1.3 °शरासनान्; Cd as in text. — ᵇ) Ñ2.3 V1 B D (except D2) क्रुद्ध

ततः समुत्पेतुरुदायुधास्ते
महीक्षितो बद्धतलाङ्गुलित्राः ।
जिघांसमानाः कुरुराजपुत्रा-
वमर्षयन्तोऽर्जुनभीमसेनौ ॥ १४
ततस्तु भीमोऽद्भुतवीर्यकर्मा
महाबलो वज्रसमानवीर्यः ।
उत्पाट्य दोर्भ्यां द्रुममेकवीरो
निष्पत्रयामास यथा गजेन्द्रः ॥ १५
तं वृक्षमादाय रिपुप्रमाथी
दण्डीव दण्डं पितृराज उग्रम् ।
तस्थौ समीपे पुरुषर्षभस्य
पार्थस्य पार्थः पृथुदीर्घबाहुः ॥ १६
तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धे-
र्जिष्णोः सहभ्रातुरचिन्त्यकर्मा ।
दामोदरो भ्रातरमुग्रवीर्यं
हलायुधं वाक्यमिदं बभाषे ॥ १७
य एष मत्तर्षभतुल्यगामी
महद्धनुः कर्षति तालमात्रम् ।
एषोऽर्जुनो नात्र विचार्यमस्ति
यद्यस्मि संकर्षण वासुदेवः ॥ १८ C. 1 7080 B. 1 189. K. 1 20

T G2 M द्रुत, G1 3-5 द्रुप, G6 भृश (for नृपान्) — Ś1 K1 om. 12c-13b, D1 om 12c-13d, K3 reads 12cd after 13 — After 12, D4 (marg sec m) S ins

1858* न भयान्नापि कार्पण्यान्न प्राणपरिरक्षणात् ।
जगाम द्रुपदो विप्रान्शमार्थी प्रत्यपद्यत ।

[ (L. 2) D4 शमार्थं, T1 G3 5 शमार्थे, G6 क्षेमार्थी ]

13 Ś1 K1 om 13ab, D1 om 13 (cf v l 12) — b) M3 कुञ्जरान् (for वारणान्) — c) K3 महावीरौ, Ñ2 3 V1 B D (except D5, D1 om) महेष्वासौ — d) Ś1 अरिंदम Ñ V1 B (except B6) Dn D2 प्रतियातावरि°, Da D4 प्रयातावरिमर्दनौ Cd cites प्रतीयतुर् (as in text) — After 13 K3 reads 12cd (cf v l 12)

14 a) T1 तत समासेदुर्, G6 तत समानेदुर् — b) Ś1 महीभृतो N4 3 V1 B (except B6) Dn बद्धगोधाङ्गुलि° — c) S (except T1 G6) °सिंहौ — d) Ñ1 अवर्षयन्नर्जुन°, G2 ववर्षुरितेर्जुन°

15 a) N3 V1 B D T1 G3 5 M3 °भीमकर्मा (D5 °भीमविक्रमो), Ñ3 °घोरकर्मा — b) Ś1 K1 वज्रि°, Ñ1 2 B6 D2 5 S वेग (T1 °देह), Ñ3 V1 B1 3 5 Da Dn D1 °सार — d) Some MSS. नि पत्रया°

16 a) T2 G स (G6 sup lin त as in text) — b) Ś1 K (except K4) B1 (m as in text) D5 M2 3 उग्र — c) T1 पुरुषशार्दूल (for पुरुष°) — d) N3 B (except B3) पृथ्वायतास (for पार्थस्य पार्थ) — After 16, K0 ins

1859* भीम उवाच ।
रे भूभुजो यदि भुवोल्लसित न किंचि
त्तत्किं स्पृहाजनि सुता प्रति पार्षतस्य ।
जज्ञे स्पृहाथ कथमागतमागत वा
प्राणाधिके धनुषि तत्कथमाग्रहोऽभूत् ॥
कस्य द्रोणो धनुषि न गुरु स्वस्ति देवप्रसाद
मन्दाभ्यास कुरुपतिरयं श्रीसमृद्धैर्विलासै ।
रे कर्णाद्या शृणुत मधुरां ब्राह्मणस्याशु वाणीं
राधा यत्र रचयत पुनर्विद्धमप्यस्तविद्धम् ॥,

while T1 G6 ins

1860* 1) तदन्तरे धर्मसुतोऽपि गत्वा
विज्ञाय कुन्तीं कुशला क्षणेन ।
आगम्य तस्थौ सह सोदराभ्या
पुरुषर्षभाभ्या सह वीरमुख्य ॥
2) अथाब्रवीज्जिष्णुरुदारकर्मा
मा सिंहनादान्कुरु पूर्वजेह ।
मा घोरता दर्शय शत्रुमध्ये
साधारण योधय तावदार्य ॥

[ 1d) G6 पुरुषप्रवीर (for सह वीर°) — 2a) G6 तदाब्रवीत् ]

On the other hand, Ñ2 3 V1 B D (except D1, 2 5) ins after 16

1861* तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धि
र्जिष्णु स हि भ्रातुरचिन्त्यकर्मा ।
विसिस्मिये चापि भय विहाय
तस्थौ धनुर्गृह्य महेन्द्रकर्मा ॥

[ ab)-(var) 17ab — a) Ñ3 transp प्रेक्ष्य and कर्म ]

17 a) N3 transp प्रेक्ष्य and कर्म (cf v l 1861*) K (except K1) Ñ V1 B D T1 G6 °मनुष्यबुद्धिर्

18 G2 (hapl) om 18 — Before 18, Ś1 ins श्रीकृष्ण, Ñ3 D5 वासुदेव उ° — a) Ñ V1 B D T1 G6 सिंहर्षभखेल(Ñ1 °मत्त D5 °तुल्य, T1 °दर्प, G6 °हस)गामी — b) T1 महाधनु — c) T1 विचारणास्ति

19 a) Ś1 K1 3 Ñ1 D5 यथैव, K0 यथैव; K2 4 यथैक, N2 3 V1 B Da Dn D1 2 4 G3 यस्त्वेष Ś1 K0 1, 4 Ñ2

य एष वृक्षं तरसावरुज्य
राज्ञां विकारे सहसा निवृत्तः ।
वृकोदरो नान्य इहैतदद्य
कर्तुं समर्थो भुवि मर्त्यधर्मा ॥ १९

योऽसौ पुरस्तात्कमलायताक्ष-
स्तनुर्महासिंहगतिर्विनीतः ।
गौरः प्रलम्बोज्ज्वलचारुघोणो
विनिःसृतः सोऽच्युत धर्मराजः ॥ २०

यौ तौ कुमाराविव कार्तिकेयौ
द्वावश्विनेयाविति मे प्रतर्कः ।
मुक्ता हि तस्माज्जतुवेश्मदाहा-
न्मया श्रुताः पाण्डुसुताः पृथा च ॥ २१

तमब्रवीन्निर्मलतोयदाभो
हलायुधोऽनन्तरजं प्रतीतः ।
प्रीतोऽस्मि दिष्ट्या हि पितृष्वसा नः
पृथा विमुक्ता सह कौरवाग्र्यैः ॥ २२

इति श्रीमहाभारते आदिपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

V1 B3 Dn D1.2 तरसावभज्य; K3 Ñ2 B3 D1 °सा विभज्य; Ñ1 B1.6 Da G3 °सावरुह्य; T1 G3 °सा विरुज्य; G6 °सावरुध्य. — ᵇ) Ñ2.3 V1 B1.6 D (except D5) राज्ञां निकारे. Ś1 K प्रवृत्ते; Ñ V1 Dn D1.2.6 प्रवृत्तः; Da -भिवृत्तः; G6 निरुद्धः. — ᶜ) N (except Ś1 K1) वृकोदराद्यान्य. Ś1 K Ñ2 D5 T1 G6 इहैतदन्यः. — ᵈ) T2 G (except G6) युधि (for भुवि). Ñ2.3 V1 B D (except D5) °र्थः समरे पृथिव्यां.

20 ᵇ) D1.2.5 विभुर्; T1 G1 तथा (for तनुर्). Ś1 K1 महासिंहगतिर्; K0.3.4 D5 महान्सिंह°. T2 G2 कुकमंहासिंह°. G3 *inf. lin.* विभाति; G6 नृवीरः (for विनीतः). — ᶜ) G6 धीरः (for गौरः). S प्रचंडोज्ज्वल°. — ᵈ) Ñ2.3 V1 B D धर्मपुत्रः.

21 ᵇ) K1 Da T2 G2–5 तावश्विनेयौ; M (except M7) द्वावाश्विनेयौ. Ś1 K2–4 Ñ2.3 V1 B D G1 वितर्कः. Ñ1 द्वावश्विनौ तावपि मे प्र°. — ᶜ) G1 जतुगेहदा°. — After 21, G6 (which om. 22) ins. 1862* (om. 1ᵃᵇ).

22 G6 om. 22. — ᵃ) Ñ V1 B1.3 D (except D1) निर्जलतोयदाभो; S (except T1; G6 om.) तोयदनिर्मलाभो (G3 °लांगो; M6–8 °लाभं). — ᶜ) K1 Ñ2 V1 B (except B3) D (except Da) T दृष्ट्वा; G3.4 दृष्टा; M6 दृष्ट्या (for दिष्ट्या). S (except T1; G6 om.) च (for हि). Ñ1 °स्वसा तु; Ñ2.3 V1 D (except Da) °स्वसारं; B3 °स्वसा च. — ᵈ) Ñ2 V1 D (except Da D1) पृथां विमुक्तां; B3 पृथा च मुक्ता. Ñ2 B1.3 D5 G1.3 कौरवाग्रैः. — T1 ins. after 22: G6 (which om. 22), after 21 (om. 1ᵃᵇ):

1862* 1) आस्ते किमर्थं पुरुषोत्तमेह
योद्धुं समागच्छ न पर्यवेयुः ।
यथा नृपाः पाण्डवमाजिमध्ये
तमब्रवीच्चक्रधरो हलायुधः ॥
2) बलं विजानन्पुरुषोत्तमस्तदा
न कार्यमार्येण च संभ्रमस्त्वया ।
भीमानुजो योधयितुं समर्थ
एको हि पार्थः स सुरासुरान्बहून् ॥
3) अलं विजेतुं किमु मानुषान्नृपान्
साहाय्यमस्मान्यदि सव्यसाची ।
स वाञ्छति स्म प्रयताम धीर
पराभवं पाण्डुसुता न यान्ति ॥

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0.1.3 Ñ2 B Da Dn1.n2 D1.2.6 T2 G1.2.4 M5.6–8 द्रौपदीस्वयंवर; K4 M5 स्वयंवर; T1 संभव. — *Adhy. name:* K4 जिष्णुवाक्यं; G2 कृष्णवाक्यं; D5 लक्ष्यवेधो राजानुसूया; T2 G1.3.4 वासुदेवागमनं (G3.4 °गमः). — *Adhy. no.* (figures, words or both): T2 G 139 (G1.2 Dn2 T1 187; Dam 191; D5 138; T2 G 139 (G1.2 141); M 140. — *S'loka no.:* Dn M5 24. — *Aggregate s'loka no.:* Dn2 7055.

## 181

1 Ś1 K (except K0) Da2 D2.4 S om. उवाच. — ᵃ) K3 °नि च पु°; T1 G6 °स्यपु°; G1.2 M °नि विप्°. — ᵇ) Da °र्षभान्. — ᶜ) Ñ V1 B Dn D1.2.6 G1 ऋषुले धीर; Da नवावु धीर; T2 G1–3.5.6 ऋषुः संभं (G3.6 °भो). T1 ऋषुः परस्परं सर्वे. T2 G1.2.3.6 कर्तव्यं (G6 °व्यः!). T1 ऋषुः परस्परं सर्वे. — ᵈ) Ñ1 प्रति- (for पर्य). T1 G6 रिपून्; M6–8 यौः (for परान्).

2 ᵃ) Ś1 K0–3 मानेव (for तानेव). — ᵈ) K3 स्वयं (for नृपं). Ñ1.2 V1 B3 Dn D1 G1–3 M1.2 विप्रा; D1.2 विप्रं.

# १८१

वैशंपायन उवाच ।
अजिनानि विधुन्वन्तः करकांश्च द्विजर्षभाः ।
ऊचुस्तं भीर्न कर्तव्या वयं योत्स्यामहे परान् ॥ १
तानेवं वदतो विप्रानर्जुनः प्रहसन्निव ।
उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ॥ २
अहमेनानजिह्माग्रैः शतशो विकिरञ्शरैः ।
वारयिष्यामि संक्रुद्धान्मन्त्रैराशीविषानिव ॥ ३
इति तद्धनुरादाय शुल्कावाप्तं महारथः ।
भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ॥ ४
ततः कर्णमुखान्क्रुद्धान्क्षत्रियांस्तान्रणोत्थितान् ।
संपेततुरभीतौ तौ गजौ प्रतिगजानिव ॥ ५
ऊचुश्च वाचः परुषास्ते राजानो जिघांसवः ।
आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः ॥ ६
ततो वैकर्तनः कर्णो जगामार्जुनमोजसा ।
युद्धार्थी वाशिताहेतोर्गजः प्रतिगजं यथा ॥ ७
भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ।
दुर्योधनादयस्त्वन्ये ब्राह्मणैः सह संगताः ।
मृदुपूर्वमयत्नेन प्रत्ययुध्यंस्तदाहवे ॥ ८
ततोऽर्जुनः प्रत्यविध्यदापतन्तं त्रिभिः शरैः ।
कर्णं वैकर्तनं धीमान्विकृष्य बलवद्धनुः ॥ ९ C. 1. B. 1. 190. K. 1. 205.

---

3 a) K (except K1) D4 T G एतान् (for एनान्). — c) Ś1 K1.4 G2 संक्रुद्धो. — d) K2 °विषोपमान्.

4 a) B1.3 D2 T G इत्युक्त्वा; M3 ततस्तद्. Ñ1.2 V1 B D (except D5) आनम्य (Ñ2 B3 °यम्य; D4 °क्रम्य). — b) Ś1 K Ñ1.2 V1 B6 D (except D2.4) °बलः (K0.3-4 °बलं) (for °रथः). — K3 om. 4c–6d. — After 4, K4 D5 ins.:

1863* तयोस्तत्राभवद्युद्धं विक्रान्तैः क्षत्रियर्षभैः ।
दैत्यदानवसंघैश्च विष्णुवासवयोरिव ।
वृक्षपातैर्भीमसेनः शरजालैर्धनंजयः ।
जघान नरमुख्यांस्तान्ये तत्र पुरतः स्थिताः ।
पाणिनाथ गृहीतेन दक्षिणेन वृकोदरः ।
जघान वीरान्वृक्षेण वामेनाद्भुतमाचरन् ।
हस्तिना हस्तिनं जघ्ने रथेन रथमुत्तमम् ।

K4 cont.:

1864* अश्वेनाश्वं जघानाथ नरेण च तथा नरम् ।
तदद्भुततमं दृष्ट्वा सर्वे ते दूरतः स्थिताः ।
अथ शल्यो गदां वीक्ष्य न वृक्षसदृशीमिति ।
नियुद्धमकरोत्तेन बलिना स महाबलः ।

5 K3 om. 5 (cf. v. l. 4). — a) Ñ2.3 V1 B D (except D5) दृष्ट्वा (for क्रुद्धान्). — b) Ñ2.3 V1 B D (except D5) युद्धदुर्मदान्; T1 तानुपस्थितान्; T2 G1-3 M सर्वतः स्थितान्; G6 तांश्च पार्थिवान्. — c) T1 G6 आसेदतुर्; T2 G1-3 विभेदतुर्; M2.3 समीयतुर्. Ñ2 असंप्रीतौ; T1 G6 उभौ पार्थौ.

6 K3 om. 6 (cf. v. l. 4). — a) G (except G1.3) वाचं. K0.3 Da1 Dn1 D2 T G (except G1.3) पुरुषाः. — b) Ñ2.3 V1 B D (except D5) युयुत्सवः (for जिघां°). — After 6ab, Da (which om. 6cd) ins. 1865* (see below). — c) D1 च; D4 T2 G1.2.3 M तु (for हि). — d) G2 स्वयं (for वधो). — K4 Ñ2.3 V1 B D ins. after 6 (Da, after 6ab):

1865* इत्येवमुक्त्वा राजानः सहसा दुद्रुवुर्द्विजान् ।

7 ab) Ñ2.3 V1 B D (except D5) ततः कर्णो महातेजा जिष्णुं प्रतिययौ रणे. — c) N T1 वासिता°. — d) K transp. गजः and गजं.

8 After 8ab, T1 G6 (both of which om. 8cd) ins.:

1866* दुर्योधनो धर्मराजं शकुनिं नकुलो ययौ ।
दुःशासनः सहदेवं देवरूपप्रहारिणम् ।
अगाच्छ्रयतो श्रेष्ठं भस्मच्छन्नमिवानलम् ।
न कश्चिदश्वं न गजं रथं वाप्यारुरोह वै ।
पदातयः सर्व एव प्रत्ययुध्यन्त ते परान् ।
तत्र कर्णोऽगमत्पार्थमर्जुनं गूढचारिणम् ।

— c) K4 Ñ2.3 V1 B D (except D5) T G (T1 G6 om.) सर्वे (for त्वन्ये). — f) T2 G (except G1.6) प्रत्यवि° (cf. 9a).

9 a) Ñ2 V1 B1 Dn शितैः (for त्रिभिः). — c) Ñ2.3 V1 B D G (except G1.3) श्रीमान्. — d) M2.3 आकृ°. Ś1 बलवान्. — After 9, T1 G6 ins.:

1867* बलेन युध्यवच्छिन्नैरवार्यं तमवारयत् ।

10 a) D2.3 ततः (for तेषां). — c) K0.3.4 T G2 M विस्रोढ°; G6 विगाढ°. — d) Ś1 K1.3 Ñ2 अभ्यधावत;

तेषां शराणां वेगेन शितानां तिग्मतेजसाम् ।
विमुह्यमानो राधेयो यत्नात्तमनुधावति ॥ १०
तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ ।
अयुध्येतां सुसंरब्धावन्योन्यविजयैषिणौ ॥ ११
कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे ।
इति शूरार्थवचनैराभाषेतां परस्परम् ॥ १२
ततोऽर्जुनस्य भुजयोर्वीर्यमप्रतिमं भुवि ।
ज्ञात्वा वैकर्तनः कर्णः संरब्धः समयोधयत् ॥ १३
अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा ।
प्रतिहत्य ननादोच्चैः सैन्यास्तमभिपूजयन् ॥ १४

कर्ण उवाच ।

तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे ।
अविषादस्य चैवास्य शस्त्रास्त्रविनयस्य च ॥ १५
किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ॥ १६
आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः ।
विप्ररूपं विधायेदं ततो मां प्रतियुध्यसे ॥ १७
न हि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः ।
पुमान्योधयितुं शक्तः पाण्डवाद्वा किरीटिनः ॥ १

वैशंपायन उवाच ।

तमेवंवादिनं तत्र फल्गुनः प्रत्यभाषत ।
नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान् ।
ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः ॥ १९
ब्राह्मे पौरंदरे चास्त्रे निष्ठितो गुरुशासनात् ।

---

Ko.2.4 M2.5 अनुधावत; D3 अनुयुध्यत.

11 a) T1 G6 M5 सुसंक्रुद्धौ. — d) Ś1 चान्यो°; Ñ3 V1 B1.3 D (except Da D2) °विजिगीषिणौ; G3–5 °जयकांक्षिणौ.

12 b) T1 बाहुवीर्यं बलं च मे. — c) Ñ3 शूरानुवचनैः; T1 वीरौ स्ववच°; T2 G2–5 शूरौ च वच°; G1 शूरौ स्वनैर्भीमैः; M शूरौ स्ववच°. — d) Ko Ñ2.3 V1 B D (except Da) G1.6 M2.5 अभाषे°; G3 बभाषे°; G3–5 आवभाषे.

13 c) Ñ1 G1.2 M दृष्ट्वा (for ज्ञात्वा). — d) Ś1 (m as in text) Ñ3 समयुध्यत.

14 b) M5 शरान् (for बाणान्). Ś1 बलवतस्. B1.3 G6 तथा. — c) Ś1 Ko.3 Ñ1.3 V1 B3 D (except Da D2) प्रतिहन्य; K1 प्रत्यहन्य; S (except T1 G6) प्रतिगृह्य. — d) Ko.3.4 D3 M °स्तदभि°; K1 °स्तप्रति°; K3 तत्सैन्याः समपू°; Ñ1.3 V1 B Da Dn D1.3.4 सैन्यानि तद्(B3 सम)पू°.

15 Ś1 K1 S om. उवाच. — a) Ko D3 विप्रवर्य. — b) G1 M3.5 °वीर्येण. K1 संमुखे. G6 °वीर्यं सुसंयु°. — c) M2.3 °पादेन चानेन. — d) Ñ2.3 V1 B D (except D3) G3.4 °स्त्रविज°; T1 °स्त्रे वि°; T2 शस्त्राणि त्रिणय°; G2 स्थितिस्त्रिणयनस्य; G5 °स्त्रनयनस्य.

16 b) Ś1 रामो विप्रर्षिसत्तम; K4 Ñ3 Da1 °सत्तमः. — c) M5 किं त्वं (for अथ). — d) K1 हरिर् (for विष्णुर्).

17 a) Ś1 K D3 त्वं; M5 वा (for वै). — c) Ñ3 B (except B6) D4 विहाय. N1 G3 M5 एव; Ñ3 एकं; D2.3 इमं; T2 G1.2.4.5 M2.3–5 एवं (for इदं). — d) Ñ3 V1 B6 D (except D2.4.5) मन्ये (for ततो). Ñ2 B (except B6) D2.4 M5 °योत्स्यसे; G1 °विष्यसे..

18 a) D3 प्रहरेत् (for आहवे). — b) Ś1 K साक्षात् (for साक्षात्). — d) M (except M5) पुरार्जुन (for किरीटिनः). — After 18, D2 (marg. sec. m.) T (G6 om. lines 1, 2) ins.:

1868* दग्धा जतुगृहे सर्वे पाण्डवाः सार्जुनास्तदा ।
कस्त्वं यदार्जुनो विप्र पिनाकी स्वयमेव वा ।
अहं कर्णो द्विजश्रेष्ठ सर्वशस्त्रभृतां वरः ।
ब्राह्मे चास्त्रे च वेदे च निष्ठितो गुरुशासनात् ।
त्वामासाद्य महाबाहो बलं मे प्रतिहन्यते ।
इत्युक्त्वा चार्जुनमिदं प्रत्याहन्तुमशुक्रुवन् ।
[ With line 3–4 cf. 19ef, 20ab. ]

19 N (except Dn8) T om. वैशं° उ°; G M om. — a) Ś1 तात; T1 G6 पार्थः (for तत्र). — b) Ś1 फल्गुणः; Ko.3–4 Ñ V1 B D G5 फाल्गुनः; G2.4 पांड — After 19ab, T1 G2.4 in T1 G6 प्रत्यभाषत वीर्यवान्.

1869* न्यस्तहस्तो धनुष्कोट्यां मन्दस्मितमुखाम्बुजः ।

— Before 19cd, T ins. अर्जुनः. — cd) K3–4 Ñ3 D1.4 T2 G2–5 अपि; G2 हि (for अस्मि). M5 मत्परां — After 19cd, T1 G6 ins. किं कर्ण धनुर्वेदो न चास्म्यहं. — After 19cd, T1 G6 ins.

1870* नाहं विष्णुर्न शक्रोऽहं कश्चिदन्यो बलान्वितः ।

— G5 om. 19ef. — e) K3.4 B Da1 श्रेष्ठ. T2 G ( om.) M नापि (G3 साक्षाद्) विष्णुर्न (M5 रामो न) देवः — f) Ś1 K1 सर्वधर्म°; T2 G (G6 om.) M ब्राह्मणोऽस्मि° ( ब्राह्मणोहमरिंदम). — After 19, M (except M5) ins.

1871* योद्धुं चेद्युध्यतां वीर मो चेत्प्रतिनिवर्ततां ।

20 a) G3 M2.3.5 चास्त्रे (for चास्त्रे). T1 G6 ब्राह्मे च वेदे च. — b) K3 Cd विहितो; D4 वि°. — Af